॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२१७

# श्रीस्वामि-विवेकानन्दचरितं

नाम

## महाकाव्यम्

एम० ए०, (त्रितय)-साहित्याचार्यादिविरुदभाजा
वाराणसीस्थवसन्तमहाविद्यालयस्याध्यापकवरेण
भण्डारकरोपाह्वपण्डितश्रीत्र्यम्बकशर्मणा

विरचितम्

स्वोपज्ञ-'विवेकदीप'टीकासहितम्



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७२

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : प्रथम, वि० सं० २०२१
मूल्य : २०-००





प्रधान शाखा
चौखम्बा विद्याभवन
चौक, पो० बा० ६९, वाराणसी-१
फोन : ६३०७६

THE
KASHI SANSKRIT SERIES
217

# ŚRĪSVĀMĪ-VIVEKĀNANDACARITA

An Epic Poem on the Life of SWAMI VIVEKANANDA
With Auto-Commentary

By
Pt. TRYAMBAK A. BHANDARKAR, M. A. ( Tripple )
Sāhityacārya

*Retired Professor of Sanskrit,*
*Vasanta College, Varanasi*



THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1973

## हारबन्धः

( स्रग्धरावृत्तम्, चतुरशीत्यक्षराणि नवपञ्चाशत्स्थानेषु विन्यस्तानि )

कन्दो नः स्यान्नवीनः कुमतिकृतितर्तिं नाशयन् गे यदेय
क्षुत्यन्तभासत्तमथितमतरतश्चित्रकर्माऽकलंकः ।
कर्ता सर्वंसहा स स्वद्युतिमतिरतिं सद्यतिः कीर्तिमूर्तिः
समोयद्भूयविद्यः सततशतनतः क्षोणिवित्तो विवेकः ॥

( विन्यासचित्रं अग्रिमपृष्ठे द्रष्टव्यम् )

मान्यवरभूतपूर्ववाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्ष-

## डॉ० मङ्गलदेवशास्त्रिणामभिप्रायः—

*मान्याः पण्डितवर्याः,*

*प्रणतिपुरःसरं भवतां ग्रन्थानां विषये स्वाभिप्रायोऽधः प्रदर्श्यते—*

*"विद्वद्वरसाहित्याचार्य-श्री टी० ए० भण्डारकरेण प्रणीतं दर्शनकाव्येतिहास-विषयकं ग्रन्थरत्नत्रयं दृष्ट्वात्यन्तप्रसन्नताऽनुभूयते मया।*

*स्वामिविवेकानन्दमहाकाव्यरूपं द्वितीयं ग्रन्थरत्नं सरससरलैर्मञ्जुभिश्च सहृदय-हृदयावर्जकैः पद्यैः सुमधुरकाव्यशैल्या निबद्धं सारासारविवेकनिपुणैः संस्कृतज्ञवि-द्वद्भिरवश्यमभिनन्दनीयं भविष्यतीति मदीयो विश्वासः। भारतराष्ट्रस्य कृते नूतन-संदेशदातृस्वामिविवेकानन्दस्य विचारामृतधाराप्रस्यन्दि काव्यमेतच्छास्त्र्यादिपाठ्य-ग्रन्थे स्थानं लभेतेति मम शुभाशंसनम्।*

*ग्रन्थकारमहोदय उत्तमसाहित्यिकसेवायाः कृते सर्वेषां गीर्वाणवाणीप्रणयिनां हार्दिकधन्यवादानां पात्रम्।*

ईंग्लिशिया लाइन
वाराणसी—२
१७—९—६८

मङ्गलदेवशास्त्री

# प्राक्कथनम्

( १ )

ते धन्याः कवयो मान्याः कालिदासादयः परम्।
भुवि येषां यशोमूर्तिरजरामरतां गता॥

( २ )

जयत्वभिनवा नित्यं दिव्या भारतभारती।
या साहित्यसमुन्नत्यै तेषां साधनतां ययौ॥

( ३ )

सप्तसिन्धूत्थितेयं वाक्स्वयमेव स्वतेजसा।
जगति प्रसृता चित्रं सप्तातिक्रम्य सागरान्॥

( ४ )

पामरास्तु प्रजल्पन्तु संस्कृतेन मृतेन किम्?
मुक्तकण्ठं प्रशंसन्ति प्रतीच्या अपि चेदिमाम्॥

( ५ )

असारतरवैधेयविचारविषपानतः ।
मृतानुज्जीवयन्तीयममृतैवनिरन्तरम् ॥

( ६ )

एतादृशी भारती नः समृद्धेः कारणं ध्रुवम्।
सम्प्रचारप्रसारार्हा नूनं देशविदेशयोः॥

( ७ )

विभाव्येत्थं मयाकारि प्रयत्नोऽयं नवः किल।
यथाजातस्य वालस्य कापि वाक्कौतुकावहा॥

( ८ )

राष्ट्रोदयः सुखादित्यनिर्माणमवलम्बते ।
युवानो येन जायेरन्युक्तमार्गानुसारिणः ॥

( ९ )

साध्यात्मिकी भौतिकी नो भवेद्भूतिरिति स्वयम् ।
विवेकं नायकीकृत्य जातस्तद्गुणगायकः ॥

( १० )

स्वामिनं को न जानीतेऽवतीर्णः केन हेतुना ।
रक्षायां सरसो राष्ट्र-शिक्षादीक्षासमुन्नती ॥

( ११ )

स हि विद्युदिवाम्भोदमुज्ज्वलं क्षणमुन्मिषन् ।
तिमिरान्धमिदं चक्रे भारतं ज्ञानभारतम् ॥

( १२ )

स्वामिनो वचनं पुण्यं स्मरणीयं निरन्तरम् ।
स्वदिव्यत्वप्रकाशार्थं मानवः समजायत ॥

( १३ )

शिक्षा नास्ते विवादाय शोटनस्फोटनाय च्या ।
किं छात्राः कोविदंमन्या मन्यन्तेऽद्यतना यथा ॥

( १४ )

द्वेषभावपरिहारपूर्वकं मित्रतास्तु भुवि भूयसी पुनः ।
युष्मदान्तरिकतेजसोदयो भारतस्य भवतादिने दिने ॥

( १५ )

भ्रातृभावमतिरथ वर्धतां स्पर्धतां जनहिते जनैर्जनः ।
लोकसंग्रहधृतिः प्रवर्ततां वर्ततां नियमपालनेऽखिलः ॥

गणतन्त्र-दिवस
२६ जनवरी, १९७१

भण्डारकरोपाह्वत्र्यम्बकशर्मा

## महाकाव्यस्यास्य पार्श्वभूमिः

एकोनचत्वारिंशद्वर्षेभ्यः पूर्वं (१९२८तमे ईशवीयवर्षे) वाराणसेयसंस्कृतविद्यालयादधिगताचार्यपदवीकाः केचित् होशिंग-वेतालप्रभृतयः कवयः पद्यरचनास्पर्धापरायणाः 'पिक'-विषयमधिकृत्य लघुकाव्यैः स्वस्वप्रतिभां प्रदर्शयामासुः। प्रस्तुतकाव्यलेखकेनापि अन्येषां अमूल्योपहारपिकवचनम् 'पिकगानम्' इत्यादिरचनाभिः सार्धं स्वकीया 'पिकविलापः'-इति चतुर्दशश्लोकात्मिका रचनापि प्रकाशिता आसीत्, तद्यथा—

प्रमोदभरमाभरन्मनसि गोपिकानामिह
स्वभावमधुरस्वनान्वितमिलिन्दवृन्दाकुले ।
सकुन्दकुसुमोरजःसुरभिगन्धवाहे वने
'मुकुन्दमुरलीध्वनिर्हरतु मामकीनं मनः ॥ १ ॥

हरन्ति सन्तः कवयो निरन्तरं नितान्तमन्तःकरणस्य दूषणम् ।
सरस्वती यद्रसनाङ्कणे गुणैश्चिरं विरन्तुं सरसा रसामले ॥ २ ॥

प्रकाममेतत्कविवर्ण्यतां गता प्रसूनसंस्था किल माधवी रुचिः ।
वनप्रियामोदरसप्रसारतो हरत्यहो कस्य न मानसं न सा ॥ ३ ॥

परं पिकानामपि कास्तु दुष्कृतिर्यतोऽद्य वाचंयमतामिताश्चिरम् ।
सवेणुवाद्ये शिखिनृत्तकौशले विहाय तैर्गीतमहो कुतो गतम् ॥ ४ ॥

न कोकिलानां किल कल्मषं क्वचित् कलेरिदं स्यादपकारकं फलम् ।
क्वचित् खलानां स्खलनैरिह व्यथा मुधा बुधैरप्यनुभूयते यतः ॥ ५ ॥

विलोक्य लोके मधुशोभया चेद्रसालसालं परभृत्कुलाकुलम् ।
पलायितेनाद्य पिकेन केनचिद् विलुप्यतेऽस्माकुलितेक्षणं क्षणम् ॥ ६ ॥

कृतं रसालेन रसाप्यसौ न नः ससारतामेति पदार्पणे कथम् ।
यतोऽद्य माने कवयोऽरसा रता गता मृषासत्यविवेकशून्यताम् ॥ ७ ॥

'स्वयं वयं किं न कलस्वराः' पिका इति ब्रुवाणैः परमात्मघोषताम् ।
यदि श्रिता चूतगतैः समानता ननानिता स्याद्विवेकिता कुतः ॥ ८ ॥

अमन्दसारा रसवृन्दवर्णनेऽप्यनीव पात्रं किल भारती रतेः ।
अदर्पता येषु समाश्रिता स्तुतान्यहानि हा ! सत्कविभिर्गतानि तैः ॥ ९ ॥

ह्यमूल्यकाव्योडुवशादिदं जगत्तमोविमोहावृतमुज्ज्वलं यदि ।
अलं सुधासारयुतामितप्रभालसन्महाकाव्यविधूदयाशया ॥ १० ॥

कृतं कृतं कोकिलकूजितैर्जितं जितं धृतालापचलैर्वलिद्विजैः ।
तलेऽखिलेऽप्यत्र खिलीकृते खलैः सतां सतामर्हणया द्रुतं द्रुतम् ॥ ११ ॥

विरच्य वाग्जालमनल्पजल्पनं कयापि शास्त्यान्तरया स्यादपि ।
पदार्थबोधेऽप्यचला विलोपयतां प्रयान्ति सन्तः कविनामवाच्यताम् ॥ १२ ॥

यान् कीर्तिरेत्य कवितासु कृतानुरागान्
याता दिगन्तमनुमानकृपायितेव ।
स्याद्भूषितं किमु समुज्ज्वलबोधसान्द्रै-
स्तैर्हन्त ! भूतलमिदं न पुनः कवीन्द्रैः ॥ १३ ॥

इत्थं पिको बहु विलप्य विलुप्ततेजाः
कालक्रमात्कविरुदेष्यति कोऽपि विद्वान् ।
सत्पक्षपातनिरतः किमिति प्रतीक्षा
दक्षो मुधा धृतमुनिव्रतमारमास्ते ॥ १४ ॥

तस्मिन् समये महाकाव्यरचनाकल्पना केवलं बीजरूपेणैव स्थितासीत् । अध्यापनकार्यव्यापृततया समयस्यावकाशिकाभावात् नाजनि बीजाङ्कुरोत्पत्तिः । 'कीदृशं कथावस्तु भारतीययूनामुपकारकं स्यात्' अयमपि प्रश्नः आसीदेव । स्वामिविवेकानन्दजन्मशताब्दीमहोत्सवेन तद्बीजमङ्कुरोद्भवयोग्यमजायत साकारा च सा कल्पनेदानीं जाता इति सामोदं मनः काव्यारम्भदिनम् २९-५-६६ गङ्गादशहरा समाप्तिश्च १५-८-१९६७ स्वतन्त्रतादिवसः ।

१५-८-१९६७

भण्डारकरोपाह्वत्र्यम्बकशर्मा

# अनुक्रमणिका


| पृष्ठाङ्काः | | | | | |
|---|---|---|---|---|---|
| १. | संकल्पविकल्पो नाम | प्रथमः सर्गः | 'श्री' | श्लोकसंख्या | १–५२ |
| १५. | संगमो नाम | द्वितीयः सर्गः | 'स्वा' | ,, | १–५३ |
| ३१. | दीक्षाप्राप्तिः नाम | तृतीयः सर्गः | 'मि' | ,, | १–७७ |
| ४७. | पूर्णताला‌भः नाम | चतुर्थः सर्गः | 'वि' | ,, | १–५४ |
| ५९. | लक्ष्यनिश्चयः नाम | पञ्चमः सर्गः | 'वे' | ,, | १–५९ |
| ७२. | श्रीगुरुप्रयाणं नाम | षष्ठः सर्गः | 'का' | ,, | १–५४ |
| ८४. | हिमाचलदर्शनं नाम | सप्तमः सर्गः | 'नं' | ,, | १–७७ |
| ९७. | भारतभ्रमणं नाम | अष्टमः सर्गः | 'द' | ,, | १–८० |
| ११६. | शिकागोगमनं नाम | नवमः सर्गः | 'च' | ,, | १–५२ |
| १२६. | अमेरिकावक्तृता नाम ( धर्मसभा ) | दशमः सर्गः | 'रि' | ,, | १–५८ |
| १४०. | धर्मसभानन्तरम् नाम | एकादशः सर्गः | 'तं' | ,, | १–८५ |
| १५४. | इंग्लन्ड्-अमेरिकाभ्र० नाम | द्वादशः सर्गः | 'ना' | ,, | १–७१ |
| १६७. | यूरोपभ्रमणं नाम | त्रयोदशः सर्गः | 'म' | ,, | १–५६ |
| १७८. | भारतागमनं नाम | चतुर्दशः सर्गः | 'क' | ,, | १–५८ |
| १९१. | रामकृष्णाश्रमस्था० नाम | पञ्चदशः सर्गः | 'म' | ,, | १–६० |
| २०१. | उपदेशात्मको नाम | षोडशः सर्गः | 'हा' | ,, | १–५६ |
| २१४. | पुनर्भ्रमणं नाम | सप्तदशः सर्गः | 'का' | ,, | १–६० |
| २२५. | निर्वाणं नाम | अष्टादशः सर्गः | 'व्यं' | ,, | १–६० |
| | | | | | ११२२ |

# श्रीस्वामि-विवेकानन्दचरितनामकं महाकाव्यम्

## प्रथमः सर्गः

श्रीरामकृष्ण-युगमुज्ज्वलमेकसंस्थं
जातं जनेष्वजनि विश्वजनीनमुच्चैः ।
वन्दे तमन्धतमसावृतजीववृन्दे
प्रज्वालितो जगति येन विवेकदीपः ॥ १ ॥

सारवान्विधिसिद्धिशारदाशारदाब्जनिभसद्यशारदा ।
सा रदाद्रिविशदास्य शारदा शारदानवतु नोऽत्र शारदा ॥
सशक्तिकं, जगत्पूज्यं, वेदमूर्तिं युगेश्वरम् ।
अवतारवरिष्ठं श्रीरामकृष्णं नतोऽस्म्यहम् ॥

अथ कविः 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति वचनमनुसृत्य युगावतारश्रीरामकृष्णपरमहंसं युगाचार्यस्वामिविवेकानन्दपरमगुरुं प्रणिपत्य श्रीस्वामिविवेकानन्दचरितनाम्नि अस्मिन्नभिनवमहाकाव्यग्रन्थे मङ्गलमातनोति श्रीरामकृष्णेति । अस्मिन्नष्टादशसर्गात्मके महाकाव्ये सर्गाणामादिमाक्षरैः 'श्रीस्वामिविवेकानन्दचरितनामकमहाकाव्य'मिति महाकाव्यशीर्षकं सम्पद्यते । अत्रान्या अपि विशेषतास्तत्तत्सर्गारम्भे निर्दिश्यन्ते । श्लोकाश्च प्रायः दण्डान्वयपरिपाट्या व्याख्यास्यन्ते ।

उज्ज्वलम् अवदानैः अधर्मनाशसाधुसंरक्षणरूपैः प्रकाशमानं श्रीरामकृष्णयुगं लक्ष्मीसहितं दाशरथिरामयदुवंशप्रधानयो रामकृष्णयोः युगं युगलं वस्तुतः अजनि जन्मरहितं सदपि उच्चैः अतिशयेन विश्वजनीनं विश्वस्मै जनाय हितं सर्वलोकोपकारकमित्यर्थः, जनेषु लोकेषु जातम् अवतीर्णम्, जनेः कर्त्रर्थे क्तः । येन युगावतारस्वरूपेण रामकृष्णेन अन्धतमसा अज्ञानान्धकारेण आवृतजीववृन्दे परिच्छिन्नलोककदम्बकमध्ये जगति विश्वे विवेकदीपः विवेकानन्दनामकः आनन्दालोकप्रदायकः प्रदीपः प्रज्वालितः प्रद्योतितः लोकानामज्ञानान्धकारनिरसनपूर्वकं ज्ञानप्रकाशप्रदानार्थमित्यर्थः तं श्रीरामकृष्णदेवं वन्दे प्रणमामि । अत्रानुप्रासः रूपकं चालंकारः । वृत्तं च वसन्ततिलकम् ॥ १ ॥

द्वैतप्रहारशतजर्जरिते जने यः
सन्देशमौपनिषदं विशदीविधातुम् ।
दृष्टोऽद्भुतस्वचरितश्चिरशान्तिदूतोऽ-
प्येकोऽनिशं विजयते स यतिर्विवेकः ॥ २ ॥

द्वैतप्रहारेति । यः विवेकानन्दः द्वैतस्य धार्मिकादिकलहस्य ये प्रहारा आघाताः तैः जर्जरिते दुर्बलीकृते जनेऽस्मिल्लोके औपनिषदम् उपनिषद्भ्यः आगतं 'तत आगतः'

इत्यस्मिन्नर्थे अण् प्रत्ययः उपनिषत्सम्बन्धिनं सन्देशम् उपदेशं विवादीनिधातुं स्पष्टीकर्तुम् अद्भुतस्वचरितः अद्भुतम् आश्चर्यजनकम् अलौकिकमित्यर्थः स्वस्य आत्मनः चरितं जीवनवृत्तात्मकं यस्य तादृशः चिरशान्तिदूतः शाश्वतशान्तिप्रस्थापको धर्मोद्धारक इव दृष्टः अवतीर्णः अवलोकितः स एकः साम्यरहितः विवेकः यतिः स्वामी विवेकानन्दः अनिशं निरन्तरं विजयते सर्वोत्कर्षेण वर्तते। इत्थं कविः महाकाव्यनायकरूपं श्रीविवेकानन्दस्वामिनं प्रणिपत्य मङ्गलान्तरं निर्दिशति। अत्रानुष्टुप् वृत्तं पूर्वोक्तमेव ॥ २ ॥

ज्ञानज्योतिर्निर्दलितध्वान्तजालं सानन्दाङ्कं श्रीविवेकाख्यदीपम् ।
सत्कुर्वन्तं लोकमालोकपूर्णं सीमातीतस्नेहसारं नतोऽस्मि ॥ ३ ॥

ज्ञानज्योतिरिति। ज्ञानज्योतिषा सत्प्रकाशेन नाशितम् अपसारितं ध्वान्तजालम्, अज्ञानतिमिरसमूहः येन एतादृशम् आनन्दाङ्कं 'विवेकानन्द' इति नाम्नि आनन्दपदेन ज्ञाता, अनेन कज्जलेन परिशोभितं लोकं सम्पूर्णसंसारम् आलोकपूर्णं ज्ञानप्रकाशपरिपूर्णं सत्कुर्वन्तं सत्कारयुक्तं कुर्वन्तं विदधतं विभूषितं कुर्वन्तमित्यर्थः, सीमातीतः अतिक्रान्तमर्यादः स्नेहसारः प्राणिषु सत्तमप्रेमभावना यस्य अथ च निरन्तरतैलपूरणं यस्य तादृशं श्रीविवेकानन्ददीपं लोकं ज्ञानप्रकाशयुक्तं कर्तुं प्रदीप इव स्थितं श्रीविवेकानन्दस्वामिनम् अथ च नित्यानित्यवस्तुविवेकस्वरूपं दीपं प्रदीपं नतोऽस्मि प्रणमामि। अत्र मालिनी वृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात्। रूपकश्लेषयोः सङ्करश्च ॥ ३ ॥

संसारपरिस्थितिरेव महात्मनामागमने कारणं भवतीत्याह—

लोकस्थितिर्नियतमत्र सदुद्भवार्थं हेतुत्वमेति, भगवान् सुगतोऽवतीर्णः ।
नानामतैरतितरां कलहप्रसक्ते निर्वाणमार्गमुपदेष्टुमना जनानाम् ॥४॥

लोकस्थितिरिति। अस्मिँल्लोके नियतं निश्चयेन सः सा विभूतिमतां महात्मनाम् उद्भवार्थमुत्पत्त्यर्थमाविर्भावार्थमित्यर्थः हेतुत्वं कारणत्वमेति प्राप्नोति अत्रोदाहरणमाह—नानामतैर्विविधमतमतान्तरैः अतितराम् अतिशयेन कलहप्रसक्ते धर्मक्षेत्रविषये विवादोत्पत्तिसमये जनानां लोकानां निर्वाणमार्गं मोक्षपथम् उपदेष्टुं शिक्षितुं मनः अभिलाषो यस्य तादृशः भगवान् सुगतः बुद्धः अवतीर्णः लोकोपदेशार्थं भूतलमागतः। एवं लोकस्थित्यनुसारं महात्मानः अज्ञाननिरसनपूर्वकं ज्ञानोपदेशार्थं भूतलमवतरन्ति इति भावः। अत्र वसन्ततिलकं वृत्तम् अर्थान्तरन्यासोऽलङ्कारश्च ॥ ४ ॥

विश्वेशादत्तवरतः किल विश्वनाथदत्तोऽभवत्सुकृतवान् भुवनेश्वरी च ।
दिव्यर्षिमण्डलगतः क्षितिमण्डलस्य स्वं मण्डनं मुनिवरः कुरुते स्म कोऽपि ॥

विश्वेशेत्यादि। विश्वेशेन वीरेश्वरापरनामधेयेन काशीविश्वनाथेन दत्तवरतः प्रतिपादितवरदानेन किलेत्यैतिह्ये, विश्वनाथदत्तः दत्तकुलोत्पन्नः विश्वनाथनामा विवेकानन्दजनकः भुवनेश्वरी च तज्जननी उभावपि सुकृतवन्तौ भाग्यवन्तौ अभूताम्। अत्र अभवत् इति क्रिया श्रीविश्वनाथदत्तेन मात्रा भुवनेश्वर्या च पृथक् सम्बध्यते। कोऽपि अलौकिकः दिव्यर्षीणां स्वर्गीयऋषीणां मण्डले समूहे गतः विद्यमानः मुनिवरः ऋषिप्रवरः स्वम् आत्मानं क्षितिमण्डलस्य भूमण्डलस्य मण्डनम् अलङ्काररूपं कुरुते स्म कृतवान्। 'स खलु लोककल्याणार्थं स्वर्गीयऋषिमण्डलाद्भुमाववतीर्णः' इति भगवता रामकृष्णेनोक्तमासीत्। वसन्ततिलकं वृत्तम्। अनुप्रासश्चालङ्कारः ॥ ५ ॥

निजेष्टसेवापरयानिशं निशि क्वचिज्जनन्या ददृशेऽङ्कमङ्कितम् ।
शिशोर्विधायाकृतिमिन्दुमौलिना तवात्मजोऽहं ब्रुवता वताशिषम् ॥ ६ ॥

निजेष्टसेवेत्यादि। माता भुवनेश्वरी स्वप्ने पुत्ररूपेणावतरिष्यतः शंकरस्य दर्शनं कृतवती। इन्दुश्चन्द्रमा मौलौ उत्तमाङ्गे यस्य तेन इन्दुमौलिना शंकरेण भगवता, अनिशं निरन्तरं निजस्य आत्मनः श्रीशंकरस्येत्यर्थः सेवा एव परं कार्यं यस्या एतादृश्या जनन्या मात्रा भुवनेश्वर्या कचित् कस्यांचित् निशि रात्रौ शिशोः बालकस्याकृतिं रूपं विधाय तेन अंकितं विभूषितम् अङ्कम् उत्संगं ददृशे दृष्टम्। कीदृशेन शिवेन इत्याह अहं शंकरः तव भुवनेश्वर्याः पुत्रः इति आशिषम् आशीर्वादं ब्रुवता। कदाचित् स्वप्ने भुवनेश्वरी बालकरूपेण शिवेनालंकृताङ्कामात्मानं दृष्टवती। अत्र वंशस्थं नाम वृत्तम्, 'जतौ [illegible] वंशस्थमुदीरितं जरौ' इति तल्लक्षणात्। अनुप्रासश्चालंकारः ॥ ६ ॥

श्रद्धान्विते दत्तकुले प्रसूतः सुतो नरेन्द्रः स्मरणीयकर्मा ।
रत्नाकराच्छान्तजलादुदीर्णं रत्नं यथा स्यात्कमनीयकान्ति ॥ ७ ॥

श्रद्धान्वित इति। श्रद्धया आस्तिक्यबुद्ध्या अन्विते युक्ते दत्तकुले श्रीविश्वनाथ-भुवनेश्वरी गृहे स्मरणीयकर्मा, स्मरणीयानि स्मृतियोग्यानि कर्माणि नववेदान्तधर्म-स्थापनादीनि यस्यैतादृशः नरेन्द्रनामकः सुतः आत्मजः प्रसूतः उत्पन्नः। सर्वत्र बीजानुरूपैवोङ्कुरोत्पत्तिः भवतीति भावः। अत्र दृष्टान्तमाह—शान्तजलात् झंझावाता-द्यन्तरायरहितत्वाच्छान्तं जलं यस्यैतादृशाद्रत्नाकरादर्णवात् उदीर्णमुत्पन्नं रत्नं मण्या-दिकं यथा कमनीया लोभनीया कान्तिः प्रकाशः सौन्दर्यमिति यावत् यस्यैतादृशं विद्यते। समुद्रमन्थनसमये शान्तजलादेव समुद्राच्चतुर्दशरत्नानामाविर्भावोऽभूत्। अत्रोपमानुप्रासश्चालंकारौ। उपजातिनामकं वृत्तम् ॥ ७ ॥

असावसीमप्रतिभाप्रभावात् को वेद कर्ताऽद्भुतमल्पकाले ।
बालोऽप्यनल्पात्मबलो नराणां महत्त्वसौहार्दसमत्वसख्यैः ॥ ८ ॥

असावसीमेति। असौ बालः अपि बालकावस्थोऽपि अनल्पम् अत्यधिकम् आत्मबलम् आध्यात्मिकी शक्तिर्यस्यैतादृशः अल्पकाले ऊनचत्वारिंशद्वर्षाभ्यन्तरमेव असीम्नः मर्यादातीतात् प्रतिभायाः नवनवोन्मेषशालिबुद्धेः प्रभावात् सामर्थ्यात्। नराणां मनुष्य-जातौ विद्यमानैः महत्त्वं गौरवं, सौहार्दं मैत्री तथा समत्वं साम्यभावः इति तत्त्वैः तथ्यैः, अद्भुतम् आश्चर्यकरं कार्यं कर्ता करिष्यति इति को वेद जानाति स्म। तेन मनुष्या आध्यात्मिकदृष्ट्या महत्त्वपूर्णाः तेषु परस्परं मित्रता समानता च भवतः एतदर्थं भगीरथ-प्रयत्नाः कृताः तदपि अल्पकाले इत्यलौकिकत्वमस्य जीवनस्य स्वामिना 'अहं चत्वारिंश-द्वर्षेभ्योऽधिकं न जीविष्यामि' इति भविष्यवाणी कृतासीत्। अतः परस्मिन्सर्गे उपजाति-वृत्तमेव ॥ ८ ॥

व्यलोकि बालोऽपि बिले दयालुः कुशाग्रधीर्निर्भयमानसश्च ।
स्थाने नरेन्द्रः सवयोभिरन्यैर्गणस्य नेतृत्वपदेऽभ्यषेचि ॥ ९ ॥

व्यलोकि इति। बालोऽपि बालकावस्थोऽपि 'बिले' नरेन्द्रः जन्मनः पूर्वं काशीस्थित-वीरेश्वरप्रसादतः पुत्रस्य लाभात् पितृभ्यां बालकस्य 'वीरेश्वर' इत्येव नाम कृतम्। तस्यैव नाम्नः 'बिले' इति संक्षेपः। दयालुः अनुकम्पापूर्णान्तःकरणः, निर्भयं भय-

शून्यमानसं यस्य, कुशाग्रा अतितीक्ष्णा बुद्धिश्च यस्य एतादृशः स्थलेऽपि अवलोकित विपूर्वाल्लुग्धातोः कर्मणि लुङ्। अत एव नरेन्द्रं विश्वनाथात्मजं अन्ये अपरे सवयोभिः समानवयस्कैः बालकैः गणस्य अपेक्षया बालकानां समूहस्य नेतृत्वपदे नायकस्थाने स्थाने युक्तमेव अभ्यषिञ्चन् अभिषिक्त-। अभिपूर्वात् षिचधातोः कर्मणि लुङ्। सर्वेऽपि बालकाः तमेव नेतारं मेनिरे इति भावः। अनुप्रासः अर्थान्तरन्यासश्चालङ्कारौ। 'स्थाने' इति विभक्तिप्रतिरूपकमव्ययम् ॥ ९ ॥

कदापि मित्रैः सह वेश्मपार्श्वे महेश्वरध्यानपरे नरेन्द्रे।
कुतोऽप्यकस्मादसितः पृदाकुस्तत्राविरासीत्कुटिलं प्रसर्पन् ॥ १० ॥

कदापीति। कदापि कस्मिंश्चित्समये नरेन्द्रे स्वमित्रैः सह सवयोभिः सार्धं वेश्मनः गृहस्य पार्श्वभागे महेश्वरस्य शिवस्य ध्यानं चिन्तनमेव परं श्रेष्ठं कार्यं यस्यैतादृशे सति शिवध्यानमग्ने सति कुतोऽपि अज्ञातस्थानात् अकस्मात् सहसा असितः कृष्णवर्णः पृदाकुः सर्पः 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः कुटिलं वक्रगत्या प्रसर्पन् गच्छन् तत्र ध्यानस्थाने आविरासीत् प्रकटीबभूव ॥ १० ॥

नरेन्द्रस्य निर्भयतां ध्यानमग्नतां च दर्शयति—

भयाकुले बालकुले बिलेशयाद्वित्रस्तेन स्वस्वगृहं द्रुतं द्रुते।
चलः स नैकान्तमना मनागभूद् 'बिले' समीराहतभूधरो यथा ॥ ११ ॥

भयाकुले इति। बालानां नरेन्द्रेण सह ध्यानमग्नानां सवयसां कुले समूहे बिलेशयात् सर्पात् 'बिल' भूम्यधोभागच्छिद्रे शेते इति बिलेशयः अलुक्समासः। भयेन भीत्या व्याकुले सन्त्रस्ते वित्रस्तेन सर्वदिक्षु स्वस्वगृहं निजनिजागारं प्रति द्रुतं सत्वरं द्रुते पलायिते सति। स प्रसिद्धः बिले बालश्रेष्ठः नरेन्द्र इत्यर्थः एकान्तम् अत्यन्तम् शिवध्याने इत्यर्थः मनः अन्तःकरणं यस्य एतादृशः मनागपि ईषदपि चलः चञ्चलमानसः समीरेण प्रबलवातेन आहतः प्रताडितः भूधरः पर्वत इव न अभूत्। अत्र स्वभावोक्तिः अनुप्रासः उपमा चालङ्काराः। अस्मिन् विषये श्रीरामकृष्णदेवेनाप्युक्तमासीत् यत् 'अयं ध्यानसिद्धः महापुरुषः' इति ॥ ११ ॥

अकिञ्चनं वीक्ष्य पथि भ्रमन्तं गृहीतवान् किञ्चन हस्तगं यत्।
वातायनाल्लम्बितमम्बरं स प्रायच्छदस्मै 'शिवमस्तु' शृण्वन् ॥ १२ ॥

अकिञ्चनमिति। स नरेन्द्रः कदाचित् पथि मार्गे भ्रमन्तं भिक्षार्थमितस्ततो गच्छन्तम् अकिञ्चनं दरिद्रं वीक्ष्यावलोक्य यत् किञ्चन किमपि वस्त्रादिकं हस्तगं करप्राप्य गृहीतवान् करगतमकरोत्। तथा वातायनात् गवाक्षात् लम्बितमधोलम्बमानम् अम्बरं वस्त्रम् अस्मै भिक्षुकाय 'तुभ्यं ते शुभं कल्याणमस्तु' इत्याकारकमाशीर्वादं शृण्वन् प्रायच्छत् दत्तवान्। अस्मिन् विषये स्वामिनोक्तमासीत् 'मातृदेवो भव पितृदेवो भव' इत्यादिवचनैः सार्धं 'दरिद्रदेवो भव' इत्यपि वक्तव्यमिति। तथैव 'अहं दरिद्रमवतारमेव जानामि' इत्यपि तस्योक्तिः। अनुप्रासालङ्कारः ॥ १२ ॥

अपीपिडच्चित्रकरीभिरात्मप्रसूं मुहुः प्रश्नपरम्पराभिः।
श्रुत्वा न तर्काननुयोगयोग्यान्वस्तून्यसौ वेश्मगतान्यमंक्षीत् ॥ १३ ॥

अपीपिडदिति। आत्मनः स्वस्य प्रसूं मातरम्। चित्रकरीभिः आश्चर्यहेतुभिः अद्भुताभिरित्यर्थः प्रश्नानामनुयोगानां परम्पराभिः समूहैः अपीपिडत् पीडयामास योग्यान् युक्तान्

तर्कान् अनुमानादिसमाधानवाक्यानि न श्रुत्वा असौ नरेन्द्रः वेश्मगतानि गृहे विद्यमानानि वस्तूनि क्रीडनासनादिकानि अभांक्षीत् त्रोटयामास। अत्र सक्रोधस्य बालस्य स्वभाववर्णनात् स्वभावोक्तिरलंकारः॥ १३॥

जातिः कथं नश्यति पश्यतां नः संपर्कतो हीनजनेन सार्धम्।
स्वर्णं तु सर्वत्र सुवर्णमेवं वयं किमुच्चा अपरे च नीचाः॥ १४॥

जातिरिति। नः अस्माकं पश्यताम् अवलोकयताम् अनादरे षष्ठी जातिः मनुष्याणां ब्राह्मणशूद्रादिजातिः हीनजनेन नीचजातिनरेण सह संपर्कतः संबन्धात्। अत्र जातिशब्दः न धर्मविषये प्रयुक्तः अपितु त्रिविधराष्ट्रगतत्वमभिप्रेयते। यथा शार्मण्यजातिः हिन्दुजातिः इत्यादि कथं केन प्रकारेण नश्यति विनाशं प्राप्नोति स्वर्णं कनकं सर्वत्र सर्वस्थानेषु सुवर्णमेव सुवर्णत्वेनैव तिष्ठति सुवर्णं कदापि अन्यधातुसंसर्गेण ताम्र-कांस्यादिकं न सम्पद्यते तथा च समाजे वयम् अमुकवंशोत्पन्ना उच्चाः सम्मानार्हाः अपरे च अन्यवंशोद्भवा नीचा अपमानार्हा इति कथमवलोक्यते। मनुष्यस्वरूपेण तु सर्वेऽपि समाना एव केवलमन्येषां संपर्केण कोऽपि उच्चः नीचः वा न भवितुमर्हति अस्मिन्विषये स्वामिनापि उक्तमासीत् 'आधुनिकहिन्दुधर्मस्तु केवलं स्पृश्यास्पृश्यमार्गे एव जागर्ति' इति। अत्रानुप्रासः॥ १४॥

हा हा सपर्या विहिता सुतार्थं भवेन भूतः प्रहितोऽहितोऽयम्।
इतीरयन्ती शिवमन्त्रपूतां शीर्षेऽस्य सा पातयदम्बुधाराम्॥ १५॥

हा हे ति। तस्य जननी भुवनेश्वरी स्वपुत्रस्यैतादृशं स्वभावमवलोक्याह—मया सुतार्थं पुत्रप्राप्त्यर्थं सपर्या शिवस्य पूजा विहिता परम् हा! हा! इति खेदे तेन भवेन बीरेश्वरेणेत्यर्थः अयमित्यङ्गुल्या निर्देशः भूतः शिवानुचरेषु मध्ये कश्चिदेकः अहितः समारिस्वरूपः अकल्याणकारीत्यर्थः प्रहितः प्रेषितः सर्वथा मम प्रार्थनानुरूपं न सम्पन्नम्। इति इत्थमीरयन्ती वदन्ती भुवनेश्वरी शिवमन्त्रपूतां शिवस्य नामोच्चार-पूर्वकं पूतां पवित्राम् अम्बुनः जलस्य धारां जलपात्रनिःसृताम् अस्य नरेन्द्रस्य शीर्षे मस्तके अपातयत् पातितवती शिव-शिवेत्युक्त्वा तेन पूतं जलं तस्य शिरसि सिक्तवतीत्यर्थः। नरेन्द्रः शिवांशसम्भवः इति द्योत्यते॥ १५॥

श्रद्धालुरासीज्जननी तदीया धर्मप्रियादर्शवधूर्विशुद्धा।
अजीजनत्सूनुमतो नरेन्द्रं बीजानुरूपो भुवमङ्कुरोऽपि॥ १६॥

तदीयेति। तदीया तस्य इयं तस्य नरेन्द्रस्य जननी भुवनेश्वरी श्रद्धालुरास्तिक-स्वभावा, धर्मप्रिया धर्मः वर्णाश्रमधर्मः प्रियः यस्याः अतिधार्मिकस्वभावा आदर्शवधूः अपरैरादरणीया पूजनयोग्येत्यर्थः वधूः पत्नी, विशुद्धा निर्मलान्तःकरणा आसीत् अभूत्। अतः अस्मात्कारणात् एव सा नरेन्द्रं एतन्नामकं सूनुम् आत्मजम् अजीजनत् प्रासूत। अत्रार्थान्तरन्यासेनाह—ध्रुवम् निश्चयेन अंकुरः अभिनवोद्भित् बीजानुरूपः बीजस्य वटधानादि स्वरूपस्य अनुरूपः अनुकूलः। 'यथा बीजं तथाङ्कुरः' इति भावः अत्र स्वामि-नाप्युक्तमासीत् 'स्त्रीज्ञानविकासायाहं स्वमातुरधमर्णः' 'येन स्वमातुः पूजा याथार्थ्येन नानुष्ठिता स कदापि महान्भवितुं नार्हः'। 'मातृदेवो भव' इति उपनिषदामप्युपदेशः ज्ञानार्जनविषयेऽहं जनन्यातीवोपकृतः। येन स्वमातुरादरो न विहितः न स महान्भवि-तुमर्हति॥ १६॥

प्रतिगृहं पूजनमाञ्जनेयवीरस्य तस्याभिमतं तदासीत् ।
स्वतन्त्रतावीर्यपराक्रमाणां प्रतीकरूपः स हि दिव्यतेजाः ॥ १७ ॥

प्रतिगृहमिति । गृहे गृहे इति प्रतिगृहं सर्वत्रेत्यर्थः आञ्जनेयवीरस्य अञ्जनायाः अपत्यं पुमानाञ्जनेयः हनूमान् स चासौ वीरश्च इति वीरहनूमतः पूजनम् अपचितिः तदा तस्मिन्समये यस्मिन्समये हिन्दुराष्ट्रं परतन्त्रं निर्बलं च जातम् तस्य नरेन्द्रस्य अभिमतम् इष्टमासीत् । बलप्राप्त्यर्थं हनूमान्सर्वत्र पूजनीय इति भावः । हि यस्मात् कारणात् स आञ्जनेयः दिव्यम् अलौकिकं तेजः यस्यैतादृशः स्वतन्त्रतायाः स्वातन्त्र्यस्य वीर्यस्य बलस्य पराक्रमस्य शूरतायाश्च प्रतीकरूपः चिह्नस्वरूप आसीत् । अत्र काव्यलिङ्गालङ्कारः ॥ १७ ॥

को नाम कुर्यान्न बुधो मुधैव प्रवृत्तिरस्यांग्लगिरामधीतौ ।
तिरश्चकारेत्थमसौ प्रतीचीं विद्यां परं धातुरभीष्टमन्यत् ॥ १८ ॥

शिक्षादीक्षायाः पूर्वं तस्यांग्लभाषाध्ययनं नाभिमतमित्याह को नामेति । को नाम बुधः विचारशीलः पुरुषः मुधैव निष्प्रयोजनमेव आंग्लगिराम् आंग्लसाहित्यादिकस्य अधीतौ अध्ययने प्रवृत्तिं अभिलाषं कुर्वीत विदधीत । इत्थमनेन प्रकारेण प्रतीचीं पाश्चात्यां विद्याम् आंग्लभाषामित्यर्थः तिरश्चकार तिरस्कृतवान् कदापि नाध्येष्यामीति निश्चिकायेत्यर्थः । परं धातुः ईश्वरस्य अभीष्टं वाञ्छितमन्यदेवासीत् । आंग्लभाषाध्ययनेनैव तेन गुर्वाज्ञानुसारं जगति महत्कार्यं विहितमिति जगद्विदितम् ॥ १८ ॥

नरेन्द्रदत्तः क्रमशस्तदानीतनोच्चशिक्षाध्ययनप्रवृत्तः ।
नानाविधैस्तर्कवितर्कजालैरतीवपर्याकुलमानसोऽभूत् ॥ १९ ॥

नरेन्द्रदत्त इति । नरेन्द्रदत्तः भावी विवेकानन्दः तदानीतन्याः तत्कालप्रचलितायाः उच्चशिक्षायाः इतिहासदर्शनादिविषयाणामध्ययने प्रवृत्तः । आंग्लभाषाध्ययनमारब्धवान् । अत्रापि तस्य जननी एव कारणीभूता । आरम्भे तयैव किल तस्यांग्लभाषाप्रवेशः कारित आसीत् । अध्ययनप्रवृत्त्यनन्तरं नानाविधैरनेकप्रकारैः तर्कवितर्काणाम् अनुकूलप्रतिकूलानुमानादीनां जालैः संघातैः स नरेन्द्रः अतीव अत्यधिकं पर्याकुलं व्याकुलं संदेहपूर्णं मानसं मनः यस्य एतादृश आसीत् ॥ १९ ॥

एकान्तसेवान्तरसस्य तस्य स्वतन्त्रबुद्धेः स्थिरचित्तवृत्तेः ।
ज्ञानस्य लिप्सा वयसैव सार्धं वृद्धिं गता शुद्धविचारशक्तेः ॥ २० ॥

एकान्तमिति । एकान्तम् अत्यन्तं यथा तथा एकान्ते निर्बाधस्थाने रसः निवासाभिलाषो यस्य, स्वतन्त्रा अपरतन्त्रा बुद्धिर्यस्य, स्थिरा चाञ्चल्यरहिता चित्तवृत्तयः मानसिकव्यापारा यस्य, शुद्धविचारशक्तेः शुद्धा निर्मला विचारशक्तिः विचारबलं यस्यैतादृशस्य तस्य नरेन्द्रस्य ज्ञानस्य लिप्सा वयसा सार्धमेव वृद्धिं गता ववृधे । सहोक्तिरलङ्कारः ॥२०॥

निमीलिताक्षस्य विकल्पशून्यं श्रद्धा न कस्यापि वचस्सु तस्य ।
समर्थनं प्राप्य तदुक्तियुक्तं तेनापि विश्वासजुषा बभूवे ॥ २१ ॥

निमीलिताक्षस्येति । तस्य नरेन्द्रस्य कस्यापि व्यक्तेः विदुषः वचस्सु वचनेषु निमीलिते संमीलिते अक्षिणी नेत्रे यस्य अन्धश्रद्धस्येत्यर्थः । विकल्पं संदेहकल्पनाभि

रहितं श्रद्धा विश्वासः न अभूत् शंकासमाधानादिभिर्विना कस्यापि वचने न तस्यान्धश्रद्धा बभूवेति भावः। तदुक्तेः अन्यविदुषः याः उक्तयः वचनानि तासां युक्तं योग्यं समर्थनं संदेहनिरसनात्मकं प्राप्य तेनापि नरेन्द्रेणापि, विश्वासं श्रद्धां जुषते करोति इति विश्वासजुट् एतादृशेन बभूवे जातम्। भूधातोः कर्मणि लिट्। स्वस्य गुरौ श्रीरामकृष्ण-परमहंसेऽपि प्रथमं तस्य मानसं संदेहपूर्णमेवासीत्। परंतु प्रत्यक्षानुभवानन्तरं स तस्मिन्पूर्णतया सविश्वासो बभूव ॥ २१ ॥

आभ्यन्तरे वा किमु बाह्यसृष्टेर्वर्क्लेमताः स्युर्मतयो यथार्थाः।
आहोस्विदीशान्तरयोर्विचित्रं ह्यूमोक्तनास्तित्वमतं प्रमाणम् ॥ २२ ॥

आभ्यन्तर इति। बाह्यसृष्टेः पाञ्चभौतिकस्य इन्द्रियग्राह्यसंसारस्याभ्यन्तरे अन्तर्भागे वर्क्लेमताः एतन्नामकांग्लादार्शनिकस्य मतानुसारं मतयः विचारपरम्परात्मक-चित्तवृत्तयः यथार्थाः सत्याः स्युः। वर्क्लेमतानुसारं बाह्यसृष्टेः पूर्णतया अभाव एव। यत्किञ्चिद्विद्यते चेत्तत् केवलं चित्तवृत्ति-( Idea )-स्वरूपमेव। आहोस्वित् अथवा ईशान्तरयोः परमात्ममनसोर्विषये विचित्रम् अद्भुतं ह्यूमेन एतन्नामकापरांग्लदार्शनिकेन उक्तं प्रतिपादितं नास्तिकमतं 'नास्ति ईश्वरः' इत्याकारकविचारः प्रमाणम् विश्वसनीयम्। ह्यूमनाम्ना दार्शनिकेन 'न ईश्वरः नापि अन्तःकरणम्। सकलोऽपि व्यवहारः केवलं मस्तिष्कापरनामकेन यन्त्रेणैव सिद्ध्यतीति इति मतं प्रतिपादितम् ॥ २२ ॥

किं वा स्पिनोजावचनानुसारं मनस्तथार्थः परमेश्वरांशौ।
ज्ञानस्य बुद्धिः करणं नु मान्या सद्वस्तुसंवित्किमु कान्टसूरेः ॥ २३ ॥

किंवेति। स्पिनोजानामको यहूदीमतानुयायी दार्शनिकः स्पेनदेशनिवासी अभूत्। तस्य वचनानुसारं मतानुसारं मनः अन्तःकरणं तथा अर्थः बाह्यसृष्टिः परमेश्वरस्य सृष्टिकर्तुः ईश्वरस्यांशभूतौ। ईश्वरः सर्वशक्तिमान् अस्मादीश्वरात् मनांसि जीवा इत्यर्थः तथा सृष्टिश्चोभयमप्युत्पन्नम्। अथवा कान्टसूरेः कान्टाभिधशार्मण्यदेशीयपण्डित-मतानुसारं बुद्धिः मनः ( Pure reason ) ज्ञानस्य विषयपञ्चकात्मकबाह्यसृष्टिसंवित्तेः करणं साधनम्। अस्माकं पञ्चज्ञानेन्द्रियाणि सृष्टिगतविविधपदार्थान् केवलमेकीकृत्य स्वस्वामिन्याः बुद्धेः पुरस्तात् स्थापयन्ति ततश्च बुद्धिः विषयविषयकं निश्चयं करोति। एवं कान्टसूरिः 'अस्माकं मनसि सद्वस्तुसंवित् वस्तुतत्त्व-( ब्रह्म )-ज्ञानं जायते यद्यपि तस्याः संविदः साक्षादनुभवः न जायते' इत्यपि अमन्यत ॥ २३ ॥

डार्विन्नुपज्ञो जगदुद्भवे स्यादुत्क्रान्तिवादः किमु निर्विवादः।
अज्ञेयता नश्वरवस्तुनो वा सिद्धान्तिता स्पेन्सरपण्डितेन ॥ २४ ॥

डार्विन्निति। अथवा जगदुद्भवे सृष्ट्युत्पत्तिविषये डार्विन्निति नामकेन सृष्टिविकाल-वादिना उपज्ञः आविष्कृतः 'उपज्ञा ज्ञानमाद्यं स्यादि'त्यमरः, उत्क्रान्तिवादः सृष्टि-विकासविषये अभिमतः निर्विवादः संदेहशून्यः निश्चितस्वरूपः किम्। अथवा आंग्ल-देशीयेन स्पेन्सरनामकेन पण्डितेन सिद्धान्तिता सिद्धान्तरूपेण प्रतिपादिता अनश्वर-वस्तुनः ईश्वरस्वरूपस्य वा अज्ञेयता संविदविषयत्वं निर्विवादा इति विभक्तिविपरि-णामेन सम्बन्धः—असंदिग्धा ॥ १४ ॥

सिद्धिस्तथाहो अहमः प्रसिद्धा डेकार्टगीता किमु युक्तियुक्ता।
द्वन्द्वात्परो वा परतत्त्वबोधो हेगलबुधोक्तः सकलानुकूलः ॥ २५ ॥

सिद्धिरिति । तथा तेनैव प्रकारेण डेकार्टनामकेन प्रतीच्यपण्डितेन गीता वर्णिता अहम् आत्मनः प्रसिद्धा विपुला सिद्धिः प्रमाणीकरणम् युक्तियुक्ता तर्कसंगता 'अहं जानामि अत अस्मि ( Cogito ergo Sum ) इति तस्य आत्मनः साधनपरिपाटी आसीत् । अथवा हेगल्नामकेन अन्यतमेन पाश्चात्यदेशीयपण्डितेन उक्तः वर्णितः परतत्त्वबोधः सर्वगततत्त्वस्य बोधः ज्ञानं द्वन्द्वात्परस्परविरोधि गुणात् परं अतिक्रम्य स्थितः सकलानां सर्वेषामपि आनुकूल्यतः वर्तमानः यावत्कालपर्यन्तं सुखदुःखाद्यात्मकानि द्वन्द्वानि नातिक्राम्यन्ते तावद्यथार्थतत्त्वज्ञानं न जायते इति हेगल्पण्डितस्य मतमासीत् ॥ २५ ॥

इत्थं विचाराहितमानसेन हि तेन स्वधर्माम्बुनिधिर्जगाहे ।
ईशोऽस्य विश्वस्य परो नियन्ता यन्ता रथस्येव धृताश्वरश्मिः ॥ २६ ॥

इत्थमिति । इत्थमनेन प्रकारेण विचारेषु दार्शनिकमतेषु आहितं निहितं मानसम् अन्तःकरणं यस्य एतादृशेन तेन नरेन्द्रेण हि आध्यात्मिककल्याणकारकः स्वधर्मः वैदिकधर्म एव अम्बुनिधिः समुद्रः आर्यधर्ममहासागरः जगाहे सम्यग्विमर्शीकृतः अत्र तेन किमवलोकितम् इत्याह—अस्य दृश्यमानस्य विश्वस्य समस्तस्य परः सर्वश्रेष्ठः नियन्ता नियामकः ईशः परमेश्वरः विद्यते । यथा धृता हस्तगता अश्वानां तुरगाणां रश्मयः नियमनरज्जवः येन एतादृशः यन्ता सारथिः रथस्य नियामकः अस्ति तथैव सम्पूर्णदृश्यसृष्टेः नियामकः ईश्वरः विद्यते । प्राच्यप्रतीच्यदर्शनानां तुलनात्मकालोचनानन्तरं स्वामिभिरुक्तमासीत्—'हिंदुदर्शनानि प्रागैतिहासिकयुगे एव यस्य परमसत्यस्योपलब्धौ स्थिरं सिद्धान्तं प्रत्यपादयन् तस्य क्षीणाभासमात्रं पाश्चात्यदर्शनानि प्रापुः । पाश्चात्यदार्शनिकैः पूर्णस्योपलब्धिर्न कृता' इति । अत्रोपमालंकारः ॥ २६ ॥

मुहुः स एवावतरेन्नृलोके शोकापनोदाय समः समेषाम् ।
अयं ह्यपारः करुणापयोधिस्तेन स्मृतं शास्त्रवचः प्रसूक्तम् ॥ २७ ॥

मुहुरिति । मुहुः पुनः पुनः स एव परमेश्वरः नृलोके अस्मिन्मानुषे लोके समेषां सर्वेषां जनानां समः तुल्यदृष्टिः 'समं सर्वेषु भूतेषु' इति गीतायाम् । लोकानां शोकापनोदाय दुःखनिवारणार्थमवतरेत् मनुष्यशरीरस्वीकारपूर्वकमागच्छेत् यतः अयं परमेश्वरः अपारः पारावारशून्यः करुणायाः पयोधिः समुद्रः कृपासागर इत्यर्थः । इति तेन प्रसूक्तं जनन्या प्रतिपादितं शास्त्रवचः हिन्दुशास्त्रेषु स्पष्टीकृतं वचनजातं स्मृतं स्मृतिविषयीकृतम् ॥ २७ ॥

अनल्पसंकल्पविकल्पदोलाप्रेङ्खोलितं मानसमेतदीयम् ।
चेत्कश्चिदीशितृपदप्रतिष्ठस्ततः कुतस्त्या समता जनेषु ॥ २८ ॥

अनल्पा असंख्येयाः संकल्पविकल्पाः तर्कवितर्का एव दोला तस्याः प्रेङ्खोलितं इतस्ततः आन्दोलनशीलम् एतदीयं नरेन्द्रस्य मानसम् 'अभूत्' इति शेषः । तदेव विशिनष्टि चेद्यदि कश्चित्कोऽपि ईशितुः शासकस्य पदे सिंहासने प्रतिष्ठा अवस्थानं यस्य एतादृशः विद्यते 'ईश्वरः' 'ईश्वरः' इत्यनेके वदन्ति परंतु यथार्थेन यदि कश्चिदीश्वरपदवाच्यः विद्यते ततः नहि जनेषु लोकेषु असमता अस्मादृशस्य कुतस्त्या कस्माज्जाता । ईश्वरस्तु दयालुत्वात्सर्वेष्वपि लोकेषु समानव्यवहारः भवेत् । परं जगति सर्वे न समानाः सुखिनः धनिनो वा तस्मादीश्वरास्तित्वेऽपि सन्देह एव ॥ २८ ॥

एको दरिद्रः सुतचक्रवर्ती श्लिष्टः श्रियान्यः किल चक्रवर्ती ।
पुत्रोत्सवः कुत्रचिदन्यतोऽयं शोको महान्स्वर्गतवान्धवानाम् ॥ २९ ॥

एक इति । एकः कश्चित्पुरुषः दरिद्रः धनहीनः तथा सुतानामात्मजानां चक्रे समूहे वर्तते इति सुतचक्रवर्ती पुत्रादिपरिवारपरिवृत इत्यर्थः अन्यः अपरः कश्चित् श्रिया राजलक्ष्म्या आश्लिष्टः आलिङ्गितः ननु चक्रवर्ती अनेकसेवकसामन्तपरिवृतः सम्राट् । कुत्रचिदेकस्मिन्स्थले पुत्रोत्सवः पुत्रजन्मकारणात् उत्सवःमहः भवति । अन्यत्र स्थाने स्वर्गतस्य कस्यचिन्मृतसम्बन्धिनः वान्धवानां महान् अत्यधिकः शोकः । एतादृशः भेदः असमानता परमेश्वरस्य राज्ये कुतः कारणादिति भावः ॥ २९ ॥

क्वचित्स्वपुत्रोद्वहनस्य चिन्ताधारातिभाराकुलितान्तरोऽयम् ।
विनात्मजं रोदिति कश्चिदन्यो विधे ! कथं निष्करुणं मनस्ते ॥ ३० ॥

क्वचिदिति । क्वचित् कुत्रचित्स्थाने स्वस्य आत्मनः पुत्रस्य आत्मजस्य उद्वहनं विवाहः तस्य चिन्ता विचारः 'ममात्मजस्य विवाहः कदा भविष्यति' इति उत्कण्ठा तस्या उत्कण्ठाया या धारा विचारपरम्परा तस्या भारेण भरवशात् आकुलितम् अत्युक्तम् आन्तरं यस्य एवंभूतः । अपरत्र च कश्चिदन्यः पुरुष आत्मजं विना रोदिति शोकाकुलः दृश्यते वदति च 'हे विधे ! जगत्कर्तः, ते तव मनः हृदयं निष्करुणं करुणाशून्यं वर्तते' इति शेषः ॥ ३० ॥

दयार्द्रभावस्य विभोर्भवेऽस्मिन् विभाव्यते भेद इवात्र केन ।
नीचोऽयमुच्चैः सधनोऽधनोऽयं स्पृश्योऽयमस्पृश्यतयान्वितोऽयम् ॥ ३१ ॥

दयार्द्रभावस्येति । दयया अनुकम्पया आर्द्रः भावः हृदयं यस्य एतादृशस्य विभोः ईश्वरस्य भवेऽस्मिन्संसारे तत्साम्राज्ये केन कस्मात्कारणात् भेद इव असमानतेव विभाव्यतेऽवलोक्यते । कुतश्च अयं नीचः कुलजातिदृष्ट्या अवरः अपरश्च उच्चैः उच्चकुलोत्पन्नः । तदा अयं सधनः धनाढ्यः अपरः अधनः दरिद्रः । एकः स्पृश्यः स्पर्शयोग्यः अपरश्च अस्पृश्यतया अन्वितः युक्तः तथाकथितचण्डालादिजातीयः एतादृशः भेदभावः कुतः कारणात्संसारे उपलभ्यते ॥ ३१ ॥

यदीशिता चेद्वयमेतदीया युक्तस्ततो नः खलु बन्धुभावः ।
कलिप्रसक्तः किमु तर्हि लोकोऽकरोद्विवेकः सदसद्विवेकम् ॥ ३२ ॥

यदीशिता । ईशिता परमेश्वरः चेद्यदि अस्ति चेत् वयं सर्वे मानवाः एतदीयाः एतस्य पुत्रस्वरूपाः ततश्च तेन कारणेन नः अस्माकं सर्वेषामीश्वरपुत्राणां बन्धुभावः भ्रातृत्वं निश्चितम् । तर्हि वैपरीत्येन लोकः जनाः किमु कस्माद्धेतोः कलौ परस्परकलहे प्रसक्तः आसक्तः दृश्यते बान्धवैः परस्परं वैरिभिस्तु न भवितव्यमित्यर्थः । इत्थं विवेकः भावि-विवेकानन्दः तदानीं ततो नरेन्द्रः सदसतोः किं सत्यं किंचासत्यं इत्यस्मिन्विषये वितर्कं विचारं कर्तुमारेभे ॥ ३२ ॥

वासं क्षणं क्षोणितलेऽनुभूयासूयामयद्वेषविषानुषक्ताः ।
शान्तिं स्थिरां हेतिभिरीहमाना विशन्त्यशान्तिं शतशो मनुष्याः ॥ ३३ ॥

वासमिति । क्षणं क्षणकालपर्यन्तं क्षोणितले पृथ्वीतले वासं निवासमनुभूय अनुभव-

विपर्यीकृत्य मनुष्या मर्त्या असूया परस्परं प्रति ईर्ष्या, भयम् भीतिः द्वेषः अन्योन्यं प्रति वैरिता एतादृशदुर्भावनारूपं यद्विषं तस्मिन्ननुपन्ना आसक्ताः सन्तः हेतिभिः भयानकशस्त्रास्त्रैः स्थिरां चिरकालीनां शान्तिं युद्धाभावम् ईहमाना मार्गयन्तः तिष्ठन्ति परम् एतादृशाः शतशो नरा अशान्तिं शान्त्यभावं विशन्ति प्रविशन्ति अनुभवन्तीत्यर्थः । शान्त्यन्वेषणमनसः अशान्तिरूपं विपरीतं फलमधिगच्छन्ति इति भावः । अनुप्रासः विरोधश्चालंकारः ।

कायेन वाचा मनसा नरेन्द्रः पवित्रतादर्शसुदर्शनोऽयमम् ।
बुद्धिप्रकर्षोद्गतहर्षहेतुर्विद्यालयेऽभूदखिलादरार्हः ॥ ३४ ॥

कायेनेति । नरेन्द्रः कायेन शरीरेण वाचा भाषणेन मनसा अन्तःकरणेन च पवित्रता निर्मलता तत्स्वरूपः यः आदर्शः अनुकरणीयगुणः तेन सुदर्शनः अतिसुन्दरोऽयम्, बुद्धेः विचारशक्तेः प्रकर्षः उत्कर्षः तेनोद्भूतः यदुद्भूतः आश्चर्यभावः तेन हर्षहेतुः आनन्दकारणीभूतः एतादृशः नरेन्द्रः विद्यालये आङ्ग्लभाषादिशिक्षामन्दिरे अखिलानां सहपाठिनां आदरस्य सम्मानस्य अर्हः योग्यः अभूत्, सर्वेऽपि सतीर्थ्याः तस्मिन्नतीव आदरयुक्ता बभूवुरित्यर्थः ॥ ३४ ॥

अस्यैव सत्सु विवादतर्कज्ञानेष्वपूर्वा प्रतिभाऽतिभाति ।
इत्थं स नित्यं स्तुतितत्परेभ्यो गुरुर्गुरुभ्योऽतितरां रराज ॥ ३५ ॥

अस्यैवेति । सर्वेषु विद्याधिषु सभ्यः विवादे वादविषये, तर्के अनुमानादिविषये, ज्ञाने च ईश्वरमनविश्विचारे च अस्यैव नरेन्द्रस्यैव प्रतिभा नवनवोन्मेषशालिनी बुद्धिः अतिभाति अतिशयेन प्रकाशमाना दृश्यते स्म । इत्थं अनेन प्रकारेण नरेन्द्रः स्तुतौ प्रशंसायां तत्परेभ्यः आसक्तेभ्यः गुरुभ्योऽपि शिक्षकेभ्योऽपि गुरुः गुरुतरः योग्यतरः रराज शोभते स्म । नरेन्द्रस्य गुरवोऽपि तस्य बुद्धिशक्तेः प्रशंसां मुक्तकण्ठं चक्रुरित्यर्थः ॥ ३५ ॥

भू निसर्गे सर्वत्र सुखमेव दृश्यते । परं केवलं मनुष्य एव दुर्गमचिन्ताव्याकुलितान्तःकरणः दृश्यते इत्याह—

सरस्सु हंसाः सरसास्तरन्ति तरङ्गभङ्गैः सलिले चलाङ्गाः ।
अम्भोजवृन्दं परितोवृतानां चेतोहराणां सुषमासमेषाम् ॥ ३६ ॥

सरस्सु इति । सरस्सु कासारेषु सरसाः क्रीडाभिलाषिणः हंसाः कारण्डवाः जले तरङ्गभङ्गैः लहरीपरम्पराभिः चलानि इतस्ततः आन्दोलितानि अङ्गानि शरीराणि येषामेतादृशाः तरन्ति जलपृष्ठे सन्तरन्ति । अम्भोजानां कमलानां वृन्दं समूहं परितः सर्वदिक्षु वृतानां परिवृतानां चेतांसि अन्तःकरणानि हरन्ति आकर्षन्ति तादृशानाम् एतेषां हंसानां सुषमा परमा शोभा असमा अतुलनीया । 'सुषमा परमा शोभा' । अत्रानुप्रासः ॥ ३६ ॥

तारा सुराणां कुसुमोपहारा नक्तं वियत्प्राङ्गणमाभरन्ति ।
उच्चैः सुधांशुस्त्रिदिवीविधातुं भुवं सुधासान्द्रतलां करोति ॥ ३७ ॥

तारा इति । सुराणां देवानां कुसुमोपहाराः पुष्परचनाविशेषसदृशाः ताराः नक्षत्राणि वियतः आकाशस्य प्राङ्गणं प्रासादपुरतः विद्यमानां चतुरस्रभूमिं नक्तं रात्रिसमये आभरन्ति अलंकुर्वन्ति । तथा च सुधांशुः चन्द्रमाः उच्चैः स्वकीयकिरणैः भुवं महीतलं त्रिदिवीविधातुं त्रिदिवं स्वर्गं अत्रिदिवं त्रिदिवं सम्पद्यमानं कर्तुमिति त्रिदिवीविधातुम्

अभूवत्तद्भावे च्विः। तां भुवं सुधया स्वकिरणनिष्यन्दरूपेण अमृतेन सान्द्रं निबिडं तलं यस्या एतादृशीं करोति विधत्ते। स्वकिरणनिर्गतपीयूषधाराभिः भुवमेव स्वर्गं परिणमयितुमिच्छति। उत्प्रेक्षा। अनुप्रासोऽपि ॥ ३७ ॥

तरंगिणीतीरगता वनेषु वर्षन्ति हर्षात्तरवः सुमानि।
भृङ्गा पुनः सौरभमेतदीयं शंसन्ति गुञ्जारवकैतवेन ॥ ३८ ॥

तरङ्गिणीति। वनेषु अरण्येषु तरङ्गिणीनां सरितां 'नदी सरित्। तरङ्गिणी शैवलिनी' इत्यमरः। तासां तीरेषु रोधःसु गताः विद्यमानाः तरवः वृक्षाः हर्षात् आनन्देन सुमानि पुष्पाणि वर्षन्ति। नदीतटगता वृक्षा अपि आनन्दव्यक्त्यर्थं पुष्पवृष्टिं कुर्वन्ति। अथ भृङ्गा भ्रमरा एतदीयम् एतेषां पुष्पाणां सौरभं सुगन्धं गुञ्जारवस्य स्वगानशब्दस्य कैतवेन व्याजेन शंसन्ति प्रशंसन्ति ॥ ३८ ॥

एवं जगत्स्थावरजङ्गमान्तं कान्तं सुखं चाप्यवलोकनीयम्।
परं कुतो मानवजीवनस्य द्वन्द्वाकुलत्वं विपरीतमेव ॥ ३९ ॥

एवं जगदिति। एवमित्थं स्थावरजङ्गमान्तं स्थिरचरात्मकं जगत् सृष्टिः कान्तं अतिसुन्दरं सुखमानन्दमयम् अवलोकनीयं दर्शनीयम् द्रष्टुं योग्यतममित्यर्थः। परं वैपरीत्येन मानवानां मर्त्यानां जीवनस्य आयुषः द्वन्द्वाकुलत्वं धर्ममतभेदादिस्वरूपत्वं विपरीतमेव प्रकृतिविरुद्धमेव कस्मात्कारणात् 'दृश्यते' इति शेषः ॥ ३९ ॥

मनोः प्रसूतिः प्रकृतेरपत्यं व्यस्मारि सेयं जननी सुतेन।
अतो नरोऽभून्नु कदर्थनार्हः सुनिश्चितः कर्मफलस्य भोगः ॥ ४० ॥

मनोः प्रसूतिरिति। मनोः स्वायंभुवादिमनोः प्रसूतिः अपत्यानि मानवा इत्यर्थः मनोः अपत्यानि पुमांसः। प्रकृतेः सौन्दर्यसुखात्मिकाया आदिमायायाः अपत्यं सन्तानानि इतिजात्येकवचनम्। सुतेन प्रकृत्यात्मजेन मानवेन स्वजननी प्रसूरेव व्यस्मारि विस्मृता। स्मृधातोः कर्मणि लुङ्। अतः कारणात् कदाचिन्नरः मानवः कदर्थनार्हः आपदामास्पदम् अभूत् सञ्जातः। यतः कर्मणामिष्टानिष्टकार्याणां यत्फलं परिणामः तस्य भोगः भुक्तिः सुनिश्चितः अवश्यंभावी। मानवः स्वकृतकर्मणां फलमिहैवानुभवतीति भावः ॥ ४० ॥

किं वाऽऽपदां स्यादपरं निदानं हेतुं विना नो विपदो नराणाम्।
कर्ता यदि स्याज्जगतां ततोऽसौ मन्ये स्वयं निष्करुणः कठोरः ॥ ४१ ॥

किंवापदामिति। किंवा अथवा आपदां मानवैः अनुभूयमानानां कदर्थनानाम् अपरं अन्यत् किञ्चिन्निदानं वर्तते। यतः हेतुं विना कारणमन्तरेण 'हेतुर्ना कारणं बीजम्' इत्यमरः नराणां मनुष्याणां विपदः आपदः नो न भवितुं शक्नुवन्ति इति शेषः। यदि जगतां लोकानां कर्ता उत्पादकः स्याद्भवेत् ततः तर्हि अयमीश्वरात्मकः कर्ता स्वयं निष्करुणः निर्दयः कठोरः पाषाणहृदयः इत्यहं मन्ये यतस्तेन जगति सर्वत्र वैषम्यं विहितमास्ते ॥ ४१ ॥

लोकस्य शोकाभिभवास्पदस्य हेतोर्न चेत्तोवलमस्ति चेन्मे।
कोऽहं वृथा जीवितुमाधकल्पः सहायमन्यस्य विना निजार्थम् ॥ ४२ ॥

लोकस्येति। चेद्यदि शोकानामापदामभिभवस्य आक्रमणस्य आस्पदं विषयः तस्य

विपदात्मगतिविषयीभूतस्येत्यर्थः। लोकस्य हेतो तादृशापद्विवारणार्थमित्यर्थः मे मम चेतस बलम् मनोबलं नास्ति चेत्, यद्यहं लोकापद्विवारणासमर्थ इति भाव। तर्हि वृथा निष्प्रयोजन जीवितु प्राणितुमह क न कोऽपीत्यर्थः लोकदुःखनिवारणाक्षमस्य मे जीवनमेव व्यर्थमिति भाव। अस्मिन्विषये आधकल्प प्रधानकार्यं तु 'मुख्य स्यात्प्रथम कल्प' इत्यमर निजार्थं स्वार्थं विना अन्यस्य असहायस्य सहायं सेवारूप विधन तद्यदि मया न कर्तुं शक्यते मम जीवनेन न किमपि प्रयोजनम् ॥ ४२ ॥

समष्टिकल्याणविशिष्टकार्यं व्यष्टेः सुखात्कोटिगुणं गरीयः।
नरं परार्थस्य क्षणोऽपि सद्यः कृत· कृतार्थं कुरुते यथार्थम् ॥ ४३ ॥

समष्टिकल्याणेत्यादि। समष्टे समाजस्य यत्कल्याणं कुशलं तद्विशिष्टं तत्कल्याणयुक्तं कार्यं सेवारूप परोपकारकार्यमित्यर्थः। व्यष्टे सुखात् व्यक्तिविशेषस्वार्थपूर्णसुखात् कोटिगुणम् अत्यधिकमित्यर्थं गरीय गुरुतरम्। परार्थस्य परोपकारस्य कृत आचरित क्षणोऽपि स्वल्पक्षणोऽपि नर परोपकारिण सद्य तत्क्षण यथार्थं सत्यमेव कृतार्थं धन्य कुरुते विदधाति। व्यक्तिस्वार्थात्समष्टिसेवा अगणितगुणा श्रेयसी सा यदि मया न विधीयते धिङ् मम जीवनमिति भाव ॥ ४३ ॥

अल्पेन विद्या परिशीलनेन स्मृतौ स्थिरा तस्य चिरं बभूव।
साहित्यसङ्गीतपदाद्यधीतिप्रीत परं कौशलमाससाद ॥ ४४ ॥

अल्पेनेति। नरेन्द्र तीक्ष्णबुद्धि केवलमेकवारपठनमात्रेण सर्वमेव तस्य स्मृतिविषयोऽभूत्, अल्पेन क्षणकालमपि परिशीलनेन कस्यापि विषयस्य पठनेन अधिकमपि पाठ्यज्ञान तस्य स्मृतौ चिरकालपर्यन्तमङ्कितमभवत्। कदापि तत्र विस्मृतवान् इत्यर्थः। साहित्यं बङ्गालसाहित्य सङ्गीतं गानविद्या पदं व्याकरणादिकं तस्य अधीत्याऽध्ययनेन प्रीत प्रसन्न शनै परं कौशलं कुशलता आससाद प्राप्तवान्, गृहे योग्यगीतशास्त्रज्ञेभ्य मधुरकण्ठो नरेन्द्र अशिक्षितगानविद्य अभूत्। तस्य गानं श्रुत्वा श्रीपरमहंसोऽपि समाधिस्थोऽभवत् ॥ ४४ ॥

तस्यात्मविश्वासपरस्य नित्यं बाल्येऽपि वक्तृत्वबलं किलासीत्।
भविष्यदावेदनलक्षणानि पूर्वं वयस्यङ्कुरितानि तानि ॥ ४५ ॥

तस्येत्यादि। नित्य निरन्तरम् आत्मनि स्वयोग्यताया विश्वास श्रद्धा 'इद कार्यमहं विधास्याम्येव' इत्याकारक निश्चय स एव पर श्रेष्ठ यस्य एतादृशस्य नरेन्द्रस्य बाल्येऽपि बाल्यावस्थायामपि किलेति निश्चये वक्तृत्वस्य भाषणस्य बलं सामर्थ्यमासीत्। बाल्यावस्थायामपि सभायां तस्य भाषणकर्तृत्वशक्तिराविरभूत्। भविष्यत भाविन आवेदनस्य वक्तृत्वादिकस्य लक्षणानि यानि चिह्नानि तानि पूर्वस्मिन्नेव वयसि बाल्यावस्थायामित्यर्थं अङ्कुरितानि अभिनवोद्भिद्रूपेण प्रकटितान्यभूवन्। प्रवेशिकापरीक्षार्थमधीयान विद्यालये कस्मिंश्चिदनुष्ठाने वाग्मिप्रवरसुरेन्द्रनाथबन्द्योपाध्यायस्याध्यक्षतायाम् आङ्गलभाषाया तेन एतादृशी वक्तृता दत्ता येन तस्यान्तस्तले विद्यमान भावी वाग्मिविवेकानन्द प्रकटीबभूव। अध्यक्षमहोदय न केवलं वक्तृतया अतिप्रसन्न अपि तु वक्तु उज्ज्वलभविष्यविषयेऽपि तेन स्वमतं स्पष्टीकृतम् ॥ ४५ ॥

पुनः स तात्कालिकभारतीयदुष्यत्समाजस्थितिसंस्तुतः सन् ।
अवश्यकर्तव्यतया सुधारविचारचर्चाप्लुतमानसोऽभूत् ॥ ४६ ॥

पुनः स इति । पुनः अपि च तत्काले भवा तात्कालिकी या भारतस्य दुष्यतः दोषपूर्णस्य समाजस्य स्थितिः अवस्था तया संस्तुतः परिचितः सन् अवश्यकर्तव्यतया आवश्यककरणीयतया सुधारविचारस्य दोषपरिहारपूर्वकं समाजनिर्मलीकरणस्य चर्चया चिन्तया आप्लुतं परिपूर्णं मानसमन्तःकरणं यस्य एतादृशः अभूत् । तत्कालीनभारतीयसमाजस्य दूषितामवस्थामवलोक्य तत्र आवश्यकसुधारान् कर्तुमियेष इति भावः ॥ ४६ ॥

विद्यार्थिना स्याद्विषयोपभोगयोगाभिलाषो विषकल्प एव ।
आदर्शमार्गोऽयमदर्शि केनाप्यदर्शितः स्वाचरणेन तेन ॥ ४७ ॥

विद्यार्थिनेति । विद्यार्थिनाम् विद्यार्जनं चिकीर्षूणां विषयाणां शब्दस्पर्शादीनाम् उपभोगः अनुभवः तस्य योगः प्राप्तिः तस्या अभिलाषः स्पृहा तु विषकल्प ईषदूनमाक्षविषतुल्य एव । ज्ञानपिपासुभिर्विद्यार्थिभिर्विषयेच्छा कदापि न कर्तव्या इति भावः । अयम् एतादृशः आदर्शः अपरैः अनुकरणीयः मार्गः पन्थाः अन्येन केनापि अद्य यावद्दर्शितः न सूचितः तेन नरेन्द्रेण स्वस्य विद्यार्थिभिः यादृशं ब्रह्मचर्यादियुक्तमाचरणमपेक्षितं तादृशाचरणेन अदर्शि प्रदर्शितं सूचितम् । दृशि धातोर्ण्यन्तात्कर्मणि लुङ् ॥ ४७ ॥

ब्राह्मार्यसंस्थाभिनवाध्वना किं साध्यो भवेज्जीवनलक्ष्यलाभः ।
किं वर्त्म युक्तं क इवाभ्युपेयो न निर्णयं गन्तुमलंबभूव ॥ ४८ ॥

ब्राह्मार्येत्यादि । ब्राह्मः राजा राममोहनरॉय इत्यादिभिः प्रचालितया ब्राह्मसमाजसंस्थाया अथवा श्रीदयानन्दसरस्वतीस्वामिना प्रचारितार्यसमाजसंस्थाया अभिनवः नूतनः पन्थाः मार्गः तेन वा जीवनस्य ऐहिकजीवनयात्राया यल्लक्ष्यं साध्यं तस्य लाभः प्राप्तिः भवेत्किम् इति मानसिकः प्रश्नः । अनेकेषां मार्गाणां मध्ये किं वर्त्म कः खलु मार्गविशेषः युक्तं मत्कृते योग्यम् ? क इव इति संदेहात्मिकवृत्तेरुपलक्षणम् अभ्युपेयः मनःसमाधानार्थं गन्तव्यः इत्यस्मिन्विषये निर्णयं निश्चयं गन्तुं प्रयातुं अलं समर्थः न बभूव । अस्मिन्विषये कमपि निश्चयं कर्तुमसमर्थोऽभूदिति भावः ॥ ४८ ॥

स्वान्तःशमः स्थायिसुखस्य हेतुर्द्वन्द्वापहारेण च शान्तिलाभः ।
निर्द्वन्द्वतामेति नरः परेण प्रेम्णा ततः प्रेम सुखस्य तत्त्वम् ॥ ४९ ॥

स्वान्तःशम इति । स्वान्तः शमः आन्तरिकी शान्तिरेव स्थायिनः चिरकालिकस्य सुखस्य आनन्दस्य हेतुः कारणम् । एतादृशी शान्तिः कुतोऽभ्युपगन्तव्या इत्याह—द्वन्द्वेति । द्वन्द्वानां सुख-दुःखजयाजयस्वरूपाणाम् अपहारेण परिहारेण मानसिकशान्तेः लाभः भवति परमयं द्वन्द्वापहारः कथं प्राप्येतेति विवक्षायामुत्तरयति—एतादृशः द्वन्द्वनाशः परेण उच्चतरेण स्वार्थशून्येन प्रेम्णैव सिद्ध्येत् तस्मादुच्चतमं प्रेमैव अविनाशि सुखस्य कारणम् । सुखकारणमन्तःशान्तिः अन्तःशान्तेः कारणं द्वन्द्वापहारः द्वन्द्वापहारस्य कारणम् उच्चतरं प्रेम एवम् उच्चतमं प्रेमैव पर्यायेण सुखस्य कारणं भवति इति मनसि विचारयामास ॥ ४९ ॥

अनेकमार्गप्रसराऽस्य बुद्धिर्भूमानमागन्तुमियेष शुद्धा ।
स्रोतोभिरात्मप्रभवैर्विभिन्नैर्जह्नोः सुता याति यथा पयोधिम् ॥ ५० ॥

अनेकमार्गेत्यादि। तस्य मानस भूमानमधिगन्तुमियेषेत्याह—अनेकेति—अनेके ये मार्गा ब्रह्मार्थभक्तिनामान तेषु प्रसर विस्तार यस्या एतादृशी अस्य नरेन्द्रस्य बुद्धि शुद्धा अत्यन्तपवित्रा सरला च सती भूमान 'यं लब्ध्वा चापरं लाभम्' इत्यादिनोक्तम् आत्यन्तिकसुखम् आगन्तु प्राप्तुम् इयेष अभिललाष। तत्र दृष्टान्त—आत्मा स्वयमेव प्रभव उत्पत्तिस्थान येषाम् एतादृशै विविधै अनेकविधै स्रोतोभि शाखाभि गङ्गासागरे दृश्यमानैरित्यर्थ यथा जह्नो सुता जाह्नवी भागीरथी पयोधि समुद्र याति प्राप्नोति ॥ ५० ॥

शान्तिं चिराभिलषितामधिगन्तुमेतां द्वन्द्वात्परामुपदिशेत्क इवाभ्युपायम्।
आसाद्यते यदि मया पदवी नवीना लोकव्यथापहरणे सततं यतिष्ये ॥५१॥

शान्तिमिति। एतादृशी चिरकालादभिलषिता वाञ्छिता सुखदुःखादिद्वन्द्वात्परा निर्द्वन्द्वामित्यर्थ भूमस्वरूपां शान्तिम् अधिगन्तु प्राप्तुं क इव उपाय मार्गमुपदिशेत् कथयेत्। यदि काचिन्नवीना अद्य यावत्केनाप्यन्येन अप्राप्ता पदवी मार्गं आसाद्यते तर्हि अहं लोकानां जनानां व्यथाया आपद हरणे परिहारार्थं सततं निरन्तरं यतिष्ये प्रयत्नशीलो भवेयम्। पर कश्चिद्योग्यमार्गोपदेशक प्रथमं प्राप्तव्यो भवेदिति भाव। अत्र सर्गसमाप्त्यवसरे 'अवसानेऽन्यवृत्तकै' इति नियमानुसार वृत्तपरिवर्तनं विहितम्। तच्च वसन्ततिलकम्। अस्मिन्महाकाव्ये प्रतिसर्गं अन्तिमश्लोके शान्तिशब्दप्रयोगादिदं शान्त्यङ्कं काव्यमित्यभिप्रेतं कवे ॥ ५१ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
प्रत्यग्दर्शनशास्त्रबोधविहितप्रज्ञेन नव्ये महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽन्तमादिर्गतः ॥ ५२ ॥

इति श्रीविवेकानन्दचरिते 'संकल्पविकल्पो' नाम प्रथमः सर्गः।



लोकमिति। सर्गसमाप्तिं सूचयति—मोहात्मकं यत्तम अन्धकार तेन हतम् आक्रान्तं लोकं संसारं धृत गृहीत आलोकित इत्यर्थ हितकारक आलोक दीपादिरूप येन एतादृशं विधातुं कर्तुं क्षमे समर्थे अज्ञानतिमिराकुलं संसारं ज्ञानप्रकाशयुक्तं कर्तुं क्षमे समर्थे विश्वेन सकललोकैरित्यर्थ अध्येया अध्ययनयोग्या अनुकरणीया गुणा ज्ञानवैराग्यादय यस्मिन्नेतादृशे विवेकानन्दस्वामिन चरिते एतन्नामके यस्मिन् धर्म एव प्रधान मुख्य आश्रय आधार यस्मिन् एतादृशे नवीने महाकाव्ये प्रत्यग्दर्शनं पाश्चात्यदर्शनं नाम यच्छास्त्रं तस्य बोधे ज्ञाने अध्ययने विहिता स्थापिता प्रज्ञा बुद्धिर्येन अधीतपाश्चात्यदर्शनशास्त्रेणेत्यर्थ त्र्यम्बकसूरिणा एतन्नामकेन विरचिते विवेकानन्दजीवनचरितमनुसृत्य स्वोपज्ञतया रचिते अयमादिम प्रथम सर्ग अन्तं समाप्तिं गत ॥ ५२ ॥

इति त्र्यम्बकसूरिलिखितायां विवेकानन्दचरित महाकाव्ये
विवेकदीपाख्यटीकायां प्रथम सर्ग।



# द्वितीयः सर्गः

स्वाध्यायमग्नमनसं तमसंगताभि-
श्चिन्ताभिराकुलमनिश्चितलक्ष्यबोधम् ।
साहित्यदर्शनचणः किल हेष्टिनामा
प्राध्यापकः प्रकृतिरूपपरो जगाद ॥ १ ॥

स्वाध्यायेत्यादि । स्वाध्याये उच्चशिक्षाध्ययने मग्नमासक्तं मनः यस्य सः स्वाध्यायमग्नमनाः तमध्ययनासक्तम् असङ्गताभिः आपाततः परस्परसंबन्धशून्याभिः चिन्ताभिः संदेहात्मकविचारैः आकुला पर्याकुला मतिर्बुद्धिर्यस्य तम्, अनिश्चितः अनिर्धारितः लक्ष्यस्य प्राप्तव्यवस्तुनः बोधः ज्ञानं यस्य तं विद्यालये पाठकक्षायाम् अन्यैः विद्यार्थिगणैः सार्धमुपविष्टमिति भावः । हेष्टिनामा 'हेष्टि' इत्यभिधानः साहित्ये आंग्लवाङ्मये दर्शनशास्त्रेण वित्तः 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्, प्राध्यापकः शिक्षकः दृश्यदृष्टेः यद्रूपं सौन्दर्यं तदेव परं वर्णनविषयः यस्य 'वर्ड्स्वर्थ'-नामक प्रसिद्धांग्लकवि-वर्ड्स्वर्थस्य काचित् प्रकृतिसौन्दर्यवर्णनपरा लघुकविता तस्याः स्पष्टीकरणं कुर्वाणः जगाद—कक्षास्थितछात्रान् प्रति अगादीत् । अत्र सर्गे सर्वत्र वसन्ततिलकं वृत्तम् ॥ १ ॥

किमगादीदित्याह—

आनन्दमेति रुचिरां प्रकृतिं निरीक्ष्य चित्तं नरस्य सुचिरं विरलास्तु केऽपि ।
स्वात्मानमेव नितरां ननु विस्मरन्तः सन्तोऽप्यलौकिक सुखानुभवा भवन्ति ॥

आनन्दमेतीति । रुचिरां मनोहरां प्रकृतिं दृश्यसृष्टेः अंशविशेषं निरीक्ष्य अवलोक्य नरस्य मनुष्यस्य तत्तत्सृष्टिसौन्दर्यनिरीक्षणासक्तस्य चित्तमन्तःकरणं सुचिरं दीर्घकालपर्यन्तम् आनन्दमान्तरिकसुखम् एति लभते । एतादृशानां सृष्टिसौन्दर्यावलोकनतृप्तान्तःकरणानां मध्ये केऽपि कतिपये विरलाः सार्वत्रिकदर्शनाविषया जनाः स्वात्मानमेव विस्मरन्तः 'कोऽहं' मिति वृत्तिरहिताः सन्तः अलौकिकं दिव्यं यत्सुखम् आनन्दः तस्य प्रत्यक्षानुभवः येषामेतादृशास्तु विरलाः सन्ति । प्रकृतिसौन्दर्यदर्शनादेव आत्मविस्मरणपूर्वकं नित्यसमाधिसुखानुभवाः सन्तः क्वाचित्कदर्शना एवेति भावः ॥ २ ॥

एतादृशः महात्मनः दर्शनं मया प्रत्यक्षकृतमिति हेष्टिमहोदयः ब्रूते—

कोऽपीदृशः सुकृतनूतनकेतनाङ्कः श्रीदक्षिणेश्वरनिकेतनक्लृप्तवासः ।
'श्रीरामकृष्णपरहंस' इति प्रतीतो नित्यं करामलकसिद्धिसमाधियोगः ॥३॥

कोऽपीदृश इति । कोऽपि कश्चन ईदृशः प्रकृतिदर्शनादेव विस्मृतस्वः अनुभूतसमाधिसुखः । सुकृतं 'श्रीराज्ञी रासमणि' इत्याख्यया स्वकीयधनव्ययेन विरचितम्, नूतनं यत्केतनं पताकारूपम् अंकः चिह्नं यस्य एतादृशं यत् दक्षिणेश्वरनिकेतनं दक्षिणेश्वरे विद्यमानं भवतारिण्या-मन्दिरं तत्र क्लृप्तः विहितः वासः वसतिर्येन भवतारिणीमन्दिरे पूजकत्वेन नियुक्तः श्रीरामकृष्णपरमहंसाख्यः श्रीरामकृष्णपरमहंस इति नाम्ना प्रसिद्धः, नित्यं करतले स्थापितं यदामलकीफलं तत्सदृशः सिद्धः सर्वथा परिपक्वावस्थः समाधियोगः निर्विकल्पसमाधिसुखानुभवः यस्यैतादृशः कोऽपि महात्मा विद्यते ॥ ३ ॥

सत्यत्वमस्य वचसस्तु नरेन्द्रवर्ज नान्योऽधिगन्तुमलमध्ययनार्थिवृन्दे ।
तत्प्रज्ञया परिचितश्चिरमात्तचिनो हेष्टिर्बुध प्रमुदित स विदांचकार ॥ ४ ॥

सत्य वमस्यति । अस्य हष्टिमहोदयेनोक्तस्य वचनस्य 'प्रकृतिदर्शना विस्मृत निगावस्थाना निर्विकल्पसमाधिसुखमनुभवन्ति' इत्याकारकवचनस्य सत्यत्व याथार्थ्यम् अध्ययनार्थिना विद्यार्थिना वृन्दे समूहे अधिगन्तु ज्ञातु नरेन्द्रवर्ज नरेन्द्र वर्जयित्वा वर्ज धातोर्णमुलन्तमव्ययम् अन्य कोऽपि नाल न समर्थ आसीत् इति शेष । तस्य नरेन्द्रदत्तस्य प्रज्ञया बुद्धिमत्तया परिचित संस्तुत 'संस्तव स्यात्परिचय' इति कोश चिर दीर्घकालपर्यन्तम् आत्त गृहीत ज्ञानमित्यर्थं चित्तमाश्चर्यं यस्यैतादृश बुध प्राध्यापक हेष्टि प्रमुदित प्रसन्न विदांचकार ज्ञातवानपि विचारयामास ॥ ४ ॥

हेष्टेरव विचार वर्णयति—

भ्रान्त मया विविधविश्वविद्यालयेषु भ्रान्त च पाठनविधिप्रमितेन तेषु ।
क्रान्त सुदूरतरमन्तनि दर्शनस्य क्रान्त सुधीश्च ददृशे न नरेन्द्रतुल्य ॥ ५ ॥

भ्रान्तमिति । मया हेष्टिना विविधविश्वविद्यालयेषु शार्मण्याङ्ग्लादिविश्वविद्यालयेषु भ्रान्त भ्रमणमकारि भ्रमधातोर्भावे क्त । तथा तेषु विविधविश्वविद्यालयेषु पाठनविधौ अध्यापनकार्य प्रमितेन आसक्तेन च मया क्लान्तम्, पाठनकार्यप्रसक्तोऽह शारीरिकपरिश्रमतत्परायेण श्रान्त । दर्शनस्य दर्शनशास्त्रस्य अध्वनि मार्गे सुदूरतर चिरकालपर्यन्त क्रा तम् गतम् । दीर्घकालपर्यन्त दर्शनशास्त्रपरिशीलनासक्तोऽहमासम् । तथापि नरेन्द्रेण तुल्य समान कान्त नितान्तप्रिय सुधी बुद्धिमान् ज्ञानपिपासु शिष्य न ददृशे न दृष्ट । अदृष्टपूर्व इत्यर्थ । दृश कर्मणि लिट् ॥ ५ ॥

विज्ञानबुद्धिविभवेष्वपि सर्वदिक्षु शार्मण्यदेशतरुणेषु न दृष्टपूर्व ।
एतादृशोऽल्पवयसीदृगनल्पधीर्मा ज्ञाभून्नचापि भविता भुवि भारतस्य ॥ ६ ॥

विज्ञानेत्यादि । विज्ञान विभुत्व 'विभवविज्ञानविभुता' इत्यमर, बुद्धे प्रतिभाया विभव सामर्थ्यं येषाम् एतादृशेषु सर्वास्वपि दिक्षु सर्वत्र तथा शार्मण्यदेशे 'जर्मनी' इति ख्यात तत्रापि एतादृश तीक्ष्णधी मया पूर्वं न दृष्ट अवलोकित इति अदृष्टपूर्व । तद्देशाध्ययनविद्यार्थिषु मध्ये एतादृश मया नाद्यावधि नावलोकित । एतादृशो एवविध अल्पवयसि बाल्यावस्थायामेव ईदृशी अनल्पा विशाला धी विद्यते यस्य एवरूप भारतस्य भुवि अस्मिन्देशे न अभूत् न जात । अपि च न भविष्यति भाविन्यपि काले नोत्पत्स्यते इति भाव ॥ ६ ॥

तस्मिन् विषये कवि स्वमत प्रकटयति—

सत्य गुरोर्भगवत कृपया निरस्तभोगानुभूतिरनुभावितयोगभूति ।
नूनं कलिप्रभवमोहमहो निहन्तु सञ्जीवनं च्ययनकृत्पवनात्मजोऽयम् ॥ ७ ॥

सत्यमिति । इद तु यथार्थम् । यत् स नरेन्द्र गुरो भगवत श्रीरामकृष्णदेवस्य कृपया अनुकम्पया निरस्ता परित्यक्ता भोगस्य विषयोपभोगस्य अनुभूति अनुभव यन तथा अनुभाविता अनुभवविषयीकारिता योगभूति समाधरैश्वर्यं येन एतादृश नरेन्द्रनाथ नूनमित्युत्प्रेक्षायाम् कलिप्रभवम् अस्मिन् कलियुगे ज्ञानाभावेन विद्यमान मोहम् मूर्च्छाम् अज्ञानान्धकार निहन्तु नाशयितु सञ्जीवनीनाम्न्या लताया आश्रयणम् अन्वयन करोति एतच्छील अय पवनात्मज हनूमानिव स्थित यथा शक्त्याक्रान्त

लक्ष्मणस्य मूर्च्छापरिहारार्थं हनूमता सञ्जीवनी आनीता आसीत् तथैव नरेन्द्रनाथः वेदान्तनवमार्गोपदेशेन अज्ञानरूपिणीं जगन्मूर्च्छां नाशयितुमपरो हनूमानिव स्थितः इति भावः ॥ ७ ॥

अन्वेषणे कृतमतिः स चिरन्तनस्य संन्यस्य सर्वमचिरप्रभमित्यभिज्ञः ।
आद्यं सुदूरमपरं तु निरस्तमेवं रिक्तश्चिरादुभयतोऽप्यभवन्नरेन्द्रः ॥८॥

अन्वेषणे इति। स नरेन्द्रः चिरन्तनस्य सुखस्य भूमापरनामधेयस्य आनन्दस्य अन्वेषणे कृतमतिः निश्चितधीः। किं विधाय?—सर्वं जगति विद्यमानं वस्तुजातं भौतिकवस्तुसमूहं अचिरप्रभं चञ्चलचपलेव क्षणिकमिति अभिज्ञः संविदन्वितः संन्यस्य, एकतः अखिलजगद्गतवस्तुजातं क्षणिकमिति परित्यक्तम्। अन्यतश्च भूमसुखावाप्तये कृतनिश्चयः परमनधिगततत्सुखः उभयतो वञ्चित इव स्थितः। अनयोर्मध्ये आद्यं भूमानन्दावाप्तिः सुदूरम् एतावत्कालपर्यन्तं न प्राप्तम् कदा च प्राप्स्यते इत्यपि अनिश्चितम्। अपरं भौतिकवस्तुजातं तु निरस्तमेव परित्यक्तमेव तस्य क्षणिकावस्थितेः। एवमुभयतोऽपि वञ्चितः नरेन्द्रः चिरात् दीर्घकालपर्यन्तं रिक्तहस्त इव अभूत् ॥ ८ ॥

जातं समस्तमचिरस्थितिचस्तुजातं मिथ्याखिलं जगदिदं मृगतृष्णिकेव ।
सत्येवमक्षरसनातनसत्यलिप्सुर्ग्राह्यं निराकृतिमतं समशिश्रियत्सः ॥ ९ ॥

जातमिति। समस्तं संपूर्णं वस्तुजातं जगति विद्यमानं रूपस्पर्शादिकं अचिरा क्षणिका स्थितिः अवस्थानं यस्यैतादृशं तथा विविधवस्त्वाधारभूतम् इदं जगदपि मृगतृष्णिके मरीचिकेव 'मृगतृष्णा मरीचिका' इत्यमरः। मिथ्या असत्स्वरूपं मायामयमित्यर्थः। एवं सति अस्यामवस्थायां अक्षरम् अविनश्वरं सनातनमनन्तं यत्सत्यं भूमापरपर्यायं सुखं तत् लब्धुमिच्छुः। ग्राह्यं केशवचन्द्रसेनादिभिः प्रवर्तितं निराकृतिमतं निराकारोपासनामार्गरूपं मतं मार्गं सः नरेन्द्रः समशिश्रियत्। तदाश्रयेण कदाचित्सन्देहनिवृत्तिः निश्चयात्मिका सत्यप्राप्तिश्च भवेदित्याशयेत्यर्थः ॥ ९ ॥

चेदुद्भव-स्थिति-विनाश-निदानमेक-
स्तस्येशितुः किल दिदृक्षुपरोक्षता किम् ।
सन्तीह ये खलु परात्मनि विश्वसन्तः
सन्तः पुनः क्वचन पर्यनुयोगयोग्याः ॥ १० ॥

चेदुद्भवेत्यादि। चेद्यदि एकः अद्वितीयः उद्भवः स्थितिः अवस्थानं विनाशः प्रलयः एतेषामुत्पत्तिस्थितिविनाशानां निदानमादिकारणं 'निदानं त्वादिकारण'मित्यमरः। तस्य ईशितुः परमेश्वरस्य दिदृक्षूणां परोक्षता पारोक्ष्यं प्रत्यक्षदर्शनाभावः किं स्यात्! यदि तिष्ठति कश्चिदीशिता कथं तस्य प्रत्यक्षं न क्रियतेऽस्माभिरिति भावः। अतः मया किं कर्तव्यम्? इत्याकांक्षायामाह—ये सन्तः साधवः परात्मनि ईश्वरास्तित्वे विश्वसन्तः श्रद्धालवः इह जगति विद्यन्ते एतादृशाः साधवः जगति यत्र कुत्रापि भवेयुः त एवेदानीं पर्यनुयोगयोग्याः प्रष्टव्याः। तानेव गत्वा ईश्वरदर्शनं कथं भवेदिति प्रष्टव्यमिति भावः ॥ १० ॥

द्रष्टुं गतः स परमास्तिकसाधुवर्यान् प्रायः परेशविषये विहितापरोक्षान् ।
संकल्पवाञ्छितमनोरथसिद्धिहेतोः को वा प्रयत्नमपहातुमुपक्रमेत ॥११॥

द्रष्टुं गत इति। स नरेन्द्रः परमं यत्नम् आस्तिक्ये ईश्वरास्तित्वे श्रद्धावन्तः ये साधुवर्याः सन्तः तान् साधून्द्रष्टुं तद्दर्शनार्थं गतः प्रयातः। ये प्रायः बहुधा परेशविषये ईश्वरास्तित्वविषये विहितम् अपरोक्षप्रत्यक्षदर्शनं यैः एतादृशाः विभुना आसन् तान् प्रति उपयातः। नितान्तस्य आत्मनः मनोरथस्य अभिलाषस्य सिद्धिः सफलता तस्याः कृते कः उत्सुकः स्वप्रयत्नम् अपहातुं परित्यक्तुम् उपक्रमेत आरभेत न कोऽपीत्यर्थः। एकदा सनिश्चयः महान् फलप्राप्तिपर्यन्तं न कोऽपि स्वप्रयत्नं परित्यजतीति भावः ॥ ११ ॥

अभ्येतुमुत्सुकमभूद्विजशुद्धवृत्तिग्राहं तदीयहृदयं तमनन्तमाद्यम्।
शाखानदीं समुपगृह्य निजप्रवाहे यद्वन्महासरिदुपैति निधिं जलानाम् ॥१२॥

अभ्येतुमिति। तदीयं नरेन्द्रस्य हृदयम् अन्तःकरणं निजस्य आत्मनः शुद्धां निर्मलां या चित्तवृत्तिः तां गृहीत्वा शुद्धान्तःकरणवृत्तिरित्यर्थः। तं प्रसिद्धम् अनन्तम् अविनाशि आद्यं मूलकारणं सत्यज्ञानस्वरूपं ब्रह्म अभ्येतुम् अधिगन्तुम् उत्सुकम् उत्कण्ठितमभूत्। तत्र दृष्टान्तः यद्वत् यथा काचित् महासरित् महानदी निजप्रवाहे स्वकीयजलप्रवाहे शाखानदीं अपरां लघुनदीं समुपगृह्य अन्तर्भाव्य जलानां निधिं समुद्रम् उपैति प्राप्नोति। चित्तशुद्धिं विना भूमलाभाधिकारोऽसम्भव इति कृत्वा विमलान्तःकरणः स नरेन्द्रः तादृशसुखप्राप्तिमभिललाष इति भावः ॥ १२ ॥

प्रथमं ईश्वरदर्शनेच्छया ब्राह्मसमाजसंस्थापकं देवेन्द्रनाथठाकुरमुपययाविल्याह—

भागीरथी'जलगत प्लव'-सन्निवासं ध्यानप्रियं धृतमुनिव्रतमात्ततत्त्वम्।
देवेन्द्रनाथमुपगम्य नरेन्द्रनाथो भक्त्याऽन्वयुङ्क्त भवता ददृशे किमीशः ॥१३॥

भागीरथीति। भागीरथ्याः त्रिस्रोतसः जले गतः स्थापितः यः प्लवः नौका तत्र सन्निवासः वसतिः यस्य सर्वं परित्यज्य सुरनिम्नगाजलस्थतनौकानिवासम् इत्यर्थः। निरन्तरं ध्यानमेव निर्गुणविचार एव प्रियम् अभिलषितं यस्य, धृतं स्वीकृतं मुनेः व्रतं मौनं स्वीकृतमौनमित्यर्थः। आत्तं प्राप्तं तत्त्वं मर्म येन एतादृशं ब्राह्मसमाजसंस्थापकं महर्षिदेवेन्द्रनाथ-ठाकुरम् उपगम्य गत्वा नरेन्द्रनाथः भक्त्या भक्तिपूर्वकं तमन्वयुङ्क्त पृष्टवान्—महाशय! भवता ईशः ईश्वरः ददृशे दृष्टः किम्। 'अपि भवान्कृतेश्वरसाक्षात्कारः' इत्यन्वयुङ्क्त। ददृशे दृशधातोः कर्मणि लिट् ॥ १३ ॥

दीर्घं नरेन्द्रवदने निहितात्मचक्षुः प्रायो न वक्तुमुचितं स मुनिः समर्थः।
ब्रूते 'त्वदीयनयने विमले विशाले योगित्वसिद्धिविषये बलवत्प्रमाणम्' ॥१४॥

दीर्घमिति। स मुनिः धृतमौनव्रतः महर्षिदेवेन्द्रनाथः प्रायः बहुधा उचितं नरेन्द्रकृतानुयोगस्य योग्यमुत्तरं दातुमसमर्थः सन्। कृतेश्वरसाक्षात्कृतिस्तु 'आम, मया दृष्टः परमेश्वरः' इति वक्तुं तत्तु तेन न विहितम्। अपितु नरेन्द्रवदने भाविविवेकानन्दमुखे निहितं स्थापितम् आत्मनः चक्षुः दृष्टिः येन एतादृशो ब्रूते अब्रवीत् मौनं विहाय अवादीत्। 'त्वदीये तव इमे विशाले विस्तीर्णे नयने चक्षुषी योगित्वस्य भवान्महायोगी इति। सिद्धिविषये भवतः योगित्वसिद्धिविषये इत्यर्थः। बलवत् दृढतरं प्रमाणम्। यस्मात् तव चक्षुषी विमले विशाले च ततः भवान् महायोगी इत्यत्र नास्ति सन्देहः ॥ १४ ॥

महर्षिः तस्मै आशिषमपि ददाविल्याह—

यल्लोकसङ्ग्रहकृते तव सम्भवोऽयं भव्यो भवान् भुवि पुनर्भविता चिरेण।
आगत्य संशयनिरासचिराशयाऽसौ खिन्नो युवा निववृते निवरां निराशः ॥१५॥

यदिति। यत् यस्मात् तव नरेन्द्रस्य अयं सम्भवः जन्म केवलं लोकसंग्रहकृते विश्वजनीनकार्यार्थं विद्यते। भवतो मुखावलोकनेनैव ज्ञायते यत्त्वं महत् लोककार्यं कर्तुं समर्थः भवितासि। अचिरेण अल्पकालेनैव भवान् भुवि भूमण्डले भव्यः महान् भविता भविष्यति। परं नरेन्द्रनाथस्तु न तेन समाहितमना अभूदित्याह–असौ युवा नरेन्द्रः संशयस्य मनसि विद्यमानशंकाया निरासः निरसनं तस्य चिरं दीर्घकालपर्यन्तं स्थिताशया आगत्य महर्षिसमीपमेत्यनिराशः सन् शंकानिरसनं विनैव खिन्नः सचिन्तः निववृते गृहं प्रति निवृत्तः॥ १५॥

युग्मम्—

तत्कल्पनाजगति कोऽपि कषायवासा
भासा विभूषितवपुः स्मितपूर्वमाह।
'सीमातिगाश्रियमवाप्य विलासलास्या-
लस्यप्रधानमिह जीवितमीहसे किम्?॥ १६॥

स्वकल्पनाजगति महात्मानं बुद्धं ददर्शेत्याह–युग्मेन–तत्कल्पनेति। तस्य ध्यानस्थितनरेन्द्रस्य कल्पनाजगति बाह्यजगतः उपसंहृतविचारस्येत्यर्थः। कोऽपि अज्ञातः कषायं गैरिकवर्णं वासः वस्त्रं यस्यैतादृशः भासा दिव्यकान्त्या विभूषितम् अलंकृतं वपुः शरीरं यस्य तेजोमयशरीर इत्यर्थः। तस्य पुरतः आविर्भूय स्मितपूर्वं समन्दहासम् आह ब्रूते— त्वं सीमातिगां अमर्यादां श्रियं धनसम्पदम् अवाप्य प्राप्य विलासः विषयभोगः लास्यं नृत्यादिकं इत्यादिभिः आलस्यम् उद्योगराहित्यमेव प्रधानं मुख्यं यस्मिन्नेतादृशं जीवितं आयुर्यापनमीहसे किम् अथवा—

'संन्यस्य मित्र निमिषस्थिरमीशहेतोः
किं वा महान् भवितुमर्हसि लब्धलक्ष्यः।'
तद्गैरिकाम्बरधरस्य वचो निशम्य
तस्यान्तिकं समुपसर्तुमयं प्रवृत्तः॥ १७॥

संन्यस्येति। 'अथवा हे मित्र! प्रियसुहृत्! ईशहेतोः परमेश्वर-प्राप्ति-सिद्ध्यर्थं, निमिषस्थिरं शब्दस्पर्शादिसुखपूरितं क्षणिकं भौतिकं जगत् संन्यस्य परित्यज्य। लब्धमधिगतं लक्ष्यं प्राप्यवस्तु येनैतादृशः महान् लोकविश्रुतः भवितुमिच्छसि अभिलषसि किम्।' तत् एतादृशं गैरिकाम्बरधरस्य काषायवाससः वचः वचनं निशम्य श्रुत्वा अयं नरेन्द्रनाथः तस्य कल्पनाजगति दृष्टस्य महात्मनः अन्तिकं समीपमुपसर्तुं गन्तुं प्रवृत्तः आरेभे। स्वाभिलषितलक्ष्यविषये किमपि पर्यनुयोक्तुं तत्समीपमुपगन्तुमुपचक्रमे इति भावः॥ १७॥

तस्मिन्क्षणे निजतनूरुचिरांशुजालैर्विद्युत्प्रभाकवलितं गृहमादधानः।
स्थानादितो द्रुतपदं प्रययौ यतीन्द्रः पश्चात्तताप च पुनर्हृदये नरेन्द्रः॥१८॥

तस्मिन्निति। तस्मिन्क्षणे तदानीं निजायाः तन्वाः निर्गतं यत् रुचिराणि चारुतराणि अंशुजालानि किरणपरम्पराः तैः गृहं प्रकोष्ठं विद्युत्प्रभया सौदामिनीकान्त्या 'तडित्सौदामिनी विद्युत्' इत्यमरः। कवलितं ग्रस्तं परिपूर्णमित्यर्थः। आदधानः कुर्वाणः यतीन्द्रः काषायवासाः इतः अस्मात् स्थानात् यत्र नरेन्द्रेण तादृशः महात्मा दृष्टः आसीत् तस्मात् द्रुतानि अविलम्बितानि पदानि पादविन्यासो यस्य एतादृशः प्रययौ। अदृष्टो जातः तथा

नरेन्द्रः पुनः हृदये स्वान्तःकरणे पश्चात्तापं मया किमपि प्रष्टुं न शाकि इति खिन्नान्तः-करणः अभूदिति ॥ १८ ॥

नरेन्द्रस्य पश्चात्तापमेव वर्णयति—

हा ! हा ! किमर्थमुचितो गमितः प्रसङ्गः
　　सङ्गः सतां भवति यत्खलु नः शिवाय ।
प्राप्तो जिनः स्वयमिमं जनमुद्धरिष्यन्
　　गन्तुं ददे परमनेन तु दुर्भगेन ॥ १९ ॥

हा हा इति । हा हेति खेदे यदा अयं उचितः अनियोग्यः प्रसंगः स्वकल्याणप्राप्त्यवसरः गमितः फलप्राप्तिं विनैव गन्तुं दत्तः । यतः मनुष्यजीवने यदा कदाचित् सतां सङ्गः सज्जनैः सह संगतिः भवति । एतादृशी च सत्संगतिः नः अस्माकं शिवाय कल्याणाय कल्पते खलु इति निश्चये । इमं जनं मां नरेन्द्रमुद्धरिष्यन् योग्यमार्गोपदेशपूर्वकं ममोद्धारं करिष्यन् जिनः महात्मा बुद्धः एव प्राप्तः संदेहनिरसनार्थं मत्समीपमागतः परं वैपरीत्येन, अनेनेति आत्मानं प्रति अङ्गुल्या निर्देशः दुर्भगेन दुर्दैवाक्रान्तेन नरेन्द्रेण स कापाय-वासा गन्तुं ददे दत्तः डुदाञ् धातोः कर्मणि लिट् । स्वकल्याणप्राप्तेः सर्वोत्तमः प्रसङ्गः मया अपहारित इत्यहो ! मम दुर्भाग्यमिति भावः ॥ १९ ॥

किमर्थं स महात्मा मत्समीपमागत इत्याह—

भोगैर्धनैश्च विविधैरपि कर्मवृन्दैर्मन्दैर्न गाढतरतर्कवितर्कजालैः ।
त्यागेन केवलमिहामृततत्त्वलाभस्तथ्यं समर्थयितुमित्थमुपस्थितोऽयम् ॥२०॥

भोगैरिति । भोगैर्भौतिकविषयैः धनैः सम्पद्भिः विविधैः अनेकप्रकारैः नित्यनैमित्तिकादिकर्मणां वृन्दैः समूहैः तथा मन्दैः अज्ञानपूर्णैः विविधतर्कवितर्काणाम् अनुमानादीनां जालैः इह अस्मिंल्लोके अमृतत्वलाभः मुक्तिलाभः न भवति अपि तु केवलं त्यागेन एषणात्रयकर्मफलादिपरित्यागेनैव तादृशः अमृतत्वस्य लाभः शक्यः सम्भवः इत्यम् इत्याकारकं तथ्यं समर्थयितुं स्पष्टीकर्तुम् अयं सन्यासवेषधारी उपस्थितः मत्समीपमागतः ॥२०॥

ध्येयं स्थिरं स कृतवान् सुखमस्ति भूमा
　　स्वच्छं तथापि यमिदं पिदधाति तुच्छम् ।
तत्प्राप्तिपूर्वकमतो हितहेतवेऽहं
　　लोकस्य शोकमपसारयितुं यतिष्ये ॥ २१ ॥

ध्येयमिति । सः नरेन्द्रः ध्येयं ध्यातव्यं प्राप्तियोग्यं वस्त्वित्यर्थः । स्थिरं निश्चितं कृतवान् मया किं वस्तु प्रापणीयमिति निर्धारितेत्यर्थः । किं तदित्याह—स्वच्छं भूमैव सः यज्ज्ञानानन्तस्वरूपं सुखम् आत्यन्तिकसुखस्वरूपं विद्यते तथापि एतत्प्रकारकं स्वच्छं निर्मलमपि यद्भूमस्वरूपं महानन्दात्मकं सुखं विद्यते तत् सुखम् तुच्छम् आवरणात्मकं भौतिकं जगत् पिदधाति आच्छादयति । 'घनच्छन्नदृष्टिर्घनच्छन्नमर्कम्' इत्याद्युक्त्यनुसारं सदपि वस्तु असद्वस्तुनाच्छन्नं भवति अतः अहं नरेन्द्रः तस्य—( तादृशभूमसुखप्राप्तिपूर्वकं ) तत्सुखमधिगम्य—हितस्य जगत्कल्याणस्य हेतवे कारणाय लोकस्य जगतः शोक

दुःखमपसारयितुं यतिष्ये प्रयत्नं विधास्यामि। भूमसुखप्राप्तिपूर्वकं लोककल्याणार्थं यत्नशीलः भविष्यामीत्यर्थः ॥ २१ ॥

राज्यस्य राजभवनस्य च तुल्यकालं लक्ष्मीद्वयं सुखमनल्पमकल्पनीयम्।
सूनुं प्रसूनमधुरं धुरमन्वयस्य त्यक्त्वाखिलं किल महाजिन एक एव ॥२२॥

राज्यस्येति। राज्यस्य धनधान्यसमृद्धायाः भूमेः तथा राजभवनस्य राजप्रासादस्य, इति लक्ष्मीद्वयं राज्य-राजप्रासाद-स्वरूपद्विविधां लक्ष्मीम्। अनल्पं महत् अकल्पनीयं कल्पनातीतं सुखं भोगविलासोद्भवानन्दः अन्वयस्य वंशस्य धुरं वोढारं प्रसूनमिव पुष्पमिव कोमलं सूनुं पुत्रम् एतानि सकलान्यपि वस्तूनि तुल्यकालमेकसमयावच्छेदेन त्यक्त्वा परित्यज्य यः महाजिनित्युच्यते स संसारे एक एव अद्वितीयः एतादृशः न कोऽप्यन्यः इति भावः। तं महात्मानमपि परित्यज्य स्वसंदेहनिरसनं कर्तुमलं न जात इत्यहो दुर्भाग्यम्। बुद्धदेवस्य नरेन्द्रजीवने महान् प्रभाव आसीत् ॥ २२ ॥

दत्तः क्षणं स परितो निजमातृभूमौ दत्तेक्षणोऽथ दयनीयदशां ददर्श।
धर्मप्रसारविधिसंकुचितेक्षणत्वं श्रद्धान्धता च परमा किमहो जनानाम् ॥२३॥

दत्त इति। अथ अनन्तरं स दत्तः नरेन्द्रनाथदत्तः समंतात् निजमातृभूमौ भारतवर्षे क्षणं क्षणकालपर्यन्तं दत्तेक्षणः प्रेरितनयनः स दयनीयाम् अतिकष्टपूर्णाम् अवस्थां ददर्श दृष्टवान् किं दृष्टवानित्याह—जनानां लोकानां धर्मप्रसारविधौ वैदिकधर्मप्रसारकार्ये संकुचितेक्षणत्वम् कूपमण्डूकवृत्तित्वं तथा परमा अत्यधिका श्रद्धायोग्यविषये अन्धता अन्धश्रद्धता 'अन्धेनैव नीयमाना यथान्धाः' इति न्यायेन अक्षिणी निमील्य अज्ञानिजनानुसरणं सर्वत्र अवलोक्यते इत्यहो आश्चर्यम् ॥ २३ ॥

आर्याः पुरा विविधनीवृदनुक्रमेण सभ्यत्व-संस्कृति-शुभाचरणप्रचारैः।
सद्धर्मतत्त्वमुपदिश्य समग्रविश्वं भ्रातृत्व-साम्य-करुणाभरणं वितेनुः ॥२४॥

आर्याः पुरेति। पुराकाले आर्या एतद्देशीया वैदिककालीना आर्याः अत्र मनुः—'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'। तस्मिन् समये भूतले सर्वदेशीयजना आर्यावर्तमेवागत्य स्वस्वधर्माचरणमधीतवन्तः। विविधा अनेके नीवृतः देशाः तेषामनुक्रमेण क्रमशः सर्वेष्वपि देशेषु 'कृण्वन्तो विश्वमार्यम्' इति वचनानुसारं सभ्यत्वम् शान्तिपूर्वकसमाजस्थापनेन नगरादिनिवासरूपा सभ्यता संस्कृतिः विद्याकलादीनामुन्नतिः शुभाचरणं निर्मलाचरणमार्गः एतेषामार्यगुणविशेषाणां प्रचारैः सार्वत्रिकोपदेशैः सतः सनातनस्य धर्मस्य समाजधारणहेतुस्वरूपस्य। 'धारणाद्धर्म उच्यते' इति धर्मशब्दस्य व्युत्पत्तिः। समग्रं सम्पूर्णं विश्वं जगत् भ्रातृत्वं विश्वबन्धुत्वं साम्यं मानवसमानता करुणा भूतेषु दयाभावः एतान्येव आभरणानि अलंकारा यस्यैतादृशं वितेनुः विदधुः ते तु आर्याः सर्वस्मिन्नपि विश्वे धर्मप्रचारकार्यं चक्रुः अधुना तु केवलं संकुचितदृष्टयः कूपमण्डूका इव स्वकीयमेव लघुतमं कूपं समुद्रं मन्यमाना न किमपि कर्तुमलमिति भावः ॥ २४ ॥

प्रत्यक्प्रथानुकरणं बहु मन्यमाना मानापमानरहिताश्च हिताहितेषु।
मास्तात्मगौरवकथाः कलहप्रियत्वात् कुर्वन्ति रौरवमहो भुवि भारतीयाः ॥२५॥

वयं केवलं परानुकरणतत्परा जाता इत्याह—

प्रत्यक्प्रयेति । प्रत्यक्प्रया पाश्चात्यमार्गं आधुनिकशिक्षावेशभूषादिविषये पाश्चात्यमार्गस्यानुकरणमेव बहु मन्यमाना सादरमवलोकयन्त आधुनिकभारतीयजना स्वहिताहितेषु निजकल्याणाकल्याणविषये मानापमानरहिता केन मार्गेण अस्माकं हितं स्यात् केन वा न इत्यादिविचारशून्या इत्यर्थः । सारासारविचाररहिता इति यावत् । भारती परित्यक्ता आत्मनः प्रपगात्मनः कथा यैः केवलं परेषु एव परपरकलिरेव प्रिय इष्टः येषां ते भारतीयजना भुवि रौरवं नरकं उपपादयन्ति ॥ २५ ॥

प्राचीनभारतकविप्रतिभाप्रभावाद् विश्वं चरित्रशिवशान्तिपरं बभूव ।
नूनं विना सदुपदेशकदेशिकेन्द्रैर्जातं तदद्य परितो विपरीतमेव ॥ २६ ॥

प्राचीनभारतेति । प्राचीने पुराणे भारते तत्र विद्यमाना ये कवयः विद्वांसः तेषां प्रतिभाप्रभावात् नवोन्मेषशालिबुद्धिसामर्थ्यात् सपूर्णं चरित्रशिवशान्तिपरं सदाचार-कल्याण-कलहाभावयुक्तं बभूव आसीत् तदेव विश्वं सदुपदेशकैः योग्योपदेशकर्तृभिः तथा देशिकेन्द्रैः आचार्यश्रेष्ठैः विना परितः विपरीतमेव पूर्वतः विरोधिगुणयुक्तमेव जातम् ॥२६॥

या भारताद्धरिपदाज्जनिमागताभूत् प्रागन्यगुत्तरपथैरनिशं स्रवन्ती ।
कल्याणहेतुरुपदेशसुरस्रवन्ती सादृश्यतां किमुगताऽद्य सरस्वतीव ॥ २७ ॥

या भारतादिति । या सुरस्रवन्ती उपदेशरूपिणी योग्यशिक्षास्वरूपा कल्याणहेतुः भागीरथी भारतादार्यावर्तरूपात् हरिपदात् विष्णुनिवासस्थानात् अथ च हरिपदात् विष्णुपदादाकाशात् 'वियद्विष्णुपदं वा तु पुस्याकाशविहायसी' इत्यमरः । जनिमुत्पत्तिमागता प्राक् प्रत्यक् उत्तरः इति त्रिविधैर्मार्गैः स्रवन्ती वहन्ती । अस्मादेव भारतात् पुरा तिसृष्वपि दिक्षु ज्ञानगंगा प्रवाहिता अभूदिति भावः सा ज्ञानगंगा अद्य सरस्वतीव अदृश्यतां किन्तु गता इति प्रश्नः । तदा तु ज्ञानगंगया सर्वत्रैव वहन्त्या भाव्यम् तत्तु न जातम् । अनुप्रासोऽलंकारः ॥ २७ ॥

या ज्ञानदिव्यतटिनी भरतस्य भूमे-
विष्णोः पदाज्जनिमवाप्य सहस्रधारम् ।
आशासु लोकनिवहेष्वनिशं भ्रमन्ती
त्रिस्रोतसं जितवती क नु सा प्रयाता ॥ २८ ॥

तदेवान्यप्रकारेण वर्णयति—या ज्ञानेत्यादिना । या ज्ञानस्वरूपिणी दिव्यतटिनी भागीरथी भरतस्य दुष्यन्तपुत्रेण पालितायाः भूमेः विष्णोः पदात् जनिमुत्पत्तिमवाप्य सहस्रं धारा यस्मिन्यथा तथा आशासु सर्वासु दिक्षु भ्रमन्ती गंगा तु त्रिपथगैव वर्तते परमिय भारतविष्णुपदाद्विसृता ज्ञानगंगा सहस्रप्रवाहैः वहन्ती सर्वत्र प्रसृता अत एव सा भागीरथीमपि जितवती सा ज्ञानसरित् अद्य क प्रयाता इति न ज्ञायते ॥ २८ ॥

कल्लोललोलजलधेर्मथनोत्थितानि यान्यापिरे भरतभूप्रभवैर्हितानि ।
रत्नानि तानि कमलामृतकल्पवल्ल्यो नष्टान्यतो वयमभूम दरिद्रहीनाः ॥ २९ ॥

कल्लोलेत्यादि । कल्लोलैः उल्लोलैः 'महत्सूल्लोलकल्लोलौ' इत्यमरः । लोलः चञ्चलः जलधिः समुद्रः तस्य सुरासुरैः देवदानवैः प्राच्यप्रतीच्यैरित्यपि ध्वन्यते । तस्य यन्मथनं तस्मा-

दुस्थितानि उद्धृतानि यानि हितानि कल्याणहेतूनि लक्ष्मीकौस्तुभपारिजातादीनि चतुर्दशरत्नानि भारतभूप्रभवैः भारतीयैरापिरे प्राप्तानि तानि कमला लक्ष्मीः अमृतं सुधा कल्पवल्ली इच्छापूर्तिकरी कल्पलता एतदभिधानकानि रत्नानि पुरा वयं लक्ष्मीसम्पन्ना दीर्घायुषः इष्टवस्तुप्राप्तिसमर्था आस्म तानि रत्नानि भारतादधुना नष्टानि अत एव वयमधुना दरिद्रा दुर्गता हीनाः नीचाश्च अभूम इत्यहो दुर्दैवम्। अस्माभिः पुनरपि गतवैभवप्राप्त्यर्थं सोद्यमैर्भवितव्यमिति भावः ॥ २९ ॥

मुक्तालसत्वमृषिभिर्भवबन्धमुक्तैर्यैर्धर्मसत्यचरितास्तिकताख्यमुक्ताः ।
वेदाब्धिगाहकरगा इव मुक्तहस्तं मुक्ताः पुरा जनपदेष्विह तेऽपि मुक्ताः ॥ ३० ॥

मुक्तालसत्वमिति। भवबन्धमुक्तैः संसारबन्धनादधिगतमुक्तिभिः यैः ऋषिभिः पूर्वाचार्यैः मुक्तं परित्यक्तम् आलस्यं यस्मिन्निति अव्ययीभावः आलस्यपरित्यागपूर्वकमित्यर्थः। धर्मः स्वात्मानुभूतिमार्गः, सत्यं सत्यवचनं चरितं सच्चरितम् आस्तिकता ईश्वरास्तित्वविषयिणी श्रद्धा इति आख्या यासाम् एतादृशा मुक्ताः मौक्तिकानि, वेदा एव अब्धिः समुद्रः तत्र यः गाहः अन्तःप्रवेशः तेन करगाः करप्राप्ताः इवेत्युत्प्रेक्षा ता मुक्ताः, मुक्तः प्रतिबन्धरहितः हस्तः दानसाधनं यस्मिंस्तथा अप्रतिबन्धमित्यर्थः। सर्वदेशेषु भूमण्डले सर्वेष्वपि देशेषु मुक्ताः विभक्ताः विकीर्णा इति यावत्। यैः आर्यऋषिभिः भूमण्डले सदुपदेशमुक्ताफलानि कमपि प्रतिबन्धं विना विकीर्णानि ते पूर्वाचार्या अपि मुक्ता मुक्तिमधिगतवन्तः। अधुना तेषां कार्यं पुरः सारयितुं न कोऽप्यवशिष्टः इति भावः ॥ ३० ॥

वर्णाश्रमार्थनिवहेषु चतुर्दशत्वं युज्येत यत्तु गुणकर्मविभागपूर्वम् ।
भेदप्रभेदविधिपल्लवितानि दीर्घजातिप्रथाप्रभवजर्जरितः समाजः ॥ ३१ ॥

वर्णाश्रमेति। वर्णाः ब्राह्मणाद्यः आश्रमाः ब्रह्मचर्यादयः अर्था धर्मादयः पुरुषार्थाः तेषां समूहेषु चतुर्दशत्वं चतुरवस्थात्वं यदस्ति तद् युज्यते योग्यमेव परंतु तदपि गुणकर्मविभागपूर्वम् यस्यां व्यक्तौ ज्ञानस्य पराकाष्ठा स ब्राह्मणः। 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति गीतासु। भेदाः वङ्गब्राह्मणः महाराष्ट्रब्राह्मणः एवं शाखाभेदोऽपि तेषां विधिः प्रकारः तेन पल्लविता विस्तारं प्राप्ता या अतिदीर्घा जातिप्रथा जातिपद्धतिः। तस्याः प्रभवेण उत्पत्त्या सम्पूर्णः हिन्दुसमाजः जर्जरितः अत्यधिकं निर्बलीकृतः ॥ ३१ ॥

सच्छास्त्रशस्त्रबलशालिनि भारतेऽस्मि-
न्ज्ञानार्जनेऽखिलजनाः सदृशाधिकाराः।
नीचोच्चता [redacted] खलु जन्मगतो गुणोऽयं
स्पृश्योऽयमेष न तथा नहि राष्ट्रलक्ष्म ॥ ३२ ॥

सच्छास्त्रेति। सन्ति समीचीनानि शास्त्राणि न्यायदर्शनादीनि शस्त्राणि शतघ्न्यादीनि एतेषां शास्त्रशस्त्राणां बलं सामर्थ्यं तेन शालिनि युक्तेऽस्मिन् भारते ज्ञानार्जने अध्यात्मज्ञानप्राप्तिविषये अखिलाः सर्वे जनाः सदृशाः समानाः अधिकाराः येषामेतादृशा आसन् वर्तमानेऽपि तथैव स्युः। तत्र नीचोच्चता जातिगतलघुत्वमहत्त्वादिकं न जन्मगतगुणः 'जन्मना जायते शूद्रः' इति जन्मना सर्व एव शूद्राः, शिक्षादिसम्पादनेन उच्चता भवेत्। स्पृश्यास्पृश्यता राष्ट्रस्य चिह्नं न भवितुमर्हति ॥ ३२ ॥

प्राची तु विस्मृतनिजात्ममयस्वरूपा रूपादिवाह्यविषयैकपरा प्रतीची ।
एवं विलोक्य तमसावृतशुद्धभावां भावप्रभावमलिनां भुवमस्मि दून ॥३३॥

प्राची त्विति । प्राची पूर्वदिक् विशेषत भारत विस्मृत विस्मरणविषयीकृतम् आत्ममय कूटस्थमय स्वभाव यथैतादृशी संवृत्ता । भारतेऽध्यात्मज्ञानस्यैव प्राधान्यमासीत् अस्ति भविष्यति च तच्च अस्माभि विस्मृतप्रायम् । तथा प्रतीची पश्चिमा दिक् रूपादिवाह्यविषयैकपरा केवल भौतिकविचारसम्पन्ना । इत्थ भुव सर्वं जगत् तमसावृतशुद्धभावां अज्ञानान्धकाराच्छन्ना तथा भावप्रभावमलिनां भौतिकवादप्रभाविता विलोक्य भृशमतिशय दून दुःखित अस्मि ॥ ३३ ॥

इत्थं समुज्झितनिजार्थमतेर्नितान्तं
चिन्ताशतै परिवृतस्य जगद्धितार्थम् ।
स्वाप क्षणादिव विरोधितया प्रयात
प्राय क्षयोन्मुखबल सबलोऽस्य काय ॥ ३४ ॥

इत्थमिति । इत्थमनेन प्रकारेण नितान्तम् अत्यन्त समुज्झितनिजार्थमते परित्यक्तस्वार्थबुद्धे जगद्धितार्थं जगत्कल्याणाय चिन्ताशतै उत्कण्ठाशतै परिवृतस्य परित आवृतस्य तस्य नरेन्द्रस्य स्वाप निद्रासुख विरोधितया नरेन्द्रेण सह वैरभावेनेवेत्युत्प्रेक्षा क्षणादिव प्रयात निद्रामपि न लेभे इत्यर्थ । तथा प्राय बाहुल्येन अस्य सबलोऽपि काय क्षयोन्मुखबल यस्य ह्रासोन्मुखशक्ति जात इति शेष ॥ ३४ ॥

प्रत्यूह-संहति निरास-चिराशयाऽसौ कं सद्गुरुं समुपगच्छतु संदिहान ।
क सूचिभेद्यतमसावृतनैजमार्गे निर्देशकत्वमुपयातु गृहीतदीप ॥३५॥

प्रत्यूहेत्यादि । प्रत्यूहाना मार्गस्थितविघ्नाना संहति, समूह तस्य निरास निरसन तस्य आशा अभिलाष तया आशया असौ वर्तमाने प्राय असहाय नरेन्द्र संदिहान सविद्यमानम । समुपसर्गसंयुक्तात् दिह धातो शानच् । क कीदृश सद्गुरुं योग्यमार्गदर्शक समुपगच्छतु उपयातु सूचिभेद्यम् अतिघन तम अज्ञानान्धकार तेन आवृत आच्छन्न नैज स्वकीय मार्ग तस्मिन्नन्धकारावृतगन्तव्यमार्गे गृहीत हस्तधृत दीप प्रदीप येन एतादृश क आचार्य निर्देशकत्वमुपदेशकत्वमुपयातु प्राप्नोतु । एतादृश कमपि देशिकेन्द्र प्राप्स्यामि न वेति संदेह गाजीपुरस्थ कश्चिन्महात्मा पवारीबाबा प्रथम तस्य मनसि गुरुत्वेन वृत आसीत्, परमनन्तर दिव्यानुभव सहजसमाधि परमहंसदेव एव वृत ॥३५॥

ईश प्रसंग-वशतः क्वचिदर्थित सन्
प्राप्त सुरेन्द्रभवने किल रामकृष्ण ।
रामेण केनचिदिहाप्तजनेन सार्धं
मुत्कण्ठितेन मनसा गतवान्नरेन्द्रः ॥ ३६ ॥

ईशप्रसंगेति । ईशप्रसंगवशात भगवद्भजनादिप्रसंगवशात् क्वचित्कुत्रचित् स्थाने परमभक्तगृहे अर्थित अत्यादरपूर्वकप्रार्थित सन् रामकृष्ण श्रीरामकृष्णदेव प्राप्त आगत । नरेन्द्रोऽपि रामेण एतन्नामकेन केनचिदाप्तजनेन सार्धं समुत्कण्ठितेन मनसा औत्सुक्य-

पूर्णान्तःकरणेन तत्र गतवान्। कीदृशः स महात्मा इति मया द्रष्टव्यः इत्यौत्सुक्य-कारणम् ॥ ३६ ॥

निःस्वो निरक्षर इति प्रथितः समन्तात्
कालीसमर्चनविधौ सततं नियुक्तः।
जानाति कः स भविताऽद्य विवेकयूनो
विश्वासभूमिरिव तर्कवितर्कशक्तेः ॥ ३७ ॥

निःस्व इति। निःस्वः दरिद्रः निरक्षरः कंप्वपि विद्यालयादिषु अनधिगतविद्या-ध्ययनः इति समन्तादभितः प्रथितः ज्ञातः कालीसमर्चनस्य दक्षिणेश्वरमन्दिरे भवता-रिण्याः पूजने सततं निरन्तरं नियुक्तः। एतादृशः केवलं 'पुरोहितः' इति ज्ञातः दरिद्रः अशिक्षितश्च अद्य वर्तमाने विवेकयूनः आंग्लविद्यालये दर्शनादिविषयाध्ययनतत्परस्य नवयुवकस्य तर्कवितर्कशक्तेः साधकबाधकप्रमाणानि विना कुत्राप्यकृतविश्वासस्यापि विश्वासभूमिः श्रद्धापात्रं भविता भविष्यति इति को जानाति एतादृशी घटना तु प्रायः असम्भाविनी इति आपाततः दृश्यते ॥ ३७ ॥

न क्वापि यो गुरुकुलं क्षणमध्युवास
वासोऽपि सम्यगिव धारयितुं न शेके।
ग्रन्थांश्च धर्मविषयानपि पेठिवान्नो
येनापहर्तुमलमेष नरेन्द्रचक्षुः ॥ ३८ ॥

न क्वापीति। यः श्रीरामकृष्णदेवः कुत्राऽपि गुरुकुले पाठशाल्यादिषु क्षणं कामिचिद्दिना-न्यपि न अध्युवास पठनार्थं वासमकरोत्। गुरुकुलमित्यत्र 'उपान्वध्याङ्वसः' इति कर्म-मित्यत्र च 'कालाध्वनोरत्यन्तसंयोगे'-इत्यादिना द्वितीया। यश्च सम्यक् स्ववासोऽपि वस्त्रमपि धारयितुं न समर्थः। यश्च धर्मविषयान् धार्मिकान् ग्रन्थानपि न पेठिवान् न पपाठ। पठ्धातोर्लिटि क्वसु एत्वाभ्यासलोपौ। च येन कारणेन विद्यालये प्राप्तोच्चशिक्षस्य नरेन्द्रयूनः चक्षुः दृष्टिम् अपहर्तुम् आक्रष्टुम् अलं समर्थः स्यात्। परमिदं जातम्, तेन रामकृष्णदेवस्यालौकिकं सामर्थ्यं प्रकटीभवति ॥ ३८ ॥

परमहंसदर्शनार्थं विविधपथानुगामिनः शतशो जना आगच्छन्तित्याह—

तत्रागतान् सविदुषो धनिनो दरिद्रान्
ब्राह्मान् सनातनपथानथ खृष्टभक्तान्।
श्रीरामकृष्ण-गुणगानरतान् समीक्ष्य
जातं सविस्मयमतीव नरेन्द्रचेतः ॥ ३९ ॥

तत्रागतानिति। तत्र दक्षिणेश्वरे आगतान् प्राप्तान् सविदुषः सकोविदान् विद्वान् 'विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः' इत्यमरः। धनिनः धनाढ्यान् 'इभ्य आढ्यो धनी स्वामी' त्यमरः। दरिद्रान् निःस्वान् ब्राह्मान् ब्राह्ममतानुयायिनः सनातनपथान् वैदिकमार्गानुसारिणः खृष्टभक्तान् ख्रिस्तमतानुयायिनश्च एतान् विविधमार्गावलम्बिनः श्रीरामकृष्णदेवस्य गुणगानरतान् अलौकिकगुणवर्णनतत्परान् समीक्ष्य अवलोक्य

नरेन्द्रस्य चेतः अन्तःकरणम् अतीव अत्यधिकं सविस्मयं साश्चर्यं जातम्। कस्यचिद्दरिद्र-निरक्षरस्यापि दर्शनार्थमेतादृशा विपुला जना आगच्छन्ति इति नरेन्द्रस्याश्चर्यहेतु ॥३९॥

जनाः श्रीरामकृष्णदेवस्य गुणस्तुतिमकुर्वन्नित्याह—

देवोऽयमत्र नररूपधरोऽवतीर्णः
साक्षात् प्रभुः सकललोकहितस्य हेतोः।
निष्कामकाञ्चनमतिः श्रुतितत्त्ववेत्ता
छेत्ता महानभिनवो भवबन्धनस्य ॥ ४० ॥

देवोऽयमत्रेति। अत्र अस्मिँल्लोके देवः अयमित्यङ्गुल्या निर्देशः श्रीरामकृष्णदेवः साक्षात् प्रभुरेव परमेश्वरः विष्णुरेव नररूपधरः मानवरूपेण अवतीर्णः अवतारं गृहीतवान्। किमर्थमित्याह—सकललोकस्य सकलजगतः हितस्य कल्याणस्य हेतोः कारणादवतीर्णः। कीदृशोऽसौ निष्कामकाञ्चनमतिः विनिर्गतभोगधनादिविचारः श्रुतेर्वेदस्य रहस्यं तत्त्वं तस्य वेत्ता ज्ञाता, तथा अभिनवः नवावतीर्णः महान् श्रेष्ठः भवबन्धनस्य संसारबन्धस्य छेत्ता परिहारसमर्थः इति जनास्तस्य स्तुतिं चक्रुः यां नरेन्द्रः श्रुतवान् ॥ ४० ॥

धर्मस्य मूर्तिरयमुज्ज्वलदिव्यकीर्तिः
स्फूर्तिप्रदो विमलकर्मकृतेऽर्थपूर्तिः।
कान्तासु विश्वजननीमतिरेष शान्ता-
कारः करामलकसिद्धिसमाधिकान्तः ॥ ४१ ॥

धर्मस्येति। अयं देवः धर्मस्य सनातनवैदिकधर्मस्य साक्षान्मूर्तिः विग्रहः, उज्ज्वला अतिशयेन प्रकाशमाना दिव्या अलौकिकी च कीर्तिर्यस्य, अयं विमलकर्मकृते पवित्रकार्यकरणार्थं स्फूर्तिप्रदः प्रेरणादायकः। अर्थपूर्तिः धर्मार्थादिपुरुषार्थवरप्रदः। कान्तासु स्त्रीमात्रे विश्वजनन्याः दुर्गायाः मतिः विचारः यस्य वामाचारीषु कृतजगन्मातृबुद्धिः, किं बहुना येन स्वधर्मपत्नी श्रीशारदा मातापि भवतारिणीरूपेण पूजिता। शान्ताकारः प्रशान्ताकृतिः तथा करामलकसिद्धिसमाधिकान्तः करस्थापितामलकफलसदृशाः सिद्धयः अणिमाद्यष्टसिद्धयः निर्विकल्पसमाधिश्च तेन कान्तः सुन्दरः ॥ ४१ ॥

दत्तो निशम्य नुवतामिति दत्तचित्तां
वाचं पुनः प्रभुरभून्न स निर्णयार्थम्।
संवीक्ष्य तं नरवरं समचिन्ति तेन
साक्षात्कृतः किममुना कृतिनेश्वरः स्यात् ॥ ४२ ॥

दत्त इति। स दत्तः नरेन्द्रनाथदत्तः नुवतां स्तुतिं कुर्वतां भक्तजनानां दत्तचित्तां सौहार्दभक्तियुक्ताम् वाचं स्तुतिवाक्यानि निशम्य श्रुत्वा निर्णयार्थं निश्चयं कर्तुं प्रभुः समर्थः नाभूत्। तदैव तेन नरेन्द्रदेवेन तं नरवरं मानवश्रेष्ठं संवीक्ष्य समचिन्ति चिन्तितम् संपूर्वाच्चिन्तधातोः कर्मणि लुङ्। किमचिन्तीत्याह—अमुना कृतिना भाग्यवता नरवरेण ईश्वरः सर्वेश्वरो भगवान् साक्षात्कृतः प्रत्यक्षदर्शनगोचरी कृतः स्यात् किम् ॥ ४२ ॥

योगोऽयमस्य युगकारणरामकृष्णदेवेन योऽजनि शिवः स न भूतपूर्वः।
सूर्यात्मजा सुरसरिद्युगसंगमेन जातो ध्रुवं जगति नूतनतीर्थराजः ॥

योगोऽयमिति। युगस्य वर्तमानयुगस्योद्गतिहेतुभूतः श्रीरामकृष्णपरमहंसेन सह अस्य नरेन्द्रस्य योगः सम्मेलनं यः कल्याणकारी समजनि जातः स खलु अभूतपूर्वः पूर्वं कदापि न जातः अलौकिक इत्यर्थः। तदेव विशिनष्टि-सूरात्मजा सूरदुहिता यमुना 'कालिन्दी सूर्यतनया' इत्यमरः। तथा सुरसरिद् भागीरथी तयोर्युगं युगलं तस्य संगमेन भुवमिरयुत्प्रेक्षा। उक्तं च 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते'। इति। जगति विश्वे अयं नूतनतीर्थराजः प्रयागः जातः गंगायमुनयोः संगमेन यथा प्रयागाभिधः तीर्थराजः अजनि तथा अनयो रामकृष्णनरेन्द्रयोः संगमेन अयमपरस्तीर्थराजः अस्तित्वमागतः ॥ ४३ ॥

ज्ञानेन सार्धमुत विश्वशिवार्थमुच्चैर्विज्ञानसंगतिरिहाभिनवोदयेयम् ।
लोकस्य येन परमेश्वरशक्तिसंवित् स्यादुत्तरोत्तरपदैरुपचीयमाना ॥ ४४ ॥

ज्ञानेनेति। उत अथवा उभयोरयं योगः उच्चैः विश्वशिवार्थं जगतः सर्वश्रेष्ठकल्याणार्थं ज्ञानेन सार्धम् अध्यात्मसंविदा सह विज्ञानस्य शुद्धभौतिकज्ञानस्य संगतिः संगमः किमु ? कीदृशी। अभिनवोदया नूतनोद्भवा। येन संगमेन लोकस्य जगतः परमेश्वरशक्तिसंवित् ईश्वरः सर्वशक्तिमानिति ज्ञानम् उत्तरोत्तरपदैर्निरन्तरमग्रगामिक्रमवशादुपचीयमाना वर्धमाना स्यात्। आधुनिकविज्ञानेन सह अध्यात्मज्ञानसंयोगः अधिकाधिकास्तिक्य-बुद्धिहेतुः ॥ ४४ ॥

प्राक्प्रत्यगिद्धपृथगध्वविचारचारुधाराप्रपात-सदुदर्क-समञ्जसत्वम् ।
अद्यावधि प्रथितपण्डितमण्डलीभिरुद्घोषितं मुहुरसम्भवमेतदित्थम् ॥ ४५ ॥

प्राक्प्रत्यगिति। अथवा उभयोरिदं मेलनं प्राक्प्रतीच्योः पूर्वपश्चिमदिशोः इद्धौ पृथक् पार्थक्येन विद्यमानौ अध्वानौ पन्थानौ तयोः विचाराणां मतानां चारुः सुन्दरः धाराप्रपातः जलप्रपातः तस्य सदुदर्कः शुभफलदायकः 'उदर्कः फलमुत्तरम्' इत्यमरः। तस्य समञ्जसत्वं किमु सामञ्जस्यं समन्वयो वा। किमु इति वितर्के। यत्सामञ्जस्यं अद्य यावत् अद्यावधि प्रथितमण्डलीभिः प्रसिद्धपण्डितैः असम्भवमिति घोषितं निर्णीतमासीत्। पूर्वो तु पूर्वैव पश्चिमापि पश्चिमैव उभयोः सामञ्जस्यमसम्भवमिति मतं निराकर्तुमिवायमुभयोर्योगः ॥४५॥

तर्कोऽथवा समनुकूलतया स्थितः सन्
श्रुत्याऽन्वियाय किमु विप्रतिषेधशून्यः ।
पूर्वेण केवलमसत्प्रतिपत्तिरेवं
युक्तः परं स परया सहकारितात्मा ॥ ४६ ॥

तर्कोऽथवा। अथवा अनेन संगमेन तर्कः शुद्धानुमानादिसाधनः 'व्याप्यारोपेण व्यापकारोपस्तर्क' इति न्यायशास्त्रे। समनुकूलतया सहायकारितया अवस्थितः सन् विप्रतिषेध-शून्यः विरोधरहितः श्रुत्या ज्ञाननिधिना भगवता वेदेन सह अन्वियाय अनुगतः अनुपूर्वाद्-इण्धातोर्लिट्। केवलतर्कस्तु 'नैषा तर्केण मतिरापनेया' इत्युक्ते न ज्ञानकरणं यदि स एव तर्कः श्रुतिसहकारितासहितः चेद्भवति ज्ञानोत्पत्तिहेतुः, इति शांकरमतमपि। तत्र हेतु-पूर्वेण केवलतर्केण असत्प्रतिपत्तिः अमात्मकज्ञानमेव सम्भवेत् यथा शुक्तिखण्डे पूर्वरजत-

दर्शनस्मृत्या इदं रजतमिति भ्रमात्मकं ज्ञानं जायते। परं स एव तर्कश्चेच्छ्रुतिसहायकः सर्वज्ञानोत्पत्तिहेतुरिति ॥ ४६ ॥

आहोस्विदद्य मिलिता नवकर्मगंगा ज्ञानार्णवेन महता सह तादृशेन।
यस्मिन्छतान्यवतरन्ति तरंगिणीनां यत्रावगाहनवशादमृतत्वलाभः ॥ ४७ ॥

आहोस्विदिति। आहोस्वित् अथवा अद्य न वा कर्ममार्गस्वरूपिणी गङ्गा भागीरथी महता अतिविशालेन ज्ञानार्णवेन महाज्ञानमहासागरेण मिलिता संगता किमु। कीदृशेन ज्ञानार्णवेन श्रीरामकृष्णस्वरूपेण महता ज्ञानमहोदधिना। यस्मिन्महासागरे तरङ्गिणीनां अन्यनदीनां शतानि शतशः अवतरन्ति। ज्ञानप्राप्त्यर्थं शतशो भक्तजना अत्र आयान्ति। तथा यत्र गङ्गासागरसङ्गमे अवगाहनवशादमृतत्वलाभः मोक्षप्राप्तिर्भवति। रूपकोत्प्रेक्षयो संसृष्टिः ॥ ४७ ॥

युक्तोऽद्य साधनचतुष्टयवान्विवेको यद्ब्रह्मनिष्ठगुरुणा सदनीव युक्तम्।
अन्योन्यसंगतिरियं शिवजीवयुक्तिर्भूयाज्जयस्य भवतश्छरदः सहस्रम् ॥४८॥

युक्तोऽद्य इति। अद्य अस्मिन्दिने साधनचतुष्टयवान् नित्यानित्यवस्तुविचारादिसाधनचतुष्टयविशिष्टः विवेकः वर्तमाननरेन्द्रः भाविविवेकश्च सन्ब्रह्मनिष्ठगुरुणा परमहंसदेवेन युक्तः सगतः तदनीव युक्तम्। 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ'मित्युक्तत्वात् एतादृशः सगमः शिवजीवयोः जीवात्मपरमात्मनोः युक्तिः योगः भवतः समारस्य सहस्रं शरदः अनन्तकालपर्यन्तं भवतु कल्याणकारी भूयादित्याशीर्लिङ् ॥ ४८ ॥

अभ्यर्थितः परिचितप्रवरैर्नरेन्द्रो गातुं सुधामधुरमारभत प्रसन्नः।
स्थाय्यन्तरादिसरसस्वरवृन्दयोगात् सद्य सदः सदनमेतदभूत् सचित्रम् ॥

अभ्यर्थित इति। परिचितप्रवरैः सस्तुतश्रेष्ठैः। तत्रोपस्थितसज्जनेषु मध्ये इत्यर्थः। अभ्यर्थितः प्रार्थितः प्रसन्नः नरेन्द्रः सुधामधुरं अमृतमाधुर्ययुक्तं गातुम् आरभत उपचक्रमे। गीतेऽपि स्थायी आदितोऽन्तपर्यन्तं विद्यमानः मध्यमस्वरैर्गीतः रागविशेषः अन्तरा अनन्तरं गीताभ्यन्तरे गीयमानः स तारस्वरः गानाङ्गविशेषः तदादि सरसाः स्वराः निषादर्षभाद्यः तेषां वृन्दं मूर्च्छनादिकं तस्य योगात् सद्यः तच्छ्रवणादेव सर्वं सदः सदनं सचित्रम् आश्चर्यभावनापूरितमभूत् ॥ ४९ ॥

देवोऽपि कर्णमधुरस्वरगीतमुग्धः स्निग्धान्तरः सपदि भावपरो बभूव।
तं भाविनं यतिवरं नवविश्वधर्मवार्ताहरं च भुवि पर्यचिनोद्विवेकम् ॥ ५० ॥

देवोऽपि इति। देवोऽपि श्रीरामकृष्णदेवः अपि कर्णयोः श्रवसोः 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। मधुरस्वरगीतमुग्धः उत्तमस्वरमेलनविशिष्टगीतेन मोहितः स्निग्धान्तरः स्नेहपूर्णहृदयः सपदि तच्छ्रवणादेव भावपरः भावसमाधिलीनः बभूव जातः। तं भाविनं विवेकं भविष्यन्तं विवेकानन्दं यतिवरं यमिश्रेष्ठं भवे संसारे नवं नूतनं विश्वधर्मं वेदान्तापरपर्यायं सनातनधर्मं तस्य वार्ताहरं सन्देशवाहकं वेदान्तधर्मप्रसारकोऽयमिति पर्यचिनोत् अजानात्। अयमेव भूतले भारतीयोपनिषदः वेदान्तधर्मं प्रसारयिष्यति इति दिव्यदृष्ट्या ज्ञातवान् ॥ ५० ॥

स्नेहात् पुनस्त्वमुपयास्यसि दक्षिणेशं
तेनार्थितः स्वयमभूत् स नरेन्द्रनाथः ।
सोऽप्यादरादपचितोऽथ तथेति शिष्टा-
चारानुसारमभिधाय गृहं प्रतस्थे ॥

स्नेहादिति । स्नेहात् प्रेमपूर्वकं 'त्वं पुनः एकदा दक्षिणेश्वरं तत्स्थानस्थभवतारिणीमन्दिरं उपयास्यसि' इति वचसा नरेन्द्रनाथः तेन रामकृष्णदेवेन स्वयमात्मना अभ्यर्थितः प्रार्थितः अभूत् । पुनरपि त्वया दक्षिणेश्वरमागन्तव्यमिति तं प्रार्थितवानित्यर्थः । सोऽपि नरेन्द्रोऽपि आदरात् सादरं अपचितः पूजितः कृतसम्मानः शिष्टानां सुशिक्षितानाम् आचारः सदाचारनियमः समनुसृत्य 'तदा आगमिष्यामि' इत्यभिधाय स्वगृहं प्रतस्थे गतः ॥५१॥

सर्गसमाप्तिसामीप्यात् वृत्तं परिवर्तयति—

अथ सफलतरां वीक्ष्यांग्लभाषा-परीक्षा-
मकृत सुतविवाहायोजनं विश्वनाथः ।
परमयमिह भोगो योगमार्गान्तरायो
ध्रुवमिति जनकेच्छां नानुमेने नरेन्द्रः ॥

अथेति । अथ श्रीरामकृष्णदेवेन सह प्रथमदर्शनानन्तरं आंग्लभाषापरीक्षां एफ्० ए० (First Arts) अभिधां सफलतराम् उच्चकोट्यामधिगतसाफल्यां वीक्ष्यावलोक्य विश्वनाथः नरेन्द्रजनको विश्वनाथदत्तः सुतस्य आत्मजस्य विवाहस्य उद्वाहस्य आयोजनं कार्यविचारम् अकृत कृतवान् डुकृञ्धातोरात्मनेपदात् कर्तरि लुङ् । परमयं नरेन्द्रदत्तः इह विवाहप्रसङ्गे सति भोगः संसारासक्तिः योगमार्गे आध्यात्मिकोन्नतिपथेऽन्तरायो विघ्नस्वरूपः 'विघ्नोऽन्त-रायः प्रत्यूहः' इत्यमरः । ध्रुवम् निश्चयेन इति कृत्वा जनकस्य तातस्य इच्छाम् अभिलाषं नानुमेने न स्वीकृतवान् । गृहस्थाश्रमे स्वीकृते भोगः आध्यात्मिकोन्नतौ बाधास्वरूपः भविष्यति इति पितुरिच्छायां स्वानुमतिं न दत्तवान् । अत्र मालिनीवृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् ॥ ५२ ॥

जननभुवमहं स्वां नैककृच्छ्रातिभारां
क नु किमु समुपेक्ष्य स्वार्थहेतुर्भवेयम् ।
असुभिरपि मया सा सेवनीया त्विदानीं
मम ननु भविता किं शान्तिदो दक्षिणेशः ॥ ५३ ॥

जननभुवमिति । स्वां जननभुवं मातृभूमिं भारतवर्षमित्यर्थः । नैकानि अनेकानि कृच्छ्राणि परपादाक्रान्तत्व-स्पर्शास्पर्श-जातिभेद-दरिद्रतेत्यादीनि दुःखानि तेषामतिभारः यस्याः एतादृशीं जन्मभुवं समुपेक्ष्य उपेक्षितां विधाय क नु किं विषयमधिकृत्य अहं स्वार्थः निजप्रयोजनमेव हेतुर्लक्ष्यं यस्यैतादृशः भवेयं भविष्यामि न क्वाप्यन्यस्मि-न्विषये इत्यर्थः । तु इति पक्षान्तरे । इदानीमधुना काले सा मम मातृभूमिः असुभिरपि स्वप्राणैरपि सेवनीया सेवितुं योग्या । अस्मिन्विषये स्वमातृभूमिसेवनकार्ये दक्षिणेशः दक्षिणेश्वरः तत्स्थानस्थश्रीरामकृष्णपरमहंसः शान्तिं मनःसमाधानं ददाति किं चित्त-शान्तिप्रदायकः संपत्स्यते किमिति संदेहः । अत्रापि मालिनीवृत्तम् ॥ ५३ ॥

लोके मोहनमोहतं धृतविनाल्लोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
आर्येणाथ सुपर्वऽवाङ्मयसुधाचार्येण सेव्ये महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गो द्वितीयोऽप्यगात् ॥ ५४ ॥

इति त्र्यम्बकसूरिविरचिते श्रीविवेकानन्दचरिते संगमो नाम द्वितीयः सर्गः ॥२॥



लोके मोहेत्यादि । लोकमित्यारभ्य धर्मप्रधानाश्रये इत्यन्त पूर्वसर्गवत् आर्येण आर्यकुलोत्पन्नेन सुपर्वणां देवानां यद् वाङ्मयं सारस्वतं साहित्यमिति यावत् । तदेवामृतं तत्र आचार्येण संस्कृतसाहित्येऽधिगताचार्यपदवीकेनेत्यर्थः । अस्मिन्मेव्ये सर्वैरप्यादरणीये त्र्यम्बकसूरिणा विरचिते महाकाव्ये अयं द्वितीयः सर्गः समाप्तः ॥ ५४ ॥

इति 'त्र्यम्बकसूरिविरचित श्रीविवेकानन्दचरित-महाकाव्यटीकायां
'विवेकदीपाभिधानायां' द्वितीयः सर्गः ।



# तृतीयः सर्गः

अस्मिन् सर्गे श्लोकानां क्रमशः तृतीयाक्षरैः स्वामिनः निम्नोक्तमेकश्लोकात्मकं चरितं सम्पद्यते। तद्यथा—

शार्दूलविक्रीडितं वृत्तम्।

'शुद्धे दत्तकुले जनिर्गिरिपतौ धीर्भारतस्योन्नतौ
संकल्पोऽमलदक्षिणेश्वरगुरोः सत्तत्त्वबोधोदयः।
पाश्चात्येषु च विश्वधर्मकथनं श्रीरामकृष्णाश्रमैः
सेवा जीवहरेर्विवेकचरितं यत्पुण्यसंकीर्तनम्' ॥ १ ॥

मिथः शुभेनेदृशसंगमेन मेने गुरुर्धन्यमयं स्वयं सः।
अर्थं पुरः सारयितुं समर्थं शिष्यं विना व्याकुलतां प्रपेदे ॥ १ ॥

इदानीं 'दीक्षाप्राप्ति'रित्याख्यं तृतीयं सर्गमारभमाणः कविः नरेन्द्रदर्शनं विना श्रीरामकृष्णदेवस्य व्याकुलत्वं वर्णयति—मिथः इति। ईदृशेन एतत्प्रकारकेण शुभेन कल्याणहेतुना मिथः परस्परं संगमेन योगेन सः अयं जगत्प्रसिद्धः श्रीरामकृष्णदेवः गुरुः स्वयम् आत्मानं धन्यं मेने मतवान्। अर्थं विश्वसंदेशप्रसारात्मकं प्रयोजनं पुरः सारयितुं जगति प्रचारयितुं समर्थं योग्यतमं शिष्यं नरेन्द्रं विना व्याकुलतां एतावत्कालपर्यन्तं किमर्थं नायातः इत्याकारिकाम् उत्कण्ठां प्रपेदे प्राप्तवान्। चिरात्तं प्रतीक्षमाणस्तस्थौ इति भावः। अत्रेन्द्रवज्रोपेन्द्रवज्रोभयलक्षणमुपजातिनामकं छन्दः तल्लक्षणं तु 'अनन्तरोदीरित-लक्ष्मभाजौ' इत्यादि छन्दःशास्त्रोक्तमनुसन्धेयम्। अत उत्तरं सर्गसमाप्तिपर्यन्तमत्र 'अनुष्टुप्'श्लोकनामकं छन्दः ॥ १ ॥

प्रसिद्धे मिलिता आसन् मन्दिरे दक्षिणेश्वरे।
अनिशं शतशो भक्ता ज्ञानामृतपिपासया ॥ २ ॥

प्रसिद्धे इति। प्रसिद्धे विश्रुते दक्षिणेश्वरे मन्दिरे भवतारिणीमन्दिरे अनिशं निरन्तरं शतशः अनेके इत्यर्थः। भक्ताः श्रद्धावन्तः ज्ञानरूपं यदमृतं तत् पातुमिच्छया मिलिता एकत्रीभूता आसन् ॥ २ ॥

अगाच्चास्य नरेन्द्रोऽपि गङ्गातीरगतं पदम्।
उपविष्टः कटप्रान्ते गातुमारभतार्थितः ॥ ३ ॥

नरेन्द्रोऽपीति। नरेन्द्रोऽपि भाविविवेकोऽपि अस्य श्रीरामकृष्णदेवस्य गंगाया भागीरथ्यास्तीरे गतं विद्यमानं पदं स्थानं दक्षिणेश्वरम् अगात् अगमत्। तत्र गत्वा किं कृतवानित्याह—कटप्रान्ते वंशनिर्मितासनविशेषैकदेशे उपविष्टः गृहीतासन्दीकः अर्थितः 'किमपि गीतं गीयतामिति' प्रार्थितः स नरेन्द्रः गातुमारभत उपचक्रमे ॥ ३ ॥

किं तद्वानमित्याह—

क्व चित्त ! भ्राम्यसे व्यर्थं व्रज स्वात्मनिकेतनम् ।
कुतो भवविदेशेऽस्मिन्नध्वगस्त्वमितस्ततः ॥ ४ ॥

क्व चित्तेति । हे चित्त ! व्यर्थं निष्प्रयोजनं क्व कुत्र भ्राम्यसे ? स्वात्मनिकेतनम् यतः त्वमागतः तदेव स्थानं भगवन्तमित्यर्थः, व्रज गच्छ । निष्प्रयोजनसंसारभ्रमणापेक्षया स्वात्मभूमिं प्रति गमनमेव ते श्रेयः । कुतः कस्मात् कारणात् अस्मिन् भवविदेशे संसाररूपिणि परदेशे त्वम् इतस्ततः निश्चितलक्ष्यं विना अध्वगः पथिकः भवसि । संसारविदेशे निष्प्रयोजनमितस्ततो भ्रमणं वृथैवेति भावः ॥ ४ ॥

केऽमी कुत्साभुवः पञ्च रूपादिविषया विषम् ।
नापि सम्बन्धयोग्योऽसौ पञ्चभूतगणः स्वयम् ॥ ५ ॥

केऽमीति । अमी एते पञ्च विषयविषस्वरूपाः रूपादिविषयाः शब्दस्पर्शरूपरसगन्धात्मकाः कुत्सायाः निन्दायाः भुवः आस्पदभूताः के न केऽपीत्यर्थः । तथैव अमी निरन्तरदृग्गोचराः पञ्चानां भूजलतेजोगगनसमीरात्मकानां क्षणमपि अल्पकालमपि सम्बन्धस्य इन्द्रिययोगस्य योग्यः अर्हः न । पञ्चभूतानि पञ्चविषयाश्च वञ्चकस्वरूपा न सम्बन्धयोग्या इत्यर्थः ॥ ५ ॥

निर्मले प्रेम्णि कस्मात्त्वं ताटस्थ्यमवलम्बसे ।
संसर्गपरिहारश्च सज्जनैः सह नोचितः ॥ ६ ॥

निर्मले शुद्धे ईश्वरविषयकप्रेम्णि त्वं कस्मात् कुतः कारणात् ताटस्थ्यं तेन न किमपि मे प्रयोजनम् इत्याकारकविचारात्मिका तटस्थता किं किमर्थमवलम्बसे आश्रयसे तथैव सज्जनैः सह साधुभिः सार्धं संसर्गपरिहारः सम्बन्धत्यागोऽपि न उचितः न योग्यः । ईश्वरे निर्मलप्रेम तथा साधुसमागम एव ऐहलौकिककल्याणकारको मार्ग इति भावः ॥ ६ ॥

समाजं पथि साधूनां शान्तं श्रान्तः समाश्रय ।
तत्परामर्शतो ध्येयं भ्रान्तिश्चेत् परिभावय ॥ ७ ॥

समाजमिति । पथि अस्मिन्नीश्वरप्राप्तिमार्गे साधूनां सज्जनानां शान्तं शान्तिपूर्णं समाजं समूहं श्रान्तः अध्वनि भ्रमणफलस्वरूपेण यदि श्रान्तः शिथिलशरीरः तदा तादृशं साधुसमाजं समाश्रय आश्रयपदं कुरु । तत्रापि स्वगन्तव्यस्थानविषये यदि भ्रान्तिः सन्देहश्चेत् तेषां साधूनां परामर्शतः उपदेशात् ध्येयं गन्तव्यपदं परिभावय सम्यक्तया निश्चितं कुरु ॥

पथि त्वं निर्यन्तमभ्येति चेद्भयं स्मरशासकम् ।
सर्वगा शास्तिरस्यास्मादन्तकोऽपि भयं गतः ॥ ८ ॥

पथीति । पथि अस्मिन्भगवत्प्राप्तिमार्गे निर्यान्तं प्रस्थितं त्वां यदि कदाचित् भयं किञ्चिदपि साध्वसकारणमुदेति चेत् शासकं जगच्छासकं भगवन्तं स्मर स्मरणविषयीक्रियताम् । अस्य भगवतः शास्तिः शासनं सर्वगा सर्वव्यापिनी । तथा अस्मात् भगवतः अन्तकः मृत्युरपि भयं गतः बिभेतीत्यर्थः । स एव तव यावद्भयकारणपरिहारं कर्तुमलम् ॥

कया गिराभ्यर्थये त्वां स्वान्तं मम समाश्रय।
फल्गुतां किमु गन्ताऽह्नः प्रतीक्षे नित्यसन्निधिम्॥ ९॥

कया गिरेति। हे भगवन्! त्वामहं कया गिरा वचोभिः अभ्यर्थये प्रार्थयेयम्। प्रार्थनार्थं योग्यवाक्सामर्थ्यमपि न विद्यते तथापि मम स्वान्तमन्तःकरणं समाश्रय मम मनसि प्रविश्य त्वया तत्रैव निरन्तरं स्थेयमिति भावः। अह्नः प्रस्तुतदिवसः प्रार्थनायां कृतायामपि फल्गुतां निष्फलतां गन्ता किमु गमिष्यति किम्। इदं तु न भवितुमर्हति। अहं तव नित्यसन्निधिम् समीपावस्थानं प्रतीक्षे अभिलषामि॥ ९॥

अवारित-प्रवेशं मे स्थितं हृदयमन्दिरम्।
लोकनाथ! प्रविश्यादः सान्त्वय नाथ दुर्गतम्॥ १०॥

अवारितेति। इदं पुरतो लक्ष्यमाणं मे हृदयमन्दिरं तव निवासार्थं मम मानसमन्दिरं अवारितः प्रतिबन्धरहितः प्रवेशः अन्तःप्रवेशः यस्मिन् एतादृशं निरन्तरमुद्घाटितद्वारं विद्यते। हे लोकानाम् अनन्तकोटिब्रह्माण्डानां नाथ! नायक अदः उद्घाटितकपाटं हृदयमन्दिरं प्रविश्य अनाथं रक्षितृरहितं दुर्गतं संकटापन्नं च मां सान्त्वय मधुरशब्दैः विगतचिन्तं विधेहि॥ १०॥

अवाप गायकः प्रेम्णा भावावस्थामिव स्वयम्।
आपूरितमथास्थानं गानस्य मधुरैः स्वरैः॥ ११॥

अवापेति। गायकः गीतश्रावकः नरेन्द्रः प्रेम्णा गीतार्थविषये प्रेमातिशयेन स्वयम् भावावस्थामिव समाध्यवस्थामिव अवाप प्राप्तवान्। अथ गानस्य नरेन्द्रप्रस्तुतगीतस्य मधुरैः मिष्टैः स्वरैः गीतस्य कर्णस्वरैः आस्थानं सभागृहम् आपूरितं प्रतिध्वनितम्॥११॥

उभौ तौ क्षणतोऽभूतां क्षणं चित्रगताविव।
अहो मधुरकारं च समाधिं गुरुराविशत्॥ १२॥

उभौ ताविति। तावुभौ गुरुशिष्यौ क्षणतः मानसिकानन्दवशात् क्षणं क्षणकालपर्यन्तं चित्रगताविव चित्रन्यस्तपुरुषाकृती इव अभूतां जातौ। गुरुः परमहंसदेवश्च अहो! मधुरं गीतम् इति कृत्वा उक्त्वेत्यर्थः कृधातोर्णमुल् समाधिं निर्विकल्पसमाधिम् आविशत् प्रविष्टः॥

देवोऽधीर इवाहूय नरेन्द्रं निजसन्निधिम्।
तं चान्तर्गृहमानीय मिष्टं भोक्तुं प्रदत्तवान्॥ १३॥

देव इति। देवः श्रीरामकृष्णदेवः अधीर इव अत्युत्कण्ठित इव नरेन्द्रं निजसन्निधिं स्वसमीपमाहूय प्रार्थनां कृत्वा 'इतस्तावदागम्यताम्' इति प्रार्थ्य तथा तमन्तर्गृहं गृहाभ्यन्तरे आनीय प्रेम्णा हस्तग्राहम् आनीय नीत्वा तस्मै किञ्चिद् मिष्टं मिष्टान्नं भोक्तुं भक्षयितुं प्रदत्तवान् प्रतिपादितवान्॥ १३॥

'आविर्भावं तवावैमि लोककल्याणहेतवे।
चिरायितमृपे! कस्मादश्रुपूर्णेक्षणोऽब्रवीत्॥ १४॥

आविर्भावमिति। श्रीपरमहंसदेवः अश्रुभिः अस्रैः पूर्णे भृते ईक्षणे नयने यस्येतादृशः सन् अब्रवीत् उक्तवान् किमित्याह—हे ऋषे! तव नरेन्द्रस्येत्यर्थः। आविर्भावं भूलोके

अवतारं लोकानां भूतलवासिनां जनानां कल्याणहेतवे शिवार्थं जातः इत्यहमवैमि जानामि। परं त्वया कस्मात् कारणात् चिरायितम् आगमने विलम्बः कृत ॥ १४ ॥

किमारब्धमनेनेति नरेन्द्रश्चिन्तितान्तरः ।
सत्यमुन्माद एवायमसम्बद्धप्रलापतः ॥ १५ ॥

किमारब्धमिति। नरेन्द्र अनेन महात्मना इदं सर्वं किमारब्धमुपक्रान्तम् इति विचार्य चित्रित आश्चर्यभावनापूर्णम आन्तरं हृदयं यस्य एतादृशः अजनि। मनसि विचारयामास च असम्बद्धप्रलापतः असम्बद्धाः पूर्वापरसम्बन्धरहिताः प्रलापाः वचनानि तादृशवचनहेतोः अयम् एतस्य वचनपरिपाटी उन्माद एव उन्मत्तप्रलाप एव ॥ १५ ॥

परं त्वस्योपदेशेषु नासीत् किञ्चिदसङ्गतम् ।
एतदुक्तं वचोजातं भाति मेऽनुभवात्मकम् ॥ १६ ॥

परमिति। परमिति पक्षान्तरे तथापि अस्य महात्मनः उपदेशेषु यादृशाः उपदेशाः अनेन क्रियन्ते ईश्वरभक्तिविषयादिषु किञ्चिदपि किमपि असङ्गतं पूर्वापरसम्बन्धराहित्यात् उन्मत्तप्रलापसदृशम् नासीत् न प्रत्यभात्। एतत् एतेन उक्तं व्याहृतं वचोजातं सर्वाणि वचांसि मे मह्यम् अनुभवात्मकं साक्षात्कारस्वरूपं प्रतिभाति ॥ १६ ॥

अथास्य प्रोक्तिं समाकर्ण्य 'शक्यते द्रष्टुमीश्वरः ।'
कुतोऽप्यश्रुतपूर्वां सोऽमनाक्चित्रमना अभूत् ॥ १७ ॥

अथेति। अथानन्तरम् 'ईश्वरः द्रष्टुं प्रत्यक्षम् अवलोकयितुं शक्यते' इति अस्य परमहंसस्योक्तिं वचनं समाकर्ण्य निशम्य। कीदृशीमुक्तिं कुतोऽपि कस्माच्चिदपि अध्यापकात् पूर्वं श्रीपरमहंसदर्शनात् प्राक् अश्रुताम्, स नरेन्द्रः अमनाक् अतिशयेन चित्रपूर्णं मनः यस्य एतादृशः अद्भुतपूरितान्तःकरणः अभूत् जातः। पूर्वं तु मया कस्मादपि न श्रुतं यदीश्वरः द्रष्टुं शक्यते अनेन तादृशमाश्वासनं दत्तम् इत्यहो आश्चर्यम् ॥ १७ ॥

'प्रसन्नस्त्वां यथालोक्य सम्भाषणपरो मिथः ।
साक्षात्कृतेश्वरा एवं वार्तां कर्तुमलं वयम्' ॥ १८ ॥

प्रसन्न इति। यथा येन प्रकारेण त्वां नरेन्द्रम् आलोक्य मिथः परस्परं सम्भाषणे वार्तालापे परः आसक्तः अस्मीति शेषः। तथैव वयं साक्षात्कृताः प्रत्यक्षदर्शनविषयीकृताः ईश्वराः यैः एतादृशाः वार्तां कर्तुम् ईश्वरेण सह सम्भाषणादिकं विधातुम् अलं समर्थाः ॥ १८ ॥

'सम्पत्तौ पुत्रदारेषु संसक्ता विषयेषु च ।
तदभावे रुदन्त्येते नेशार्थं कोऽपि रोदिति ॥ १९ ॥

सम्पत्ताविति। सम्पत्तौ धनसम्पत्सु पुत्रदारेषु स्त्रीपुत्रादिषु च विषयेषु च शब्दस्पर्शादिभौतिकविषयेषु संसक्ताः आसक्ताः सर्वसाधारणजना इति शेषः। तदभावे धनसम्पत्पुत्रदारादीनामभावे एते रुदन्ति शोकाकुला भवन्ति। परंतु यादृशं दुःखं तैः पुत्राद्यभावे प्रकटीक्रियते तादृशं ईशार्थम् ईश्वरप्राप्त्यर्थं न कोऽपि रोदिति शोकाकुलः भवति ॥ १९ ॥

यदि सन्ततमेवेशो दृढं व्याकुलचेतसा ।
प्रतीक्ष्येत ध्रुवं मन्ये दृश्यते प्राप्यतेऽपि वा ॥ २० ॥

यदीति। यदि चेत् ईदृशः परमेश्वरः दृढं मनोनिग्रहपूर्वकं व्याकुलेन अत्युत्कण्ठितेन चेतसा अन्तःकरणेन प्रतीक्ष्येत ईश्वरप्राप्त्यपेक्षा क्रियेत तर्हि एवं निश्चयेन स परमेश्वरः दृश्यते प्रत्यक्षीक्रियते आप्यतेऽपि वा तेन सह वार्तालापोऽपि कर्तुं शक्यः। परन्तु तादृशेश्वरप्राप्तिविषये न कस्याप्यौत्कण्ठ्यं परिदृश्यते इति भावः ॥ २० ॥

परं त्वत्रस्तं प्रतीक्षेत साश्रुपातं समुत्सुकः।
वृथा संदेहसन्दोहदोहदो बालिशो जनः ॥ २१ ॥

परमिति। परमिति पक्षान्तरे परंतु तं परमेश्वरं समुत्सुकः उत्कण्ठापरः साश्रुपातं साश्रुनयनं यथा स्यात्तथा अश्रुसलिलपूर्णनयनः प्रतीक्षेत प्रतीक्षां कुर्वीत। एतदभावे जनः लोकः वृथा सन्देहाः निरर्थका ये संशयाः तेषां संदोहः समूहः स एव दोहदः अभिलषितं यस्य एतादृशः एव बालिशः वैधेयः जनः लोकः दृश्यते। साश्रुपातं ईश्वरदर्शनप्रतीक्षां न कृत्वा वृथैव सन्देहपूर्णमानसा बालिशा जना इतस्ततः दृश्यन्ते ॥ २१ ॥

नास्त्यल्पोऽपि विकल्पोऽसौ कृतसाक्षात्कृतिः स्वयम्।
श्रद्धेयो निर्मलस्वान्तः सोन्मादोऽपि महानयम् ॥ २२ ॥

नास्त्यल्पोऽपीति। अस्मिन्विषये अल्पोऽपि अंशतोऽपि विकल्पः सन्देहः न अस्ति यत् असौ महात्मा स्वयम् कृतः विहितः साक्षात्कारः कृतेश्वरप्रत्यक्षदर्शनः अस्ति। अत एव श्रद्धेयः विश्वासार्हः निर्मलं पवित्रम् अन्तः अन्तःकरणं यस्य एतादृशः वर्तते। निःसन्देहमयं कृतभगवत्साक्षात्कारः विद्यते अत एव उन्मादेन सह वर्तते इति सोन्मादः अपि आपाततः विक्षिप्तश्चित्त इति दृश्यमानोऽपि अयं परमहंसदेवः महान् 'महांश्चासौ पदवीमत्स्य' इत्यत्र न कोऽपि संदेहलेश इति भावः ॥ २२ ॥

इति मत्वा प्रयातस्य नरेन्द्रस्य मनस्तनू।
अधिकाधिकमाकृष्टे स्वयंवृत-गुरुं प्रति ॥ २३ ॥

इति मत्वेति। इति इत्थं पूर्वोक्तश्लोकवर्णनानुसारं मत्वा चिन्तयित्वा प्रयातस्य स्वनिवासस्थानं गतस्य नरेन्द्रस्य मनस्तनू शरीरमानसे स्वयंवृतः आत्मना एव निर्धारितः यः गुरुः देशिकाचार्यः तं प्रति अधिकाधिकम् उत्तरोत्तरमधिकमेव आकृष्टे आकर्षणविषयीकृते। गृहं गतस्यापि तस्य मनः शरीरं च पुनरागमनेच्छुके अभूतामिति भावः ॥ २३ ॥

शिथिलं तु गतस्येतो विद्याध्ययनसंकटात्।
भाषणाशनपानेषु तन्मयं तन्मनोऽजनि ॥ २४ ॥

शिथिलं त्विति। परन्तु इतः गुरुसकाशात् गृहं प्रति गमनानन्तरं तस्य नरेन्द्रस्य मनः विद्याध्ययनस्य पाठ्यक्रमपुस्तकादीनाम् अध्ययनमेव संकटम् अन्तरायः तस्माच्छिथिलम् उत्साहरहितं तथा भाषणम् अन्यैः सह वार्तालापः अशनं भोजनं पानम् इत्यादिष्वपि तन्मनः तन्मयं परमहंसगुरुविषयकविचारमयम् अजनि जातम्। विद्याध्ययन-संभाषण-भोजनादिष्वपि शिथिलादरो जातः इति भावः ॥ २४ ॥

तस्याव्वरः प्रवृद्धोऽभूद्रामकृष्णे निरन्तरम्।
मूल्यं शतगुणं रत्नं विज्ञातुर्लभतेऽधिकम् ॥ २५ ॥

अवतारं लोकानां भूतलवासिनां जनानां कल्याणहेतवे शिवार्थं जात इत्यहमवैमि जानामि। परं त्वदा कस्मात् कारणात् चिरायितम् आगमने विलम्बः कृत ॥ १४ ॥

किमारब्धमनेनेति नरेन्द्रश्चित्रितान्तरः ।
सत्यमुन्माद एवायमसम्बद्धप्रलापतः ॥ १५ ॥

किमारब्धमिति। नरेन्द्रः अनेन महात्मना इदं सर्वं किमारब्धमुपक्रान्तम् इति विचार्य चित्रितं आश्चर्यभावनापूर्णम् आन्तरं हृदयं यस्य एतादृशः अजनि। मनसि विचारयामास च असम्बद्धप्रलापतः असम्बद्धाः पूर्वापरसम्बन्धरहिताः प्रलापाः वचनानि तादृशवचनहेतोः अयम् एतस्य वचनपरिपाटी उन्माद एव उन्मत्तप्रलाप एव ॥ १५ ॥

परं त्वस्योपदेशेषु नासीत् किञ्चिदसङ्गतम् ।
एतदुक्तं वचोजातं भाति मेऽनुभवात्मकम् ॥ १६ ॥

परमिति। परमिति पक्षान्तरे तथापि अस्य महात्मनः उपदेशेषु यादृशाः उपदेशाः अनेन क्रियन्ते ईश्वरभक्तिविषयादिषु किञ्चिदपि किमपि असङ्गतं पूर्वापरसम्बन्धराहित्यात् उन्मत्तप्रलापसदृशम् नासीत् न प्रत्यभात्। यत एतेन उक्तं व्याहृतं वचोजातं सर्वाणि वचांसि मे मह्यम् अनुभवात्मकं साक्षात्कारस्वरूपं प्रतिभाति ॥ १६ ॥

अथास्य प्रोक्तिं समाकर्ण्य 'शक्यते द्रष्टुमीश्वरः ।'
श्रुतोऽप्यश्रुतपूर्वो सोऽमनाक्चित्रमना अभूत् ॥ १७ ॥

अथेति। अथानन्तरम् 'ईश्वरः द्रष्टुं प्रत्यक्षम् अवलोकयितुं शक्यते' इति अस्य परमहंसस्योक्तिं वचनं समाकर्ण्य निशम्य। कीदृशीमुक्तिं कुतोऽपि कस्माचिदपि अश्रुतपूर्वाम् एवं श्रीपरमहंसदर्शनात् प्राक् अश्रुताम्, स नरेन्द्रः अमनाक् अतिशयेन चित्रपूर्णं मनः यस्य एतादृशः अद्भुतपूरितान्तःकरणः अभूत् जातः। पूर्वं तु मया कस्मादपि न श्रुतं यदीश्वरः द्रष्टुं शक्यते अनेन तादृशमाश्वासनं दत्तम् इत्यहो आश्चर्यम् ॥ १० ॥

'प्रसन्नं त्वं यथालोक्य सम्भाषणपरो मिथः ।
साक्षात्कृतेश्वरा एवं वार्तां कर्तुमलं वयम्' ॥ १८ ॥

प्रसन्न इति। यथा येन प्रकारेण त्वां नरेन्द्रम् आलोक्य मिथः परस्परं सम्भाषणे वार्तालापे परः आसक्तः अस्मीति शेषः। तथैव वयं साक्षात्कृताः प्रत्यक्षदर्शनविषयीकृताः ईश्वराः ये एतादृशाः वार्तां कर्तुम् ईश्वरेण सह सम्भाषणादिकं विधातुम् अलं समर्थाः ॥ १८ ॥

'सम्पत्तौ पुत्रदारेषु संसक्ता विषयेषु च ।
तदभावे रुदन्त्येते नेशार्थं कोऽपि रोदिति ॥ १९ ॥

सम्पत्ताविति। सम्पत्तौ धनसम्पत्सु पुत्रदारेषु स्त्रीपुत्रादिषु च विषयेषु च शब्दस्पर्शादिभौतिकविषयेषु संसक्ताः आसक्ताः सर्वसाधारणजना इति शेषः। तदभावे धनसम्पत्पुत्रदारादीनामभावे एते रुदन्ति शोकाकुला भवन्ति। परंतु यादृशं दुःखं तैः पुत्राद्यभावे प्रकटीक्रियते तादृशम् ईशार्थम् ईश्वरप्राप्त्यर्थं न कोऽपि रोदिति शोकाकुलः भवति ॥ १९ ॥

यदि सन्ततमेवेशो दृढं व्याकुलचेतसा ।
प्रतीक्ष्येत ध्रुवं मन्ये दृश्यते भाष्यतेऽपि वा ॥ २० ॥

यदीति । यदि चेत् ईशः परमेश्वरः दृढं मनोनिग्रहपूर्वकं व्याकुलेन अत्युत्कण्ठितेन चेतसा अन्तःकरणेन प्रतीक्ष्येत ईश्वरप्राप्त्यपेक्षा क्रियेत तर्हि ध्रुवं निश्चयेन स परमेश्वरः दृश्यते प्रत्यक्षीक्रियते प्राप्यतेऽपि वा तेन सह वार्तालापोऽपि कर्तुं शक्यः । परन्तु तादृशेश्वरप्राप्तिविषये न कस्याप्यौत्कण्ठ्यं परिदृश्यते इति भावः ॥ २० ॥

परं कस्तं प्रतीक्षेत साश्रुपातं समुत्सुकः ।
वृथा संदेहसन्दोहदोहदो वालिशो जनः ॥ २१ ॥

परमिति । परमिति पक्षान्तरे परंतु तं परमेश्वरं समुत्सुकः उत्कण्ठापरः साश्रुपातं साश्रुनयनं यथा स्यात्तथा अश्रुसलिलपूर्णनयनः प्रतीक्षेत प्रतीक्षां कुर्वीत । एतदभावे जनः लोकः वृथा सन्देहाः निरर्थका ये संशयाः तेषां संदोहः समूहः स एव दोहदः अभिलषितं यस्य एतादृश एव वालिशः वैधेयः जनः लोकः दृश्यते । साश्रुपातं ईश्वरदर्शनप्रतीक्षां न कृत्वा वृथैव सन्देहपूर्णमानसा वालिशा जना इतस्ततः दृश्यन्ते ॥ २१ ॥

नास्त्यल्पोऽपि विकल्पोऽसौ कृतसाक्षात्कृतिः स्वयम् ।
श्रद्धेयो निर्मलस्वान्तः सोन्मादोऽपि महानयम् ॥ २२ ॥

नास्त्यल्पोऽपीति । अस्मिन्विषये अल्पोऽपि अंशतोऽपि विकल्पः सन्देहः न अस्ति यत् असौ महात्मा स्वयम् कृतः विहितः साक्षात्कारः कृतेश्वरप्रत्यक्षदर्शनः अस्ति । अत एव श्रद्धेयः विश्वासार्हः निर्मलं पवित्रम् अन्तः अन्तःकरणं यस्य एतादृशः वर्तते । निःसन्देहमयं कृतभगवत्साक्षात्कारः विद्यते अत एव उन्मादेन सह वर्तते इति सोन्मादः अपि आपाततः विक्षिप्त इति दृश्यमानोऽपि अयं परमहंसदेवः महान् 'महात्मपदवाच्य' इत्यत्र न कोऽपि संदेहलेश इति भावः ॥ २२ ॥

इति मत्वा प्रयातस्य नरेन्द्रस्य मनस्तनू ।
अधिकाधिकमाकृष्टे स्वयंवृत-गुरुं प्रति ॥ २३ ॥

इति मत्वेति । इति इत्थं पूर्वोक्तश्लोकवर्णनानुसारं मत्वा चिन्तयित्वा प्रयातस्य स्वनिवासस्थानं गतस्य नरेन्द्रस्य मनस्तनू शरीरमानसे स्वयंवृतः आत्मना एव निर्धारितः यः गुरुः दैशिकाचार्यः तं प्रति अधिकाधिकम् उत्तरोत्तरमधिकमेव आकृष्टे आकर्षणविषयीकृते । गृहं गतस्यापि तस्य मनः शरीरं च पुनरागमनेच्छुके अभूतामिति भावः ॥ २३ ॥

शिथिलं तु गतस्येतो विद्याध्ययनसंकटम् ।
भाषणाशनपानेषु तन्मयं तन्मनोऽजनि ॥ २४ ॥

शिथिलं त्विति । तु परन्तु इतः गुरुसकाशात् गृहं प्रति गमनानन्तरं तस्य नरेन्द्रस्य मनः विद्याध्ययनस्य पाठ्यक्रमपुस्तकादीनाम् अध्ययनमेव संकटम् अन्तरायः तस्माच्छिथिलम् उत्साहरहितं तथा भाषणम् अन्यैः सह वार्तालापः अशनं भोजनं पानम् इत्यादिष्वपि तन्मनः तन्मयं परमहंसगुरुविषयकविचारमयम् अजनि जातम् । विद्याध्ययन-संभाषण-भोजनादिष्वपि शिथिलादरो जातः इति भावः ॥ २४ ॥

तस्यान्तरः प्रवृद्धोऽभूद्रामकृष्णे निरन्तरम् ।
मूल्यं ज्ञातगुणं रत्नं विज्ञातुर्लभतेऽधिकम् ॥ २५ ॥

तस्यादर इति । श्रीरामकृष्णे तस्य आदरः पूज्यभावः निरन्तरम् अहर्निशं प्रवृद्धः वृद्धिं गतः अभूत् जातः । अर्थान्तरन्यासेनाह—ज्ञाता विदिताः गुणाः भास्वरत्वादयः यस्य एवं विधः रत्न मण्यादिकं विज्ञातुः रत्नगुणैः परिचितात् गुणग्राहकात् अधिकं साधारणव्यक्ति निश्चितान्मूल्यादप्यधिकमूल्यं लभते प्राप्नोति । रत्नाभिज्ञता रत्नगुणज्ञातुः क्रेतुः अन्यजनदीयमानादधिकं धनं प्राप्नोति इति भावः ॥ २५ ॥

संवीक्षितु कामयाने दक्षिणेशं तदक्षिणी ।
सिन्धुः समृद्धिमायातुं चन्द्रोदयमपेक्षते ॥ २६ ॥

संवीक्षितुमिति । तस्य नरेन्द्रस्य अक्षिणी नेत्रे, दक्षिणेशं दक्षिणेश्वरस्य भवतारिणीमन्दिरं तद्गतं श्रीरामकृष्णदेवमित्यर्थः द्रष्टुं कामयाने इच्छुके अभूतामिति शेषः । तत्र दृष्टान्तः सिन्धुः समृद्धिम् अधिकां स्वजलसमृद्धिम् आयातुम् अधिगन्तुं चन्द्रोदयं हिमांशोरुदयाचलागमनमपेक्षते अभिलषति ॥ २६ ॥

श्रीगणेशं विधातुं या स्वात्यन्तिकश्रेयसे ।
अद्वितीयः कदाप्येष गुरोराश्रममाययौ ॥ २७ ॥

श्रीगणेशमिति । स्वस्य आत्मनः यत् आत्यन्तिकं सर्वश्रेष्ठं यच्छ्रेयः कल्याणम् अध्यात्मज्ञानं तस्य आप्तये लाभाय एष नरेन्द्रः कदाचित् समये अद्वितीयः स्वेन सह कमपि अन्यं न गृहीत्वा एकाकीत्यर्थः । गुरोः श्रीरामकृष्णदेवस्य आश्रमं दक्षिणेश्वरमन्दिरम् आययौ प्राप । अद्वितीयः निरुपमः इत्यपि ध्वन्यते ॥ २७ ॥

श्रीविश्वनाथ-पुत्रोऽयं विश्ववन्द्यस्य मन्दिरम् ।
एत्य विश्वात्मभावस्थो विश्वसन्देशदो यमी ॥ २८ ॥

श्रीविश्वनाथेति । श्रीविश्वनाथदत्तस्य पुत्रः अयं नरेन्द्रदत्तः विश्वेन लोकैरित्यर्थः । वन्द्यस्य वन्दनीयस्य मन्दिरं दक्षिणेश्वरम् एत्य आगत्य विश्वमेव आत्मा यस्मिन् एतादृशो यः भावः मानसिकी भावना तस्यां तिष्ठति तादृशः भूत्वा विश्वसन्देशः विश्वभ्रातृत्वभावनापूर्णं धर्मसमन्वयस्वरूपं ददाति तच्छीलः यमी शुशुभे ॥ २८ ॥

व्याहरन् स्वागतं तस्मै समासीनमुपाययौ ।
तन्मुखे दृष्टिमासज्य निर्निमेषं क्षणं स्थितः ॥ २९ ॥

व्याहरन्निति । 'गुरुः' इति पदम् अध्याहृतम् श्रीरामकृष्णदेवः तस्मै नरेन्द्राय स्वागतं व्याहरन् 'आगम्यताम् उपविश्यताम्' इत्यादिशब्दैः कृतस्वागतः समासीनं सन्निधौ उपविष्टं स नरेन्द्रं प्रति उपाययौ समीपमागतः । तथा दृष्टिं स्वनयने तस्य नरेन्द्रस्य मुखे आसज्य निधाय क्षणं क्षणकालपर्यन्तं निर्निमेषं निमिषोन्मेषरहितं यथा तथा स्थितः मौनमास्थायावतस्थौ ॥ २९ ॥

स्ववाग्गुच्चरितैः कैश्चित् सार्धं शब्दैः शनैरिमम् ।
दक्षिणेशागतो योगी दक्षिणेन पदाऽस्पृशत् ॥ ३० ॥

स्ववागिति । स्वस्य या वाक् गीः तया उच्चरितैः उक्तैः कैश्चित् अपरिज्ञातैः शब्दैः सह दक्षिणेशागतः योगी श्रीरामकृष्णदेवः इमम् नरेन्द्रं दक्षिणेन पदा चरणेन अस्पृशत् स्पृष्टवान् । स्वशिष्यं भूमानन्दानुभवार्थमित्यर्थः ॥ ३० ॥

अचरोऽथ चरो लोकस्त्यक्त्वा भेदं परस्परम् ।
अखण्डाद्वैतरूपात्मा महावर्ते इवाभ्रमत् ॥ ३१ ॥

अचर इति । अचरः स्थिरः अथ तथैव चरः भ्रमणशीलः लोकः जगत् स्थावरजङ्गमात्मकं सकलमपि जगत् परस्परम् अन्योन्यस्मिन् विद्यमानं भेदं विभिन्नताम् अयं वृक्षः अयं पर्वतः अयं मानवः अयं पशुर्वा इत्याकारकं भेदं त्यक्त्वा परिहाय सर्वमपि वस्तुजातं महति आवर्ते अम्भसां भ्रमे 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । तस्मिन्निव अभ्रमत् भ्रमणशीलं अभवत् । एतादृशः अनुभवः अर्जुनस्य विश्वरूपदर्शनसदृशः इति ज्ञेयम् ॥ ३१ ॥

ज्योतिस्सहस्रसंकीर्णे क्वचित् सम्प्रति वेगतः ।
अनन्ते गृहमर्त्यादि वस्तुजातं प्रलीयते ॥ ३२ ॥

ज्योतिरिति । ज्योतिषां सूर्यनक्षत्राणां यत्सहस्रम् गणनातीतनक्षत्रादीनीत्यर्थः । तेन संकीर्णं परितो व्याप्तं तस्मिन् क्वचिदनन्ते अनाद्यनन्तमूर्त्ति सम्प्रति श्रीपरमहंसदेवस्पर्शानन्तरं वेगतःरयेण गृहाणि निवासस्थानभूतानि मन्दिराणि मर्त्याः मानुषा आदयः यस्मिन् तादृशं वस्तुजातम् स्थावरजंगमात्मकं सर्वमपि जगत् प्रलीयते लीनं जायते इति नरेन्द्रेणानुभूतम् ॥ ३२ ॥

एतमनुभवं नरेन्द्रशब्दैरेव वर्णयति—

महत्त्वमेऽखिलग्रासे तेजस्तोमे द्रुतं हुता ।
लीना दीनेव सा हन्त ! ममाहन्ताऽणुरूपिणी ॥ ३३ ॥

महत्त्वम इति । महत्त्वे अतिमहति अखिलं वस्तुजातं ग्रसति तच्छीलः अखिलग्रासः सर्वग्रसनशीले इत्यर्थः । तेजसः अलौकिकप्रकाशस्य स्तोमे समूहे द्रुतं सत्वरं हुता आहुतीकृता मम नरेन्द्रस्य अणुरूपिणी अतिलघुप्रमाणा अहंता 'अहं नरेन्द्रः' इत्याकारकोऽहंकारः दीना असहाया इव लीना इव अदर्शनं गतेव हन्त इत्याश्चर्ये । अनन्ते तेजस्तोमे विलीनः नरेन्द्र आत्मनः अस्तित्वमपि विस्मृतवानिति भावः ॥ ३३ ॥

'महत्त्वं प्रविलुप्तं मेऽखिलभौतिकवस्तुनः ।
एकीभूय किमप्यास्ते तेजोमयमिवाद्भुतम्' ॥ ३४ ॥

महत्त्वमिति । मे मदर्थम् अखिलस्य भौतिकस्य पाञ्चभौतिकस्य वस्तुनः वस्तुजातस्य इति जात्यैकवचनं महत्त्वं पार्थक्येन अवस्थानं प्रविलुप्तं पूर्णतया नष्टम् । तथा सर्वमपि चराचरं किमपि अवर्णनीयं तेजोमयं सूर्यकोटिसमप्रभमिव अद्भुतम् आश्चर्यकरम् आस्ते इति मयाऽनुभूतम् ॥ ३४ ॥

स संबोध्याब्रवीदेनं किमिदं भवता कृतम् ।
भयाक्रान्तनिजस्वान्तः कथं क्षितोऽन्तकान्तिके ॥ ३५ ॥

स संबोध्येति । स नरेन्द्रः एनं परमहंसं संबोध्य हे महात्मन् ! एतादृशं संबोधनं विधाय अब्रवीत् उक्तवान् किमुक्तवानित्याह—भवता त्वया इदं मम तादृशानुभूतावस्थायां क्षेपणस्वरूपं भवता किं किमर्थं कृतं विहितम् । भयेन भीत्या आक्रान्तम् अभिभूतं निजस्य स्वान्तं मानसं यस्यैतादृशः अहम् अन्तकस्य कृतान्तस्य अन्तिके समीपे कथं क्षिप्तः परिक्षिप्तः

अस्मि इति प्रश्न एतादृशी ममावस्था तु मरणतुल्याऽभूदिति भाव । भूमानुभवात् किञ्चित् परावृत्तो ऽर्धोन्मीलितावस्थायां नरेन्द्र एवमुक्तवानिति भाव ॥ ३५ ॥

यमधामप्रयातस्य स्यातां क्व पितरौ मम ।
गदतोऽस्याम्पृशद्वक्ष शान्त वीक्ष्य स्मिताधर ॥ ३६ ॥

यमधामेति । यमधाम मृत्यु प्रयातस्य प्राप्तस्य मम पितरौ जननीजनकौ क्व स्याताम् मदेकावलम्बितजीवनौ नु मृताविव जायेयाताम् । एवं गदत भाषमाणस्य नरेन्द्रस्य वक्ष उर स्थल त नरेन्द्र शान्त वीक्ष्य साधारणावस्थागतमवलोक्य स्मिताधर मन्दहास्य कुर्वाण अस्पृशत् हस्तेन स्पृष्टवान् ॥ ३६ ॥

स्वास्थ्य गतेन तेनापि मेने मद्बलवन्मन ।
कथमस्य प्रभावेण स्वय दुर्बलतामयात् ॥ ३७ ॥

स्वास्थ्यमिति । स्वास्थ्य स्वस्थता गतेन प्राप्तेन तेन अपि नरेन्द्रेणापि इद मेने चिन्तितम् । किं चिन्तितमित्याह—मम नरेन्द्रस्य मन अन्त करण बलवत् स्थामयुक्त सदपि अस्य महात्मन प्रभावेण शक्त्या स्वय दुर्बलतां क्षीणशक्तितां अयात् प्राप्तम् ॥ ३७ ॥

आगम स्यादय गूढो मन सम्मोहन किमु ।
योग कोऽपीन्द्रजाल वा रहस्य किमपि ध्रुवम् ॥ ३८ ॥

आगम इति । अस्य महात्मन स्पर्शमात्रेण यदीदृ पुनाजन—प्रभावित एतत् मम प्रभावितय गूढ रहस्यमय आगम तन्त्रशास्त्र स्यात् भवेत् अथवा मनस मानसस्य सम्मोहन स्वमनःप्रभावणापरमानसोपरि विजयसम्पादनात्मक सम्मोहनविद्याबल किमु । अथवा अय योग अष्टाङ्गयोगसिद्धिषु कश्चित्सिद्धिप्रकार आहोस्वित् इन्द्रजाल परस्य दृष्टिबन्धन विधाय किमपि विधातु य शक्तिविशेष तदिन्द्रजाल स्यात् इति न जानामि । ध्रुव निश्चयेन इद किमपि रहस्यम् अज्ञातकारण रहस्यमयी घटना ॥ ३८ ॥

मामुत्पातयितु सोऽल यथा वृक्ष समीरण ।
अचलेनाचलनेव स्थेय त प्रति सम्प्रति ॥ ३९ ॥

मामुत्पातयितुमिति । स परमहंसमहात्मा माम् उत्पातयितु मानसिकबलयुक्त मां व्यापादयितुम् अल समर्थ जात इति शेष । कथमित्युपमयाह—यथा समीरण बलवान् वात वृक्ष पातयितुमल भवति तद्वत् । परन्तु अधुना एतादृश कदापि न भवेत् यत मया नरेन्द्रेण तु सम्प्रति इदानीं त प्रति तस्य महात्मन पुरत अचलेन स्वस्थानेऽत्यन्तस्थिरेण अचलेन पर्वतेनेव स्वयम् स्थातव्यम् यथा प्रबलवायुनाऽपि पर्वत न कम्पते तद्वदहमपि स्थिर भविष्यामि येनाहमनेन न पुन प्रभावित स्याम् इति भाव ॥ ३९ ॥

प्रभुश्चालयितु यो मां स्थैर्याद् धैर्याद् बलाद् बलात् ।
ध्रुव सोऽस्ति महानात्मा कथ साधारणो जन ? ॥ ४० ॥

प्रभुरिति । य परमहंस मां बलवन्मानसमपि नरेन्द्रं बलात् बलात्कारेणेव मां मम स्थैर्यात् स्थिरताया धैर्यात् धीरताया बलान्मनोबलादपि चालयितु च्यावयितु प्रभु समर्थ जात स ध्रुव निश्चयेन महान् आत्मा महान् पुरुष अस्ति । कथमेतादृशशक्तिशाली महात्मा साधारण इतरव्यक्तिवत् जन भवेदिति शेष ॥ ४० ॥

प्रयात्येकेन मार्गेण ममेहास्य परेण तु ।
तथापीहे समायातुं दक्षिणेश्वरमद्भुतम् ॥ ४१ ॥

प्रयातीति । मम नरेन्द्रस्य ईहा अभिलाषः एकेन स्वेष्टेन मार्गेणाध्वना प्रयाति गच्छति परमस्य महात्मनः इच्छा अपरेणैव मार्गेण गन्तुमिच्छति । परस्परविरुद्धाभिलाषावावां स्वः । तथापि अहं नरेन्द्रः दक्षिणेश्वरं समायातुम् आगन्तुम् ईहे वाञ्छामि इति यत्किञ्चिदस्ति तदद्भुतमेव ॥ ४१ ॥

उक्तिष्वु क्वापि तस्याहमुन्मादमिव लक्षये ।
तथापि सर्वतो मन्ये नार्हन्तीमास्तिरस्कृतिम् ॥ ४२ ॥

उक्तिष्विति । अहं नरेन्द्रः तस्य महात्मनः क्वापि कासुचित् 'उक्तिषु वचनेषु 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इत्यमरः । उन्मादमिव उन्मत्ततासदृशं किमपि अनिर्वचनीयं लक्षये प्रत्यक्षीकरोमि, तथापि इमाः अस्य महात्मनः उक्तयः सर्वतः सर्वप्रकारेण तिरस्कृतिं तिरस्कारं न अर्हन्ति सर्वथा वचनानि न तिरस्कारार्हाणि इति भावः ॥ ४२ ॥

उन्मोचयितुमात्मानं तस्याकर्षणतश्चिरात् ।
असम्भवमिवाभाति लोहकान्तादयो यथा ॥ ४३ ॥

उन्मोचयितुमिति । आत्मानं स्वयं चिरात् चिरकालपर्यन्तमपि तस्य महात्मन आकर्षणात् बलादाकर्षात् उन्मोचयितुम् असम्भवमिव अशक्यमिव आभाति प्रतीयते । तत्र दृष्टान्तः यथा लोहकान्तात् अयस्कान्तापरनामकचुम्बकपाषाणविशेषात् अयः लोहं आकर्षणतः मोचयितुमशक्यं तद्वत् ॥ ४३ ॥

स्नेहाविष्टेन चित्तेन विसृष्टोऽप्यचिरादयम् ।
न्यवर्तत समाकृष्टः स्वावासमिव नीडजः ॥ ४४ ॥

स्नेहाविष्टेनेति । स्नेहाविष्टेन प्रेमपूरितेन चित्तेन मानसेन विसृष्टः गन्तुमनुज्ञातोऽपि अयं नरेन्द्रः अचिरात् किञ्चित्कालानन्तरमेव समाकृष्टः चुम्बकेन आकृष्टं लोहमिव पुनः तत्रैव दक्षिणेश्वरे न्यवर्तत तत्रापि दृष्टान्तः । यथा नीडजः नीडे जायते इति पक्षी इतस्ततः परिभ्रम्य स्वावासमिव वृक्षादेरुपरि निर्मितनिजनिवासस्थानमिव । यथा पक्षी इतस्ततो भ्रमणपूर्वकं पुनरपि निजनीडं प्रत्यावर्तते तद्वन्नरेन्द्रोऽपि गुरुणा विसृष्टः अपि तत्समीपमेवागन्तुमियेष आकर्षणबलादिति भावः ॥ ४४ ॥

सुविश्वस्तमना धीरः सावधानश्च संयतः ।
नरेन्द्रः क्वचिदुद्याने रामकृष्णं व्यलोकयत् ॥ ४५ ॥

सुविश्वस्तमना इति । सुविश्वस्तमना गुरौ विश्वासपूर्णं मनः अन्तःकरणं यस्य एतादृशः धीरः धैर्यशाली, सावधानः स्थिरचित्तः, संयतः जितेन्द्रियश्च नरेन्द्रः क्वचित् कस्मिंश्चिदुद्याने रामकृष्णं परमहंसं व्यलोकयत् दृष्टवान् ॥ ४५ ॥

विरोधश्च सकलः शान्तः स्नेहसारे स्थितं मनः ।
दर्शनादेव देवस्य नरेन्द्रो नतमस्तकः ॥ ४६ ॥

विरोध इति । सकलः सम्पूर्णः विरोधः गुरुणा सह मतभेदावस्था शान्तः अन्तं गतः

नरेन्द्रः श्रीरामकृष्णपरमहंसे पूर्णरूपेण विश्वस्तहृदयो जात इति भावः । तथा तस्य मनः अन्तःकरणं स्नेहसारे उच्चतमाध्यात्मिकप्रेमणि स्थितम् तस्मिन्नरेन्द्रः प्रेमपूर्णहृदयः अभूदित्यर्थः । अस्मिन्नुद्याने देवस्य रामकृष्णदेवस्य दर्शनादेव अवलोकनादेव नरेन्द्रः नम्रः भक्त्या अवनतः मस्तकम् उत्तमाङ्गं यस्य एतादृशः समजनीति शेषः ॥ ४६ ॥

तं कर्मयोगदीक्षार्थं शिक्षार्थं लोकशोकहा ।
दक्षिणेशयतिर्दक्षोऽस्प्राक्षीद् भावगतः पुनः ॥ ४७ ॥

तं कर्मयोगेति । लोकशोकहा लोकानां शोकं दुःखम् अपहन्ति तादृशः दक्षिणेशयतिः दक्षिणेश्वरस्थलनिवासः यतिः रामकृष्णपरमहंसः तं नरेन्द्रं प्रति कर्मयोगः जगत्कल्याणार्थं फलाकांक्षारहितं कर्ममार्गं दीक्षार्थं कर्ममार्गे नरेन्द्रं दीक्षितं विधातुमित्यर्थः । तथा शिक्षार्थं ज्ञानोपदेशार्थं दक्षः स्वकर्मणि कुशलः सन् पुनः एकवारं भावगतः भावमग्नः सन् आध्यात्मिकसाक्षात्कारार्थम् अस्प्राक्षीत् हस्तेन स्पृष्टवान् ॥ ४७ ॥

निर्विकल्पान्तरः प्राप बाह्यचैतन्यशून्यताम् ।
गुरुस्तममगादीद्य सर्वं सत्तरमुत्तरम् ॥ ४८ ॥

निर्विकल्पान्तर इति । नरेन्द्रः निर्विकल्पः कल्पनाशून्यम् आन्तरं यस्य एतादृशः बाह्य जगद्विषयकं चैतन्यम् इन्द्रियजन्यज्ञानं तेन शून्यतां राहित्यं प्राप अधिगतवान् । अस्यामवस्थायां गुरुणा यद्यत्पृष्टम् तत्सर्वमपि गुरुस्तम देशिकेन्द्रम् अखिलं सत्तरं समीचीनतरं योग्यतरम् उत्तरम् प्रश्नानुरूपमित्यर्थः । अगादीत् उक्तवान् ॥ ४८ ॥

किमुक्तवान् इत्याह—

किमर्थं कथमायातः कुहस्थः कस्य कः पुनः ।
कियदन्ते अवस्थानं प्रस्थाने क्वान्तिमं पदम् ॥ ४९ ॥

किमर्थमिति । कस्य प्रश्नस्य किमुत्तरं दत्तवान् इत्येवाह स नरेन्द्रः—अस्मिन् जगति किमर्थमायातः कथं केन प्रकारेण आगतः, स कुहस्थः अस्मात् कालात्पूर्वं कस्मिन् स्थाने स्थितः, कस्य मनुष्यस्य देवस्य ऋषेर्वा कः किंसम्बन्धवान् तदा अस्मिँल्लोके अवस्थानं निवासः प्रस्थानं प्रयाणं वा कियदन्ते इति द्विवचनान्तं पदम् । एवम् तस्य अन्तिमं पदम् क्व अस्माल्लोकात् प्रस्थानानन्तरं कुत्र तेन गन्तव्यमित्यादि सर्वमेव तेन निगदितम् । निर्विकल्पावस्थायां बाह्यजगत्कल्पनाशून्यः नरेन्द्रः ॥ कश्चिद्दिव्यर्षिर्नरदेहगतः मुनिः इत्यादि सर्वमपि तेन कथितमभूत् ॥ ४९ ॥

यदाऽनन्तस्वरूपोऽहं संविदस्य प्रजायते ।
क्षणादिव पदं नैजं यास्यतीत्युक्तवान् गुरुः ॥ ५० ॥

यदानन्त इति । गुरुः श्रीरामकृष्णपरमहंस इति इयम् उक्तवान् अब्रवीत् । किमुक्तवानित्याह—यदा यस्मिन् समये अयं 'नरेन्द्र' इति व्यावहारिकनामधारकः अनन्तं भूमैव स्वरूपं यस्य एतादृशः परब्रह्मस्वरूपः इत्यर्थः । इति एवञ्जातीया अस्य संवित् ज्ञानं प्रजायते उत्पद्यते तदा 'यदा पदेन 'तदा इति सम्बध्यते तस्मिन्नेव समये अयं नैजं निजस्य पदं स्थानं निजधामेत्यर्थः, यास्यति गमिष्यति इति ॥ ५० ॥

दृष्टश्रीगुरुवैराग्यतपोनैर्मल्यभावनः ।
अवतारवरिष्ठत्वं स्थानेऽस्मिन्नन्वभूदयम् ॥ ५१ ॥

दृष्टश्रीति । दृष्टाः अनुभूताः श्रीगुरोः श्रीरामकृष्णपरमहंसस्य वैराग्यं संसृतिं प्रति विरागः तपः तपस्या तदा नैर्मल्यभावना मनोनिर्मलता येनैतादृशः अयम् नरेन्द्रः अस्मिन् श्रीरामकृष्णे स्थाने योग्यमेव 'स्थाने' इति सप्तमीविभक्तिप्रतिरूपकमव्ययम्, अवतारवरिष्ठत्वं सर्वश्रेष्ठः भगवतः अवतारस्वरूपोऽयमिति यथार्थमेवान्वभूदनुभूतवान् । उपरिनिर्दिष्टगुणैरयमेवायमीश्वरावतारस्वरूपोऽयमिति निश्चितवान् ॥ ५१ ॥

सर्वाराध्येन सिद्धेनाप्यलौकिकबलेन च ।
मम तुच्छविरोधस्य धृष्टता स्पष्टतां गता ॥ ५२ ॥

सर्वाराध्येनेति । अनेन सर्वैः अखिलैराराध्येन, पूजनीयेन सिद्धेन योगीश्वरेण, अलौकिकं दिव्यं बलं सामर्थ्यं यस्य एतादृशेन अनेन महात्मना साकं मम नरेन्द्रस्य तुच्छः निष्फलः यः विरोधः मताभिन्नतादिरूपः तस्य धृष्टता धार्ष्ट्यं योग्यतां विनैव अन्यैः साकं विरोधस्य निरर्थकता स्पष्टतां वैशद्यं गता प्राप्ता । व्यर्थमेव मयाऽनेन सार्धं मतविरोधोऽजायतेति भावः ॥ ५२ ॥

सर्वेष्वपि पार्षदेषु श्रीनरेन्द्रस्य स्थानं श्रेष्ठमासीदित्याह—

ये समर्थाः समानीताः रामकृष्णेन पार्षदाः ।
नरेन्द्रस्य पदं तेषु सर्वोच्चमिति निश्चितम् ॥ ५३ ॥

ये समर्था इति । श्रीरामकृष्णेन ये समर्थाः योग्यतमाः पार्षदाः सहायार्थं परितो वर्तमानाः कार्यकर्तारः समानीताः एकत्रीकृता आसन्निति शेषः । तेषु सकलेषु पार्षदेषु नरेन्द्रस्य पदं स्थानं सर्वोच्चं सर्वोत्तममिति निश्चितं ध्रुवम् ॥ ५३ ॥

समाकृष्टावुभावास्तां गुरुशिष्यौ परस्परम् ।
स्थितावेकात्म्यभावेन नूनं भिन्नशरीरिणौ ॥ ५४ ॥

समाकृष्टाविति । उभौ द्वावपि गुरुशिष्यौ श्रीरामकृष्णनरेन्द्रौ परस्परम् अन्योन्यं प्रति समाकृष्टौ चुम्बकेन लोहं यथाकृष्टं भवति तद्वत् अन्योन्यं प्रति एतादृशौ आस्ताम्, अभवताम् । द्वावपि तौ नूनम् एक एव आत्मा तदैकात्म्यं तस्य भावस्तेन स्थितौ द्वयोरपि गुरुशिष्ययोरात्मा एक एव आसीत् व्यतिरेकस्तु केवलं भिन्नं शरीरं ययोरेतादृशौ तावुभौ द्वयोर्भिन्नशरीरयोरभ्यन्तरमेक एवात्मा विराजमानः आसीत् इति भावः ॥ ५४ ॥

स निष्णातो देशिकेन्द्रोऽद्वैतज्ञाननिधिर्महान् ।
असौ निरुपमः कर्मयोगाचार्यश्चरित्रवान् ॥ ५५ ॥

स निष्णात इति । स- परमहंसदेवः निष्णातः उपदेशकर्मसु अतिकुशलः देशिकेन्द्रः गुरूत्तमः महान् श्रेष्ठः अद्वैतज्ञानस्य 'सर्वं खल्विदं ब्रह्म' इत्याकारकज्ञानस्य निधिः कोशः । असौ नरेन्द्रश्च निरुपमः उपमाशून्यः कर्मयोगाचार्यः निष्कामकर्मकर्ता लोकसंग्रहकारी चरित्रवान् अत्यन्तनिर्मलचरित्रः उभयोः संयोगः ज्ञानकर्मसंयोग इवेत्यर्थः ॥ ५५ ॥

परिश्रमवशादस्य देवयुक्तस्य योगिनः ।
विश्वधर्मप्रकाशोऽस्तु चिराद्विश्वम्भरातले ॥ ५६ ॥

परिश्रमवशादिति । अस्य 'देव' इति आख्यया युक्तस्य योगिनः भाविष्यते नरेन्द्रदेवस्येत्यर्थः । परिश्रमवशात् प्रयत्नवशात् चिरात् चिरकालानन्तरम् । अद्य यावत् तादृशप्रकाशाभाव आसीदित्यर्थः । विश्वम्भरातले भूतले 'भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा' इत्यमरः । विश्वधर्मस्य वेदान्तधर्मस्य प्रकाशः प्रभा अस्तु भवतु । एतद्योगिकृतप्रयत्नफलस्वरूपः नववेदान्तधर्मः सर्वस्मिन्नपि विश्वेस्मिन् प्रसरतु इति भावः ॥ ५६ ॥

विषमैः सुगमैश्चापि विविधैः समुपक्रमैः ।
संस्कृत्य पूर्णतां नेतुं सयत्नोऽनुचरं गुरुः ॥ ५७ ॥

विषमैरिति । गुरुः परमहंसदेवः विषमैः कठिनैः सुगमैः सरलैः एवं विविधैर्विभिन्नैः समुपक्रमैरुपायैः समयानुसारं प्रयुक्तैः भिन्नैरुपायैः अनुचरं नरेन्द्रदेवं संस्कृत्य परिष्कृत्य पूर्णतां परिपूर्णत्वं नेतुं प्रापयितुं यत्नशीलः बभूव ॥ ५७ ॥

नरेन्द्रस्य अलौकिकानुभवे मूर्तिपूजायां चाविश्वासस्य परिहारार्थमुपक्रमते—
मानसेऽस्य न विश्वासोऽलौकिकानुभवेऽभवत् ।
प्रतीकमूर्तिपूजासु विरोधं विदधे पुनः ॥ ५८ ॥

मानस इति । अस्य नरेन्द्रस्य मानसेऽन्तःकरणे अलौकिकानुभवे ईश्वरेण साकं वार्तालापादिविषये अविश्वासः अश्रद्धा 'एवं भवितुमशक्यमि'त्याकारकः सन्देहः अभवत् जातः । तथा प्रतीकमूर्तिपूजासु भगवत्प्रतीकस्वरूपप्रस्तरनिर्मितमूर्तिपूजादिविषये च गुरुणा सह विरोधं मतभिन्नतां विदधे कृतवान् ॥ ५८ ॥

स प्रोवाच कदाप्येनमीशरूपस्य दर्शनम् ।
केवलं कल्पनाग्राह्यं ग्राह्यं त्याज्यमतो मतम् ॥ ५९ ॥

स प्रोवाचेति । स नरेन्द्रः । कदापि कस्मिन्नपि समये एनं परमहंसं प्रोवाच उक्तवान् किमुक्तवान् ईशरूपस्य दर्शनम् तेन सह वार्तालापश्च केवलं शुद्धं ग्राह्यम् अतिशयोक्तिपूर्णं कल्पनाग्राह्यं काल्पनिकं मानसिककल्पनामात्रं न तु सत्स्वरूपमित्यर्थः । अत एव एतादृशं मतमविचारं त्याज्यम् परिहर्तव्यम् ॥ ५९ ॥

परं स्वजीवनमद्राक्षीद् देवोऽसौ देवमूर्तिषु ।
मेने विनाशयेन्माता नरेन्द्रस्य विपर्ययम् ॥ ६० ॥

परं जीवनमिति । परम् असौ देवः परमहंसदेवः देवमूर्तिषु प्रस्तरादिनिर्मितेश्वरप्रतिमासु जीवनं चैतन्यमद्राक्षीत् अवलोकितवान् । नरेन्द्रस्तु न तथा विश्वासं तर्हि किं कर्तव्यम् । माता भवतारिणी नरेन्द्रस्य एतादृशं विपर्ययं मतविरोधं विनाशयेत् परिहरेत् इति स मेने अचिन्तयत् ॥ ६० ॥

गुरोर्विरात्मनः शक्तिरासीन् सत्कार्यतत्परा ।
यया नरेन्द्रनाथोऽभूत् स विवेको महाव्रतः ॥ ६१ ॥

गुरोरिति। परन्तु यद्यपि मूर्तिपूजादिषु नरेन्द्रस्य विश्वासो नासीत् तथापीत्यर्थः। गुरोः वरा श्रेष्ठा आत्मनः शक्तिः आध्यात्मिकं बलं कार्यतत्परा अदृश्यरूपेण कार्यव्यापृता आसीत्। यया लौकिकशक्त्या स नरेन्द्रनाथदत्तः 'विवेकानन्द' इति महान् नरः विश्व-विश्रुतः अभूत् अजनि ॥ ६१ ॥

दत्तोऽह्नर्निशमेवास्ते सत्यान्वेषणतत्परः।
प्रियैकान्तनिवासश्च पुस्तकैः सर्वतो वृतः ॥ ६२ ॥

दत्त इति। दत्तः विश्वनाथदत्तसुतः नरेन्द्रः अहर्निशमेव दिवानिशमेव सत्यस्य अनाद्य-नन्तस्य अन्वेषणे अनुभवरूपप्रयत्ने तत्परः आसक्तः आस्ते आसीत् वर्तमानसामीप्ये वर्तमानवद्वा। प्रियः इष्टः एकान्तनिवासः यस्यैतादृशः तथा सर्वतः अभितः पुस्तकैः वृतः परिवृतः सत्यान्वेषणार्थम् एकान्ते विविधपुस्तकैरावृतः आसीत् ॥ ६२ ॥

चेत् स्थिरेच्छाबलं तीक्ष्णा प्रज्ञा स्थामवती तनुः।
विपुलं भूतलं चान्यत् सोद्योगः किमपेक्षते ॥ ६३ ॥

चेत् स्थिरेच्छाबलमिति। यदि स्थिरं अचञ्चलम् इच्छाबलं मानसिकी शक्तिः तीक्ष्णा क्षुरधारावत् प्रज्ञा बुद्धिः स्थामवती बलवती तनुः शरीरम्, तथा विपुलं विस्तीर्णं भूतलं भ्रमणार्थं धरणी। एतेतादृशी सामग्री विद्यते तर्हि सोद्योग उद्योगशीलः नरः अन्यत् किमपेक्षते न किमपीत्यर्थः। एवंगुणविशिष्टः पुरुषः सफलप्रयत्नः भवेदेवेत्यत्र न संदेहः इति भावः ॥ ६३ ॥

बुद्धेर्विकाससिद्ध्यर्थं वृद्ध्यर्थं संविदस्तथा।
विद्यार्थिभिर्विचारस्य स्वातन्त्र्यं समपेक्ष्यते ॥ ६४ ॥

बुद्धेरिति। बुद्धेः विद्यार्थिधीशक्तेः विकाससिद्ध्यर्थं अधिकाधिकोन्मेषणप्राप्तये तथा संविदः ज्ञानस्य वृद्ध्यर्थं समृद्धिसिद्ध्यर्थं विद्यार्थिभिः अध्ययनशीलैरन्तेवासिभिः विचारस्य सारासारचिन्तनस्य स्वातन्त्र्यं परावलम्बित्वाभावः अपेक्ष्यते आवश्यकः। गुरुणा तु शिष्यस्य केवलं कुमार्गगामित्वमवरोद्धव्यं ज्ञानार्जनविषये तु छात्रेण पूर्णतया स्वतन्त्रेण भवितव्यम् ॥ ६४ ॥

तद्विवेकस्तथा भाविगुरोरपि विरोधकृत्।
बी० ए० पदपरीक्षार्थी शिक्षामैच्छत् स्वतंत्रधीः ॥ ६५ ॥

तद्विवेक इति। तत् तस्मात् 'विद्यार्थिभिः स्वतन्त्रविचारैर्भवितव्य'मिति नियमात् तथा तादृशं भाविनः भविष्यतः गुरोरपि विरोधं करोति तादृशः कृत्नः किपि रूपम्। बी० ए० पदपरीक्षार्थी बी० ए० पदवीलाभार्थं अध्ययनशीलः स्वतन्त्रधीः स्वतन्त्रबुद्ध्या शिक्षामध्ययनमैच्छत् ॥ ६५ ॥

स्वसंकल्पे दृढस्यास्य निवर्तयितुमान्तरम्।
इयेष रामकृष्णोऽपि कालीशरणवर्तिताम् ॥ ६६ ॥

स्वसंकल्प इति। स्वसंकल्पे स्वनिश्चये दृढस्य स्थिरचित्तस्य आन्तरम् अन्तःकरणं निवर्तयितुं परिवर्तयितुम् रामकृष्णोऽपि परमहंसोऽपि काल्या भवतारिण्याः शरणवर्तितां

शरणीकरणम् इत्यर्थः । नरेन्द्रचित्ते विद्यमानस्य विरोधस्य परिहारार्थं भवतारिणीशरणमेव सर्वोत्तमं साधनमित्यमन्यत । नरेन्द्रस्य विरोधात्मकापथगामित्वनिवारणार्थं भवतारिणीप्रार्थनां कृतवानिति भावः ॥ ६६ ॥

शिष्यचन्द्रो देशिकार्कात् प्राप्य ज्ञानप्रभाबलम् ।
समाकृष्टुं समर्थोऽभून्महान्तं लोकसागरम् ॥ ६७ ॥

शिष्यचन्द्र इति । शिष्य एव नरेन्द्र एव चन्द्रः देशिकार्कात् आचार्यस्वरूपदिवाकरात् ज्ञानस्वरूपप्रभाबलं ज्ञानालोकशक्तिमधिगम्य महान्तम् अतिविस्तीर्णं लोकसागरं जनतासागरं समाक्रष्टुम् आकर्षणपूर्वकम् आत्मनः समीपमानेतुं समर्थः बलवानभूत् । अत्र शिष्यरूपी चन्द्रमा, आचार्यरूपी सूर्यः, ज्ञानमेव आलोकः लोकरूपी सागरः इति रूपकपरम्परा ॥ ६७ ॥

सम्प्रेरितमतिर्दिव्यानुभवेऽपीशदर्शने ।
समाधौ च सविश्वासो विश्वनाथसुतोऽजनि ॥ ६८ ॥

सम्प्रेरितमतिरिति । विश्वनाथसुतः आचार्येण सम्प्रेरिता प्राप्तप्रेरणा मतिर्बुद्धिर्यस्य सः नरेन्द्रः दिव्यानुभवे ईश्वरेण सह वार्तालापादिविषये ईशदर्शने परमेश्वरसाक्षात्कारविषये तथा समाधौ निर्विकल्पसमाधिसुखविषये च विश्वासेन सह सविश्वासः विश्वासयुक्तः अजनि जातः ॥ ६८ ॥

घोषितं रामकृष्णेन स्थानेऽयमृषिसन्निभः ।
लोकशिक्षाप्रदो भावी प्रभावी पुरुषो महान् ॥ ६९ ॥

घोषितमिति । रामकृष्णेन श्रीरामकृष्णपरमहंसेन स्थाने युक्तमेव घोषितम् उच्चैर्लोकान् प्रति भाषितं यत् अयम् नरेन्द्रः ऋषिसन्निभः ऋषितुल्यः लोकशिक्षाप्रदः लोकान् प्रति आध्यात्मिकोपदेशस्य प्रदाता भावी भविष्यति । तथा प्रभावी प्रभावशाली महान् पुरुषः नरश्रेष्ठश्च भावी ॥ ६९ ॥

कृतं यत्किञ्चन तेन लोकेऽस्मिन् मानवं नवमानवम् ।
विधातुं रामकृष्णोऽस्य तत्रासीन्मार्गदर्शकः ॥ ७० ॥

कृतमिति । तेन नरेन्द्रेण अस्मिँल्लोके जगति मानवं मनुष्यं नवमानवं नूतनजीवनयुक्तं विधातुं कर्तुं यत् किञ्चित् कृतं तत्र विवेकानन्दस्वामिविहिताखिलकार्येषु रामकृष्णः श्रीपरमहंसदेवः मार्गदर्शकः पथप्रदर्शकः आसीत् अभवत् ॥ ७० ॥

दत्तः पुष्कर एतस्मिन्ननन्ताख्ये सरोरुहे ।
असंख्यदलसम्फुल्लं रामकृष्णारुणांशुभिः ॥ ७१ ॥

दत्त इति । दत्तः नरेन्द्रदत्तः अस्मिन् अनन्ताख्ये अनाद्यनन्तापरनाम्नि पुष्करे सरसि रामकृष्णारुणांशुभिः परमहंसरूपिणः सूर्यस्य अंशुभिः किरणैः असंख्यानि दलानि पत्राणि यस्यैतादृशं सरोरुहं कमलं सम्फुल्लं विकसितमिवेत्युत्प्रेक्षा रूपकं चालङ्कारौ ॥ ७१ ॥

वरेण्यः सर्वलोकानामरण्ये भवरूपिणि ।
शरण्यो भ्रमतामेष शरण्येकमहोदयः ॥ ७२ ॥

वरेण्य इति । अयं नरेन्द्रदत्तः सर्वेषां लोकानां वरेण्यः पूजनीयः कुत्रेत्याह—अस्मिन् भवरूपिणि अरण्ये निर्जनारण्यसदृशसंसारे भ्रमतां मार्गविस्मरणेन इतस्ततः लक्ष्यशून्यं धावताम् एष शरण्यः शरणकिरणयुक्तः तथा धरण्यां भूतले एकः अद्वितीयः निरुपम इत्यर्थः । महान् उदयः प्रसिद्धिर्यस्यैतादृशः अभूदिति शेषः ॥ ७२ ॥

पक्षान्तरमप्याह—

एष संसारपाथोधिं तरतां दूरभासकः ।
दीपस्तम्भ इवाचार्यस्थपतिस्थापितः किमु ॥ ७३ ॥

एष इति । एषः नरेन्द्रः भावी विवेकानन्दः संसारपाथोधिं भवसागरं तरतां संतरणशीलानां जनानां कृते इति शेषः । दूरभासकः अतिदूरादेव मार्गं दर्शयितुं प्रकाशदानसमर्थः आचार्यस्थपतिना श्रीरामकृष्णदेवस्वरूपिणा स्थपतिना वास्तुकलाज्ञेन स्थापित-प्रतिष्ठापितः दीपस्तम्भः किमु समुद्रे मार्गदर्शनार्थं कृतप्रतिष्ठः प्रदीपस्तम्भसदृशोऽयं नरेन्द्रः इति भावः ॥ ७३ ॥

विश्वैक्यीकरणेऽनेन विश्वधर्मप्रकाशतः ।
भगीरथप्रयत्नो यः कृतस्तस्योपमा कुतः ॥ ७४ ॥

विश्वैकीकरण इति । विश्वैकीकरणे अखिलजगतः एकीकरणे विश्वधर्मप्रकाशात: विश्वधर्मोपदेशेन द्वैतपरिहारपूर्वकं विश्वबन्धुत्वभावप्रसारेण च एकत्वभावप्रापणे अनेन श्रीविवेकानन्दस्वामिना यः भगीरथप्रयत्नः अलौकिकप्रयासः कृतः विहितः तस्य प्रयत्नस्य उपमा सादृश्यं कुतः न कुतोऽपीत्यर्थः । जगदितिहासे तत्कृतप्रयत्नो निरुपम इति भावः ॥ ७४ ॥

प्रवर्तको युगस्यायं नूतनस्य भुवस्तले ।
'युगाचार्य' इति प्रख्यां विख्यातामर्हति ध्रुवम् ॥ ७५ ॥

प्रवर्तक इति । अयं विवेकानन्दः भुवस्तले क्षितितले नूतनस्य नवीनस्य युगस्य वेदान्तधर्मान्तर्गतविश्वबन्धुत्वभावप्रसारेणेत्यर्थः । अतः कारणात् विख्यातां प्रसिद्धां 'युगाचार्यः' नवीनयुगस्य गुरुः इति आख्यां पदवीं ध्रुवं निश्चयेन अर्हति तादृशपदव्यर्थं योग्यः भवति ॥ ७५ ॥

अध्वानं यं नरेन्द्रो नवमुपदिशति स्नेहनिःस्वार्थसेवा-
शीलं सद्भ्रातृभावं प्रथितगुरुवरोपज्ञमत्यन्तरम्यम् ।
यान्तस्तेनाथ लब्ध्वा चिरमभिलषितां शान्तिमैकान्तिकीं तां
लोकाः शोकापनोदं कुरुत परतरः श्रेयसो नास्ति पन्थाः ॥ ७६ ॥

अध्वानमिति । नरेन्द्रः श्रीविवेकानन्दःयम् अध्वानं नवीनमार्गम् इह जगति उपदिशति स्म उपदिष्टवान् प्रचारयामासेत्यर्थः । कीदृशम् अध्वानमित्याह—निःस्वार्थसेवाशीलः यस्य मार्गस्य निःस्वार्था स्वार्थविहीना सेवैव लोकसेवनमेव शीलं स्वभावः यस्यैतादृशस्तं सद्भ्रातृभावं, सन् विद्यमानः भ्रातृभावः विश्वबन्धुत्वभावना यस्मिन् एतादृशम् अत्यन्तरम्यम् आचरणेन इष्टतमफलप्रदायकं प्रथितगुरुवरोपज्ञः प्रथितः विश्रुतः अखिलजगत्प्रसिद्धः यः गुरुः रामकृष्णाख्यः तस्य उपज्ञास्वरूपः प्राथम्येन आविष्कृतः 'उपज्ञा ज्ञानमाद्यं स्यात्'

द्व्यमर'। तेन वर्त्मना यान्तः गच्छन्तः लोकाः चिरं चिरकालात् अभिलषितां ऐकान्तिकीम् अनन्तकालव्यापिनीं शान्तिं मानसिकचिन्ताराहित्यस्वरूपिणीं आनन्दमुखभावनां प्राप्य। श्रीरामकृष्णदेवोपज्ञेन विवेकानन्दोपदिष्टेन वर्त्मना गच्छन्तः जनाः शान्तिलाभं कर्तुमलं तेन च सर्वविधदुःखापहारं कर्तुं समर्था भवेयुः एतस्मान्मार्गात् कोऽपि अपरः मार्गः श्रेयसे मानवकल्याणाय नास्ति न विद्यते। 'नान्यः पन्था विद्यतेऽयनाय' इति। अत्र स्रग्धरा वृत्तम् ॥ ७६ ॥

> लोकं मोहतमोहतं घृतहितालोकं विधातुं क्षमे
> विख्यातध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
> अभ्यस्तश्रुतिशास्त्रभारतपुरातत्त्वेन गेये महा-
> काव्ये त्र्यम्बकसूरिणा विरचिते सर्गस्तृतीयो गतः ॥ ७७ ॥

इति त्र्यम्बकसूरिविरचिते विवेकानन्दमहाकाव्ये दीक्षा-
प्राप्तिर्नाम तृतीयः सर्गः ॥ ३ ॥



लोकमिति। लोकमित्यादि 'धर्मप्रधानाश्रये' एतदन्तं पूर्ववत्। अभ्यस्तानि अध्ययन-विषयीकृतानि श्रुतिः वेदः शास्त्राणि व्याकरणदर्शनादीनि तथा भारतपुरातत्त्वं भारतस्य प्राचीनैतिहासश्च येनैतादृशेन त्र्यम्बकसूरिणा विरचिते विवेकचरिते महाकाव्ये अयं 'दीक्षाप्राप्ति'र्नाम तृतीयः सर्गः समाप्तः ॥ ७७ ॥

इति विवेकचरिते महाकाव्ये विवेकदीपाख्यटीकायां तृतीयः सर्गः समाप्तः ॥ ३ ॥



# अथ चतुर्थः सर्गः

विना नरेन्द्रं नहि रामकृष्णः श्रीरामकृष्णं न विना नरेन्द्रः ।
सम्बन्ध एषोऽयुतसिद्धतुल्यो यथा गुणानां गुणिना सहास्ते ॥ १ ॥

विना नरेन्द्रमिति । नरेन्द्रं विना रामकृष्णः स्थातुं नाशक्नोत् तथैव नरेन्द्रः अपि श्रीरामकृष्णं विना स्थातुमसमर्थः आसीत् । तयोर्गुरुशिष्यत्वसम्बन्धस्थापनानन्तरम् एकः अपरं विना पृथक् स्थातुं नालमासीत् । एष एतयोः सम्बन्धः अयुतसिद्धसम्बन्ध इव अभूत् । 'ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ' इति तर्कशास्त्रे यथा गुणानां रूपरसादिन्यायशास्त्रोक्तचतुर्विंशतिगुणानां गुणिना गुणयुक्तद्रव्येण सह यथा अयुतसिद्धसम्बन्धः विद्यते तद्वत् ॥ १ ॥

तमेव सम्बन्धं दृष्टान्तान्तरेण विशदयति—

नित्यं दिनेशेन सहांशुजालं सौरभ्यमास्ते कुसुमेन सार्धम् ।
माधुर्यमेवं सितया समेतं शुक्लत्वमूधस्यसमन्वितं च ॥ २ ॥

नित्यं दिनेशेनेति । यथा अंशुजालं किरणसमूहः नित्यं दिनेशेन सूर्येण सह विद्यते; यथा वा सौरभ्यं सुगन्धः कुसुमेन सार्धं विद्यते, यथा वा माधुर्यं मधुरता सितया शर्करया अयुतसिद्धसंबन्धेन आस्ते यथा च शुक्लत्वं श्वेतगुणः ऊधस्येन दुग्धेन सह निरन्तरं विद्यते अंशवः सौरभ्यं माधुर्यं शुक्लत्वं च यथा क्रमशः सूर्यात् कुसुमेभ्यः शर्करायाः पयसो वा न कदापि पृथक्कर्तुं शक्यन्ते तथैव रामकृष्णनरेन्द्रौ अयुतसिद्धवन्नित्यसम्बन्धशालिनौ आस्तामिति भावः ॥ २ ॥

सर्वेषु भक्तेषु नरेन्द्रदेवं देवोऽधिकं स प्रशशंस नित्यम् ।
अधीति-बोधाचरणानुषक्तः क्रीडन् हसन् कार्यकरः परः कः ॥ ३ ॥

सर्वेष्विति । ये पार्षदाः श्रीरामकृष्णदेवेन जगज्जननीकार्यसम्पादनार्थं सन्निधापिताः तेषु भक्तपार्षदेषु मध्ये देवः श्रीरामकृष्णदेवः नरेन्द्रदेवमेव नित्यं प्रशशंस प्रशंसां कृतवान् । कीदृशी सा प्रशंसा इत्याह अधीतिः अध्ययनं, बोधः यत्किञ्चिदधीतं तस्य ज्ञानम्, आचरणं ज्ञानानुसारं च सत्कर्माचरणं तत्र अनुषक्तः आसक्तः सदपि क्रीडन् क्रीडां कुर्वन् इव हसन् इव सुखेनेत्यर्थः । कार्यं करोति इति कार्यपरः स्वकार्यतत्परः परः नरेन्द्रवर्जं न कोऽपीतरः विद्यते ॥ ३ ॥

ज्ञानार्जनायोत्कमना बुधानां वचः सुधापानतृषार्तकर्णः ।
ग्रन्थालयव्याजपवित्रवाणीसेवाक्रमोऽस्योच्चतराभिलाषः ॥ ४ ॥

ज्ञानार्जनायेति । नरेन्द्रः ज्ञानस्य अध्यात्मज्ञानस्य यदर्जनम् अवगमः तदर्थमुत्कम् उत्कण्ठितं मनः यस्य एतादृशः तथा बुधानां ज्ञानिनां वचःसुधायाः वचनामृतस्य पाने सादरं श्रवणे इत्यर्थः । या तृषा अभिलाषः तदर्थम् आर्तौ उत्सुकौ कर्णौ यस्यैतादृशः आसीत् इति शेषः । तथा ग्रन्थालयः पुस्तकागारं तस्य व्याजेन छलेन विद्यमाना या वाणी सरस्वती देवी तस्य सेवाक्रमः सेवनपरिपाटी अस्य नरेन्द्रस्योच्चतरः अत्युन्नतस्वरूपः अभिलाषः

इच्छा आसीत् इति शेषः। ज्ञानार्जनं तन्मुखवचनामृताकर्णनेन तदा पुस्तकाल्यस्वरूप-सरस्वतीसेवनेन वा तद्गतानेकविषयकग्रन्थाध्ययनेनेत्यर्थः। संपद्यते। स्वगुरुमुखात् यज्ज्ञानं तत्तु तस्य सर्वश्रेष्ठमासीदेव तेन सार्धं यत्र कुतोऽपि ज्ञानप्राप्तिसम्भावना शक्यसंभवा ततोऽपि स ज्ञानलाभार्थं प्रायततेत्यर्थः। अयमाधुनिकविद्यार्थिकृते मुख्य उपदेशः॥ ४॥

ज्ञानं यतः शक्यमभूदवाप्तुं देवेन गन्तुं स ददेऽपि तत्र।
शिष्योत्कतावर्त्मनि योऽन्तरायं नोत्पादयेत् क्वापि गुरुः स एव॥ ५॥

ज्ञान यत इति। स नरेन्द्रः यतः यस्मात् स्थानात् ज्ञानं सवित् अवाप्तुं शक्यमभूत् तत्र देवेन रामकृष्णदेवेन गन्तुं ददे गमनार्थमनुज्ञातः दाधातोः कर्मणि लुङ्। यः गुरुः शिष्योत्कतावर्त्मनि अन्तेवासिनः ज्ञानलाभोत्कण्ठावर्त्मनि अन्तरायं बाधां न उत्पादयेत् स एव यथार्थो गुरुः। 'अत्र त्वया न गन्तव्यम्' 'इदं त्वया न विधेयमि'त्याकारकान्तरायं शिष्यज्ञानप्राप्तिमार्गे गुरुः न कदाप्युत्पादयेत् इति भावः। अनेनैव मार्गेण यथार्थज्ञानस्य मूल्यमधिकतरं भवितुमर्हति॥ ५॥

नरेन्द्रभृङ्गस्त्वितरप्रसूनवृन्दाद्‌दवापांशरसं परं सः।
आतृप्ति पूर्णं समवाप्तुमासीद् गदाधराम्भोजपदात् समर्थः॥ ६॥

नरेन्द्रभृङ्ग इति। ज्ञानप्राप्त्यर्थं नरेन्द्रः इतस्ततो भ्रमणशीलोऽभूदित्युक्तम् तत्प्र-कारमेव विशदयति नरेन्द्र एव कश्चित् भृङ्गो भ्रमरः स इतरप्रसूनानाम् अन्यकुसुमानां वृन्दात् समूहात् अंशरसं अल्पं ज्ञानम् अवाप प्राप्तवान्। परं स गदाधरः एव अम्भोजं कमलं तदेव पदं स्थानं तस्मात् आतृप्ति आकण्ठतृप्तिपर्यन्तं रसं ज्ञानरसं पूर्णं समवाप्तुं प्राप्तुं समर्थः आसीत्। इतरकुसुमेभ्यस्तु भ्रमरः अंशतः मधुरसं प्राप्नुमलं परम् अम्भोजात्तु स सर्वाधिकरसं लभते अत्र रूपकालंकारः व्यतिरेकश्च॥ ६॥

समीक्षितुं भक्तवरं निजं सोऽद्दयं चिराद्वह्रपुरं प्रयातः।
ब्राह्मं प्रविश्यार्चनमन्दिरं तत् पीठान्तमारुह्य समाधिमग्नः॥ ७॥

समीक्षितुमिति। सः रामकृष्णदेवः चिरात् दीर्घकालपर्यन्तम् अदृष्टमनवलोकितं भक्तवरं शिष्यवरं भक्तवरं च समीक्षितुं द्रष्टुं वह्नपुरं कालिघट्टनगरं प्रयातः प्रस्थितः। तत्रापि ब्राह्मम् अर्चनमन्दिरं ब्रह्मप्रार्थनागारं प्रविश्य तत्र च पीठान्तं मुख्यासन्दीस्थानमारुह्य समाधौ निर्विकल्पसमाधौ मग्नः अभूत्। तत्पूर्वं न कोऽपि तत्स्थानमारूढः आसीत् श्रीरामकृष्णदेवस्य तु तदारुह्य समाधिलीनता नियमविरुद्धा इति ब्राह्मा कोलाहलपूर्णा जाता इत्यर्थः॥ ७॥

एतदवलोक्य ब्राह्ममतानुयायिनः किं कृतवन्त इत्याह—

'अनर्थ एषोऽभव'दूचुरेके परेऽद्भुतं ब्राह्मजनेष्वदृष्टम्'।
नानावचोभिः परितो जनानां समाजवेश्माजनि सस्वनं तत्॥ ८॥

अनर्थ इति। तत्र ब्राह्मप्रार्थनालये केचिज्जना इति उक्तवन्तः किम् एषः रामकृष्ण-देवस्य पीठारोहणं महान् अनर्थ इति ऊचुः। अपरे केचन उक्तवन्तः इदं तु अद्भुतमेव किमपि, पीठोपरि समाधिमग्नता नाम ब्राह्मजनेषु एतावत्कालपर्यन्तं न कदापि दृष्टपूर्वा। एवं परितः सर्वदिक्षु जनानां नानावचोभिः विभिन्नवचनैः तत् समाजवेश्म ब्राह्मसमाजम-न्दिरं सस्वनं कोलाहलपूर्णम् अजनि जातम्॥ ८॥

अन्तर्गतानन्दचिरप्रकाशै निर्वापिता ब्राह्मवरैः प्रदीपाः।
ब्राह्मेऽखिले वस्तुनि सान्धकारे स्थिता नरेन्द्रस्य पुरो गुरोर्भाः॥ ९॥

अन्तर्गतेति। अन्तर्गतः मनसि विद्यमानः आनन्दचिरप्रकाशः आत्यन्तिकसुखानुभवस्वरूपदीप्तिः येषां तादृशैः ब्राह्मवरैः केशवब्राह्मानुयायिभिः तत्रत्यप्रदीपाः निर्वापिताः प्रकाशरहिता विहिताः। एवं दीपनिर्वापणफलस्वरूपं ब्राह्मे भौतिके अखिले सम्पूर्णे ब्राह्मप्रार्थनामन्दिरे तिमिराच्छन्नं यदा जातं तस्मिन्समये नरेन्द्रदेवस्य पुरः गुरोः श्रीरामकृष्णदेवस्य भाः प्रकाशः स्थितः अविद्यत। नरेन्द्रस्य आन्तरं बहिरवस्थानं च प्रकाशपूर्णमेव आसीत्॥ ९॥

सन्नद्ध आसीत् स गुरोः समीपे रक्षार्थमस्यातितरां नरेन्द्रः।
निराकृते निर्गुणनिष्क्रियस्य पूजागृहेऽयं कतमः प्रकारः॥ १०॥

सन्नद्ध इति। स नरेन्द्रः गुरोः श्रीरामकृष्णदेवस्य समीपे पार्श्वे रक्षार्थं यदि कापि आपदापतेदिति भिया अतितराम् अत्यन्तं सन्नद्धः पूर्णरूपेण तत्परः आसीत् स्थितः। निराकृतेः आकृतिशून्यस्य निराकारस्येत्यर्थः निर्गुणस्य सत्त्वादि गुणशून्यस्य निष्क्रियस्य क्रियाशून्यस्य च पूजागृहे प्रार्थनामन्दिरे अयं प्रदीपनिर्वापणादिप्रकारः कतमः अतीवाद्भुतमय इत्यर्थः॥ १०॥

परं श्रीरामकृष्णदेवः ब्राह्मसमाजमन्दिरे किमर्थं गत इति शङ्कायामाह—

कुतो जगन्मातृपदावलम्बो गतो निराकारमतोद्भवेऽस्मिन्।
नरेन्द्र एवात्र निदानमेकं शब्दो विहायास्ति विहायसं किम्॥ ११॥

जगन्मात्रिति। जगन्माता भवतारिणी तस्याः पदे चरणे एव एकः अद्वितीयः अवलम्बः यस्यैतादृशः श्रीरामकृष्णदेवः निराकारमतानां केवलनिराकारेश्वरोपासनापराणां ब्राह्मसमानामित्यर्थः अस्मिन् उद्भवे प्रार्थनोत्सवे 'मह उद्धव उत्सवः' इत्यमरः गतः प्रयातः इति शङ्कायामाह अत्र अस्मिन् विषये श्रीरामकृष्णदेवस्य ब्राह्मसमाजप्रार्थनामन्दिरागमनविषये नरेन्द्र एव एकमद्वितीयं निदानं मूलकारणम् तत्रार्थान्तरन्यासेनाह शब्दः चतुर्विंशतिगुणेषु मध्ये शब्दगुणः विहायसं विहाय कुत्राप्यन्यत्र विद्यते किम् न कुत्रापीत्यर्थः। शब्दगुणकमाकाशमिति आकाशलक्षणं तर्कशास्त्रे॥ ११॥

अद्वैतमायाति गुणैः प्रभेदं नीरं यथा शैत्यवशाद्धिमत्वम्।
नाम्नः पृथक्त्वं खलु सत्यमेकं कुतो विवादावसरप्रसारः॥ १२॥

अद्वैतमिति। अद्वैतं 'एकमेवाद्वितीयं' गुणैः सत्त्वरजस्तमोभिः प्रकृतिस्थगुणैः प्रभेदं भिन्नत्वमायाति प्राप्नोति। वस्तुतस्तु अद्वैतमेव सत्यं गुणसम्बन्धादेवं तस्याद्वितीयस्य वस्तुनः व्यष्टिरूपभेदोऽवलोक्यते तत्र दृष्टान्तमाह—यथा नीरमेकरसं शैत्यगुणवशात् हिमत्वं तुषारत्वमायाति अधिगच्छति। नाम्नः विविधत्वकारणात् एकं वस्तु अन्यस्मात् वस्तुनः पृथक् भवति सत्यं तु एकमेव विद्यते। अत्र अस्मिन् विषये विवादस्य संदेहस्य अवसरप्रसारः स्थानप्राप्तेः न सम्भवः 'एकं सद्विप्रा बहुधा वदन्ति' इति श्रुतेः सत्यमेकमेव गुणतः दृष्टिभिन्नतया भेद इव लक्ष्यते न तु वस्तुतः॥ १२॥

तस्मै न चेत् स्वागतमुक्तमेतैरनायनन्तापचितिप्रसक्तैः।
ततः किमम्भोजकदम्बकानां संकोचतश्चन्द्रमसः क्षतिः का॥ १३॥

तस्मै नेति। चेद्यदि एतैः कैश्चिद्ब्राह्ममतानुयायिभिः न तु सर्वैः अस्मै श्रीपरमहंसदेवाय स्वागतं स्वागतमिति वचनं नोक्तं न व्याहृतं एतैः के इत्याह—अनाद्यनन्तस्य निर्गुण-निराकारस्य अपचितिः पूजा तत्र प्रसक्तैः प्रमितैः सतः किम्। न किमपीत्यर्थः। तस्य स्वागतवचनाभावे न कापि हानिरजायत। यदि अम्भोजकदम्बकानि चन्द्रोदये मुकुलन्ति तेन चन्द्रमसः का क्षतिः हानिः। 'मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः'॥ १३॥

समादरो वाऽस्तु निरादरो वा नासीत् स्वचिन्ताविषयस्तदानीम्।
शिष्यं प्रियं दत्तकुलावतंसं तं सोऽधिगम्यातितरां तुतोष॥ १४॥

समादर इति। ब्राह्मसमाजप्रार्थनामन्दिरे तस्य रामकृष्णदेवस्य समादरः अर्हणा अस्तु भवतु निरादरः अपमानः भवतु वा इत्याकारकस्तदानीं तदा काले चिन्ताविषयो विचारार्हं वस्तु नासीत्। स तु मानापमानयोस्तुल्य एवाभूत्। एतत् सत्यं यत् स परमहंसदेवः दत्तकुलावतंसं दत्तकुलोत्पन्नं विश्वनाथदत्तसुतं स्वकीयं प्रियं स्नेहपात्रं शिष्यं तं नरेन्द्रनाथम् अधिगम्य अतितराम् अतिशयं तुतोष अतुष्यत्॥ १४॥

परं स दत्तान्वयजः किलेति न स्नेहपात्रं निजदेशिकस्य।
यद्विश्वसन्देशमयं जनानां संश्रावयिष्यन् भुवनेऽवतीर्णः॥ १५॥

परं स इति। परं परन्तु स केवलं दत्तान्वयजः दत्तकुलोत्पन्नः किल न किञ्चिदपर इति हेतोः केवलं निजदेशिकस्य स्वाचार्यस्य स्नेहपात्रं प्रेमास्पदं न आसीत् इति शेषः। अपि तु अयं नरेन्द्रः भविष्यन् विवेकानन्दः जनानां विश्वमानवानां जनान् प्रति इत्यर्थः वेदान्तस्य विश्वसन्देशं विश्वभ्रातृत्वप्रवृत्तिं भविष्यति काले श्रावयिष्यन् प्रचारयिष्यन् एतद्ध्येयसिद्ध्यर्थमेव केवलं भुवने जगति अवतीर्णः आगतवान्॥ १५॥

नरेन्द्रमावासगतं स मिश्रैरप्रीणयत् स्वादुतरैः पदार्थैः।
दत्तस्य तद्दर्शनवर्जमेकः क्षणः क्रमेण क्षणशून्य आसीत्॥ १६॥

नरेन्द्रमिति। स परमहंसः आवासगतं स्वनिवासस्थानं गतं प्राप्तं दक्षिणेश्वरागतमित्यर्थः मिश्रैः विविधैः स्वादुतरैः अतिमधुरैः पदार्थैः मिष्टान्नादिभिः अप्रीणयत् अतोषयत्। तथैव नरेन्द्रस्यापि गुरुदर्शनं विनोत्कण्ठां वर्णयति—दत्तस्य नरेन्द्रस्य तद्दर्शनवर्जम् वर्जयित्वा एकः क्षणोऽपि क्षणात्मकः समयोऽपि क्रमशः क्षणशून्यः आनन्दरहित आसीत्। स्वाचार्यं विना स क्षणमप्यवस्थातुं न समर्थोऽभूदिति भावः॥ १६॥

यथा नरेन्द्रेण परीक्ष्यैव श्रीरामकृष्णः गुरुरूपेण स्वीकृतः तथैव गुरुणापि तस्य परीक्षा कृतेत्याह—

यथा गुरुस्तेन वृतः परीक्ष्य देवस्तमङ्गीकृतवांस्तथैव।
कार्तस्वरं निर्मलमन्यथा वाऽवगम्यते तत् कषघर्षणेन॥ १७॥

यथा गुरुरिति। यथा यादृशेन येन प्रकारेण गुरुः श्रीरामकृष्णदेवः तेन नरेन्द्रेण परीक्ष्यैव परीक्षां कृत्वैव वृतः आचार्यत्वेन स्वीकृतः, तथैव गुरुरपि नरेन्द्रं विविधोपायैः परीक्ष्यैव शिष्यत्वेनाङ्गीचकार। तत्र दृष्टान्तमाह—कार्तस्वरं सुवर्णं निर्मलं निर्दोषम् अन्यथा वा सदोषं वा एतत् कषघर्षणेन निकषपाषाणोपरि घर्षणादेवावगम्यते ज्ञायते। 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा'। इति कालिदासो रघुवंशे॥ १७॥

तमेव शिष्यपरीक्षाप्रकारमाह—

सायासमायासि निवासमेनं कुतो मुहुस्त्वं गुरुणाऽनुयुक्तः ।
ब्रूते ध्रुवं प्रेम परं पदेऽस्मिन्नाकर्षहेतुर्मनसाऽप्यचिन्त्यः ॥ १८ ॥

सायासमिति । स नरेन्द्रः गुरुणा रामकृष्णदेवेन अनुयुक्तः पृष्टः । किं पृष्टः इत्याह—'एनं मम निवासं स्थानं मुहुः पुनः पुनः सायासं आयासेन सह खिद्यन् कुतः कस्मात् हेतोः आयासि आगच्छसि' इत्थमनुयुक्तः नरेन्द्रः ब्रूते 'अस्मिन् पदे गुरुचरणयोः ममान्तःकरणे ध्रुवं स्थिरं प्रेमैव एकमात्राकर्षणहेतुः । सोऽपि हेतुः मनसापि अचिन्त्यः मनोविषयबाह्यः । कीदृशः स स्नेह इति मनसापि भावयितुं न शक्यते ॥ १८ ॥

अथागतेऽस्मिन् स्वगृहं गते वा देवस्तटस्थोऽजनि बुद्धिपूर्वम् ।
तथापि रोलम्ब इवाम्बुजेऽस्मिन् स्थितश्चिरासक्तमना नरेन्द्रः ॥ १९ ॥

अथागत इति । अथानन्तरं कदापि अस्मिन् नरेन्द्रे आगते दक्षिणेश्वरं प्राप्ते अथवा स्वगृहं स्वनिवासस्थानं गते प्रयाते वा देवः परमहंसदेवः बुद्धिपूर्वं नतु अज्ञानात् तटस्थः कुशलाकुशलचिन्तारहितः अजनि जातः । तथापि गुरोस्तटस्थेऽपि अम्बुजे कमले रोलम्ब इव भ्रमर इव अस्मिन् श्रीरामकृष्णे नरेन्द्रः चिरासक्तमनाः चिरकालप्रसितमानसः स्थितः अवतस्थे ॥ १९ ॥

अन्योऽन्यमात्मद्वयसंगमोऽयं स्नेहेन केनापि सताऽन्तरेण ।
हार्दं यथार्थं त्वविपर्ययं स्यादकृत्रिमं चान्यगुणानपेक्ष्यम् ॥ २० ॥

अन्योऽन्यमिति । अयम् अन्योऽन्यं परस्परं आत्मद्वयसंगमः श्रीरामकृष्णेन सह नरेन्द्रस्य संयोगः एकत्र सम्मेलनं केनापि अनिर्वचनीयेन आन्तरेण मानसेनाध्यात्मिकेन वा स्नेहेन प्रेम्णा अजायत इति शेषः । तत्रार्थान्तरन्यासेनाह–यथार्थं परिशुद्धं निर्मलं हार्दं प्रेम तदेव यत् अविपर्ययं सर्वकालेषु परिवर्तनशून्यं तथाऽकृत्रिमं स्वाभाविकम् । एतादृशप्रेम्णः अन्येषां केषांचिद् गुणानाम् अपेक्षा न भवति ॥ २० ॥

नरेन्द्रनाथेन सहैव नित्यं गतागतं चक्रुरनेकशिष्याः ।
अद्वैतसद्वैतमतावलम्बाः सम्बाधपूर्णेऽमलदक्षिणेशे ॥ २१ ॥

नरेन्द्रनाथेनेति । नित्यं दिवानिशं नरेन्द्रनाथेन सहैव तेनैव सार्धम् अनेके बहवः शिष्याः । कीदृशास्ते केचिदद्वैतमतावलम्बा अद्वैतवादिनः केचिच्च सद्वैतं द्वैतेन सह सद्वैतं तादृशं यन्मतं तदवलम्बनशीलाः सम्बाधपूर्णे जनसम्मर्दयुक्ते दक्षिणेश्वरे गतागतं गमनागमनं चक्रुः कृतवन्तः ॥ २१ ॥

ततः किमित्याह—

श्रीरामकृष्णोऽप्यखिलांस्तदैतांस्तत्तद्विशेषक्षमतानुसारम् ।
उपासनाध्यानसमर्चनादीनुपादिशत् स्वात्मसुखस्य मार्गम् ॥ २२ ॥

श्रीरामकृष्ण इति । ये भिन्नमतावलम्बिनः शिष्याः दक्षिणेश्वरे मिलिता आसन् तानखिलान् सर्वान् तत्तद्विशेषक्षमतानुसारम् तेषां तेषां विशेषयोग्यतामनुसृत्य उपासना प्रतीकोपासना ध्यानं अष्टाङ्गयोगनिर्दिष्टं चित्तवृत्तिनिरोधपूर्वकं समाधिमार्गसहायकं चित्तैकाग्र्यं तथा समर्चनं षोडशोपचारपूजादिकं यस्य शिष्यस्य यादृशी योग्यता आसीत्

तदनुसारं स्वात्मशिवस्य तत्तद्विष्यकल्याणस्य मार्गं पन्थानम् 'त्वया अनेन मार्गेण गन्तव्यम् त्वया अनेनापरेणे'त्याकारकविविधमार्गानुसरणम् उपादिशत् शिक्षितवान् ॥ २२ ॥

मातेव तेषामिह शारदासीच्छ्रीरामकृष्णो जनकेन तुल्यः ।
सन्तानकल्याणपथेषु चिन्तासन्तानमग्नौ पितरौ यथार्थम् ॥ २३ ॥

मातेवेति । इह दक्षिणेश्वरे श्रीशारदादेवी श्रीरामकृष्णदेवस्य सहधर्मिणी तेषां विविधशिष्याणां मातेव जननीतुल्या आसीत् । तथा श्रीरामकृष्ण परमहंसदेव जनकेन पित्रा सम । अत्रार्थान्तरन्यासेनाह—सन्तानानाम् अपत्यानां कल्याणपथेषु सर्वविध-कल्याणमार्गेषु विषय चिन्तासन्तान विचारपरम्परा तेन यथा आवयो पुत्रपुत्रीणां कल्याण भवेत् इत्याकारकचिन्तने मग्नौ प्रमिनौ मातेव यथार्थं पितरौ माता च पिता च पितरौ इत्येकशेष ॥ २३ ॥

एतेषु सर्वेष्वनिशं नरेन्द्रो बभूव भूमामृतमज्जनार्थी ।
अलौकिके कर्मणि लौकिके वाऽप्यद्वैतमुत्सृज्य किमस्ति तत्त्वम् ॥ २४ ॥

एतेष्विति । एतेषु विविधयोग्यतावत्सु सर्वेष्वपि शिष्येषु केवल नरेन्द्र एव विशेषतया भूमामृतमज्जनार्थी ब्रह्मस्वभावागमाभिलाषुक आसीत् । अलौकिके महावाक्यनिर्दिष्टब्रह्मै-क्यानुभवात्मके अथवा लौकिके नित्यसांसारिककर्मणि वा अद्वैतम् ब्रह्म उत्सृज्य परित्यज्य किमपि तत्त्व सत्यम् अस्ति किम् । न किमपीति भाव । सर्वेष्वपि व्यवहारेषु अद्वैततत्त्वमेव याथार्थ्येन अनुगन्तव्यम् ॥ २४ ॥

स्थिरास्थिरार्थप्रकरे विवेकी पारं प्रयातस्त्रिविधैषणाब्धेः ।
दान्तः प्रशान्तो निजमङ्गलेच्छुः श्रद्धान्वितोऽद्वैतपदाधिकारी ॥ २५ ॥

स्थिरास्थिरार्थेति । स्थिरम् अनाद्यनन्तम्, अस्थिरम् अचिरस्थायि भौतिक वस्तु एता-दृशा ये अर्थाः पदार्थाः तेषां प्रकरे समूहे विषय विवेकी सदसद्विवेकविचारशील तथा त्रिविधायाः पुत्रैषणा दारैषणा वित्तैषणा इत्याकारकैषणात्रयस्वरूपाय अब्धे समुद्रस्य पारं प्रयात विजितैषणात्रय इत्यर्थ, दान्त जितेन्द्रिय प्रशान्त शान्तचित्त निजमङ्गलेच्छु स्वकीयात्यन्तिकसुखप्राप्त्यभिलाषुक श्रद्धान्वित आस्तिकविचारशील एव गुणविशिष्ट नरेन्द्र एव सर्वशिष्येषु मध्ये वरिष्ठ अत एव अद्वैतपदाधिकारी साक्षादद्वैतानुभवयोग्य आसीत् ॥ २५ ॥

नीराजनादीपरुचा प्रदोषे दोषान्धकारो हृदयान्निरस्तः ।
अभ्यर्थनाकोमलमूर्च्छनाभिः समाधिमग्नोऽजनि रामकृष्णः ॥ २६ ॥

नीराजनेति । नीराजनाया आरात्रिकस्य य दीप तस्य रुचा प्रकाशेन प्रदोषे साय-कालसमये दोषा दुर्वासनादिरूपा ये दुर्गुणा त एव अन्धकार तम दुर्वासनान्धतमस-मित्यर्थं हृदयात् भक्तगणहृदयेभ्य निरस्त बहिष्कृत आसीत् नीराजनासमये अभ्यर्थनाया प्रार्थनागानस्य कोमलमूर्च्छनाभि मधुरस्वरारोहावरोहै श्रीरामकृष्णदेव अपि समाधिमग्न निर्विकल्पसमाधिलीनोऽजनि जात ॥ २६ ॥

गदाधरोऽयं भवतारिणीयं सुरापगापुण्यतरङ्गसङ्गः ।
सम्मेलनं साधकसाधुवर्गं स्वर्गापवर्गावनिदोऽत्र स्म ॥ २७ ॥

गदाधर इति। दक्षिणेश्वरमन्दिरे स्वर्गसुखादप्यधिकं सुखमभूदित्याह-अयं गदाधरः श्रीरामकृष्णदेवः। श्रीरामकृष्णस्य जन्म गयायां गदाधरदर्शनफलस्वरूपमजनि अतः पित्रा तन्नाम 'गदाधर' इति कृतमासीत्। गदाधरः विष्णुस्तद्रूपः भवतारिणीयं इयं प्रत्यक्षदर्शनीया कालिका। सुरापगायाः भागीरथ्याः पुण्याः पवित्राः तरङ्गाः वीचयः तैः सङ्गः सम्बन्धः तथास्मिन् स्थाने साधकानां साधनाशीलानां साधूनां सिद्धमहात्मनां वर्गः समूहः एतच्चतुष्टयं यत्र विद्यते स स्वर्गः देवलोकः अपवर्गः मोक्षः तौ उभावपि अतिशेरते स्म अतिक्रम्य अस्थात्। दक्षिणेश्वरे स्वर्गापवर्गातिशायिसुखमभूदिति भावः ॥ २७ ॥

कदाचिदद्वैतसुखानुभूतावध्यापयन् धर्मपिता नरेन्द्रम्।
विसृज्य शिष्यानितरांस्तमेकं रहः समानीय रहस्यमाह ॥ २८ ॥

कदाचिदिति। कदाचित् कस्मिंश्चित् समये धर्मपिता धर्माचार्यः श्रीरामकृष्णः नरेन्द्रं स्वशिष्यम् अद्वैतसुखानुभूतौ अद्वैतसाक्षात्कारविषये अध्यापयन् उपदिशन् इतरान् अन्यान् शिष्यान् विसृज्य गमनायोपदिश्य तथा तमेकं केवलं नरेन्द्रं रहः एकान्तम् समानीय रहस्यम् अद्वैतज्ञानरहस्यम् आह प्रकाशितवान् ॥ २८ ॥

अज्ञानतः शुद्धमनाद्यनन्तं चैतन्यमेकं द्विविधं चकास्ति।
व्यस्तं समस्तं न तु वस्तुतस्तद्वनस्य तस्यैव स एव वृक्षः ॥ २९ ॥

अज्ञानत इति। अज्ञानतः ज्ञानाभाववशात् शुद्धं नित्यशुद्धबुद्धस्वरूपम् अनाद्यनन्तम् आद्यन्तरहितं चैतन्यस्वरूपं परं ब्रह्म एकं सदपि व्यस्तं समस्तम् इति व्यष्टिसमष्टिरूपेण द्विविधं द्विप्रकारकं भवति न तु वस्तुतः तत्रोदाहरणमाह यथा तस्यैव वनस्य वृक्षसमुदायरूपस्य समष्टिरूपस्येत्यर्थः स एव वृक्षः व्यष्टिरूपः। यथा वनरूपेण समष्टिः वृक्षरूपेण व्यष्टिः वस्तुतस्तु वनवृक्षयोस्तादात्म्यभावः न तु वनवृक्षयोर्भेदः। द्वैतमज्ञानजम् अद्वैतमेव यथार्थमिति भावः ॥ २९ ॥

ब्रह्माहमस्मीत्यनुभूय पूर्वं तत्त्वं भवस्येवमुदीयते धीः।
अन्योऽयमात्मापि तदेव सर्वं चराचरं ब्रह्म ततोऽवगम्यम् ॥ ३० ॥

ब्रह्माहमिति। अहं स्वयं परब्रह्मस्वरूपः अस्मि इत्याकारकम् अनुभवं साधकः प्राप्नोति तादृशानुभवप्राप्त्यनन्तरं त्वं मदन्यः मध्यमपुरुषोऽपि ब्रह्मस्वरूपः इत्याकारिका धीः उन्नीयते उत्पद्यते। ततः अस्मद्युष्मद्भ्यां भिन्नः अन्यपुरुषोऽपि ब्रह्मस्वरूपः इति प्रज्ञा उदेति अन्ते सर्वं खल्विदं ब्रह्म अर्थात् स्थावरजङ्गमात्मकं सर्वमपि वस्तुजातं ब्रह्मस्वरूपमिति बुद्धिरुत्पद्यते। 'अहं ब्रह्मास्मि' 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'सर्वं खल्विदं ब्रह्म' इति औपनिषदमहावाक्यानुसारं क्रमतः चराचरं जगत् ब्रह्मस्वरूपमिति ज्ञानं जायते ॥ ३० ॥

अविद्यया भूम्नि जगद्विचारो गुणे यथोदेति भुजङ्गबुद्धिः।
गुणप्रबोधेऽन्तमुपैति सर्पो ज्ञातेऽगुणे क्वापि जगद्विलीनम् ॥ ३१ ॥

अविद्यया इति। भूम्नि नित्यशुद्धबुद्धमुक्तस्वरूपे परब्रह्मणि अविद्यया अज्ञानकारणात् जगद्विचारः पाञ्चभौतिकसृष्टेः विचारः इन्द्रियद्वारा प्रत्यक्षीकरणं जायते। परन्तु तत्र को मोहः कः शोकः एकत्वमनुपश्यतः इत्यज्ञानपरिहारेण सर्वं ब्रह्ममयं जगत् इति धीरुदेति। यथा वा गुणे रज्जुखण्डे तमोहेतोः भुजङ्गबुद्धिः सर्पभ्रमः जायते। परन्तु गुणप्रबोधे इयं

रज्जु इति ज्ञानानन्तरं सर्पः सर्पभ्रम अन्तमेति विनश्यति । तथैव अगुणे निर्गुणनिराकारे ज्ञाते अवगते सति जगत् क्वापि विलीनम् अदृश्य भवतीति शेष । एतादृश अपरोक्षानुभवोऽपि नरेन्द्रस्य समुत्पन्न आसीत् ॥ ३१ ॥

अहं त्वमन्यश्च जगत् समग्रं ब्रह्मेतिबोधेऽनुभवे च सिद्धे ।
सुखाम्बुधौ सर्वविकल्पशून्ये निमज्जनं ते भविताऽपरोक्षम् ॥ ३२ ॥

अहं त्वमिति । एवम् 'अहं ब्रह्मास्मि' इत्यनेन 'अहम्' 'तत्त्वमसि' इत्यनेन 'त्वम्' 'अयमात्मा ब्रह्म' इत्यनेन अन्यपुरुष ततश्च 'सर्वं खल्विदं ब्रह्म' इत्यनेन चराचर जगत् सर्वमेव ब्रह्म इति बोधे ज्ञाने न केवल ज्ञाने अपि तु प्रत्यक्षसाक्षात्कारे च सिद्धे ते तव नरेन्द्रस्य सर्वै विकल्पै कल्पनाभि शून्ये रहिते सुखाम्बुधौ महानन्दानुभवसमुद्रे निमज्जन अवगाहन भविता भविष्यति । इदमेवापरोक्षसाक्षात्कार इत्युच्यते ॥ ३२ ॥

नरेन्द्रदेवोऽपि बहिः सतीर्थ्यान् जगाद सर्वं गुरुणोपदिष्टम् ।
कोऽप्याह वस्त्रं गृहमासनं वा ब्रह्मैव चेन्नैव न किं विचित्रम् ॥ ३३ ॥

नरेन्द्रदेवोऽपीति । नरेन्द्र अपि रहसि गुरुणा यदुपदिष्टम् तत्सर्वं बहिरागत्य सतीर्थ्यान् गुरो अन्यशिष्यान् जगाद कथितवान् । तेषु सतीर्थ्येषु मध्ये समाने तीर्थे गुरौ वासिन सतीर्थ्या कश्चित्सस्मितमाह अब्रवीत् वस्त्र परिधान गृह मन्दिरम् आसनमासन्दी इति सर्वमेव यदि ब्रह्मस्वरूप तर्हि एतत्सर्वं विचित्र न किम् । अतिविचित्रमिति भाव ॥३३॥

वचो नरेन्द्रोऽपि निशम्य सख्यु सन्देहसन्दोहभृतान्तरोऽभूत् ।
अहो ! परप्रेरितधीरहं यच्छरीरमन्नं गृहमीश्वरो मे ॥ ३४ ॥

वच इति । नरेन्द्र अपि सख्यु सतीर्थ्यस्य सस्मित वच निशम्य श्रुत्वा पुनरपि सन्देहाना संशयाना य सन्दोह समूह अनेकप्रकारक सन्देह इत्यर्थ तेन भृत परिपूरित मानस यस्य एतादृश अभूत् बभूव । चिन्तितवाश्च । अहो इत्याश्चर्ये । अहं नरेन्द्र परेण आत्मनिश्चय विनैव अन्येन प्रेरिता उद्भासिता धी बुद्धिर्यस्यैतादृश । मया तु एतादृशेन न भवितव्यमिति भाव । यत् शरीर देह अन्न भक्ष्यवस्तुजात गृह मन्दिर वा सर्वमेव मे ममेश्वरस्वरूपम् ॥ ३४ ॥

तत किं जातमित्याह—

अद्वैततत्त्वावगमप्रतिष्ठ शृण्वन्नदोऽभ्यन्तरत समग्रम् ।
'किमुच्यतेऽद्वैतमसत्यमेवं' बहि समागत्य नवानवादीत् ॥ ॥ ३५ ॥

अद्वैतेत्यादि । अद्वैततत्त्वस्य 'सर्वं खल्विदं ब्रह्म' इत्याकारकज्ञानस्य अवगमे लाभे प्रतिष्ठा स्थिरस्थिति यस्य साक्षादनुभूताद्वैततत्त्व गुरु अद इद सतीर्थ्यै सह विहित वार्तालापम् अभ्यन्तरत गृहाभ्यन्तरभागे स्थित एव समग्रं सर्वं श्रुत्वा निशम्य बहि स्वकोष्ठाद्बहिर्भागमागत्य तान् नवान् युवभक्तान् अवादीत्—किमवादीत् इत्याह—'किमुच्यते युष्माभि 'अद्वैतम्' असत्यम् एव किमपि भवद्भिरुच्यते किम् । युष्माकं वचनमेव अयथार्थं न तु अद्वैतमसत्यमिति भाव ॥ ३५ ॥

पस्पर्श चैनं करपल्लवेन सोऽभूत् स्वयं चापि समाधिलीन ।
हीनः पुनश्चेतनया नरेन्द्रः साक्षात्स्वतामेदमतिः कृती सः ॥ ३६ ॥

परस्पर्शेति। गुरुः एवं नरेन्द्रं करपल्लवेन स्वकोमलकरेण। परस्पर्शं स्पृष्टवान्। स गुरुः श्रीरामकृष्णदेवोऽपि स्वयं समाधिलीनः विकल्पशून्यसमाधिमग्नः अभूत्। अथ नरेन्द्रः पुनश्चेतनया हीनः वाह्यचेतनाशून्यः सन् साक्षात्कृता प्रत्यक्षीकृता अभेदमतिः अद्वैतधीः येन अत एव कृती धन्यः अभूत्। पुनरेकदैतेन ब्रह्मसाक्षात्कारो विहित इति भावः ॥ ३६ ॥

वृक्षा मृगाश्चापि नरा गृहाणि परस्पराभेदपराणि रेजुः।
न केवलं तस्य समाधिलाभे प्रजागरेऽभूदनुभूतिरेवम् ॥ ३७ ॥

वृक्षा इति। वृक्षा महीरुहाः, मृगा आसमन्ताद्विचरमाणा पशवः नरा मनुष्या गृहाणि मन्दिराणि एतानि सर्वाण्यपि वस्तूनि परस्पराभेदपराणि अन्योन्येभ्यः अविभिन्नस्वरूपाणि रेजुः शुशुभिरे तादृशस्वरूपाणि ददृशिरे इत्यर्थः। इदं यावत्कालपर्यन्तं नरेन्द्रः समाधिमग्नः आसीत् तावत्कालपर्यन्तमेव न अपितु प्रजागरे जागरितावस्थायामपि तस्यैतादृशोऽनुभवः आसीत् ॥ ३७ ॥

गृहं प्रयातो निजपार्श्वयोर्यद्विलोकितं तद् ध्रुवमेकमेव।
स्वमन्दिरे पर्युषितं जनन्या पात्रेऽन्नमप्याकृतिशून्यमासीत् ॥ ३८ ॥

गृहं प्रयात इति। गृहं स्वनिवासस्थानं प्रयातः प्राप्तः निजपार्श्वयोः उभयतः तेन यत्किञ्चिदवलोकितं तत्सर्वं ध्रुवं निश्चयपूर्वकमेकमद्वितीयमेव। स्वमन्दिरे स्वगृहे जनन्या मात्रा परिवेशितं भोजनार्थं पुरः स्थापितं पात्रे भोजनपात्रे अन्नपानादिकमपि आकृतिशून्यं निर्गुणनिराकारस्वरूपम् आसीत् ब्रह्ममयमेव प्रतीतमित्यर्थः ॥ ३८ ॥

तूष्णीं विले! किं चिरमास्यतेऽनु योगेन संस्मारित एष मातुः।
पुरो ददर्शौदनसूपशाकं 'ब्रह्मैव सर्वं' समवाप्तसंवित् ॥ ३९ ॥

तूष्णीमिति। स्वमातुः जनन्याः अनेन अनुयोगेन पृच्छया संस्मारितः स्मरणविषयीकृतः केन अनुयोगेनेत्याह—विले। रे वीरेश्वर। त्वया भोजनं किं न क्रियते किमर्थं चिरम् एतावत्कालपर्यन्तं तूष्णीं मौनम् आस्यते त्वया स्थीयते? इति स्मारितः नरेन्द्रः सर्वमिदं ब्रह्मैव इति जातसंवित् उत्पन्नबोधः पात्रे परिवेशितम् ओदनः भक्तं सूपं वरान्नं शाकादिकं सर्वमपि ब्रह्मस्वरूपमेव ददर्श ॥ ३९ ॥

गुरोरतुल्यात्मबलान्नरेन्द्रः प्रोद्दाममत्तस्तीव वशं जगाम।
अङ्गीचकारैनमनुक्रमेण सन्मार्गनिर्देशकमात्मनस्तम् ॥ ४० ॥

गुरोरिति। गुरोः आचार्यस्य अतुल्येन अलौकिकेन आत्मबलेन आध्यात्मिकसामर्थ्येन नरेन्द्रः प्रोद्दाममत्तस्तीव अत्यधिकबलयुक्तगज इव सन्नपि श्रीरामकृष्णदेवस्य वशमागतः। तथा अनुक्रमेण क्रमशः तं श्रीरामकृष्णम् आत्मनः स्वस्य मार्गनिर्देशकं पथप्रदर्शकं तत्त्वरूपेणेत्यर्थः अङ्गीचकार उररीकृतवान् ॥ ४० ॥

इत्थं प्रयोगात्मकपाठदानैरध्याप्य शिष्यं परितो निरीक्ष्य।
तस्मिन्नविश्वासविपर्ययादीन् दोषानलं स्नेहवशादहार्षीत् ॥ ४१ ॥

इत्थमिति। इत्थमनेन प्रकारेण प्रयोगात्मकैः प्रत्यक्षोदाहरणात्मकैः पाठदानैरुपदेशात्मकशिक्षाभिः शिष्यं नरेन्द्रं परितः सर्वतः निरीक्ष्य परीक्ष्य अध्याप्य शिक्षयित्वा

तस्मिन् शिष्ये अविश्वासः नास्तिकताभासस्वरूपः विपर्ययः अयथार्थज्ञानम् एवमादीन् शिष्यगतदोषान् स्नेहवशात् आन्तरिकप्रेमपूर्णव्यवहारद्वारेण अहार्षीत् अपाहरत् ॥ ४१ ॥

रामः पुराद्वैतधियं वशिष्ठात् पार्थोऽच्युतादाप च विश्वरूपम् ।
परीक्षिताद्दोषदृशाप्यभीक्ष्णं श्रीरामकृष्णादुभयं नरेन्द्रः ॥ ४२ ॥

राम इति । पुरा पुराकाले प्राचीनसमये रामः दाशरथिः वशिष्ठात् तन्नाम्नः स्वगुरोः अद्वैतधियं अखण्डाद्वैतभावनाम् आप प्राप्तवान् । तथा पार्थः पृथापुत्रः अर्जुनः अच्युतात् विश्वरूपं द्रष्टुमिच्छामि ते रूपमित्यादि वर्णितं भगवतः विश्वरूपं सर्वव्यापिरूपम् आप प्राप्तवान् तथैव दोषं पश्यति इति दोषदृक् तेन नरेन्द्रेण अथवा दोषैकदृष्ट्या परीक्षितात् कृतपरीक्षात् श्रीरामकृष्णात् उभयमपि अर्थात् अद्वैतभावना तथा विश्वरूपदर्शनम् एत दुभयमपि श्रीरामकृष्णगुरोः प्राप लेभे ॥ ४२ ॥

न केवलं मौखिकशब्दजालं गुरोर्विधानं त्वनुभूतिपूर्वम् ।
कृतापरोक्षः स विहाय सर्वाञ्छ्रीरामकृष्णं शरणं चकार ॥ ४३ ॥

न केवलमिति । गुरोः श्रीरामकृष्णदेवस्य यत्किञ्चिदपि विधानम् उक्तिविशेषः नरेन्द्रं प्रति आसीत् तत्सर्वम् अनुभूतिपूर्वं साक्षात्कारपूर्वकमेवासीत् तद्यथा—ईश्वरदर्शनं तेन सह वार्तालापः इत्यादि । तत्सर्वं केवलं मौखिकशब्दजालं मुखेनोच्चारितविविधशब्दसमूहस्वरूपं नासीत् । अत एव स नरेन्द्रः तत्सहायेन कृतापरोक्षः अधिगतापरोक्षानुभवः नरेन्द्रः सर्वान् अन्यान् येभ्यः ज्ञानाधिगमसम्भवः भवेदिति स मेने तानितरान् मतानपि श्रीरामकृष्णदेववर्जमिति भावः विहाय श्रीरामकृष्णमेव शरणम् आश्रयं चकार कृतवान् ॥ ४३ ॥

द्वन्द्वं नमस्यं गुरुशिष्ययोस्तद् द्वन्द्वादतीतं नयमद्वितीयम् ।
असविदा द्वन्द्वपरं परं स्वं परस्परं तत्परमाशु दिक्षु ॥ ४४ ॥

द्वन्द्वमिति । गुरुशिष्ययोः श्रीरामकृष्णनरेन्द्रयोः तत् अनिर्वचनीयं नमस्यं पूजनीयं द्वन्द्वं युगलं नयं निरन्तरं नवनवस्वरूपं द्वन्द्वादतीतं द्वैतभावनायाः पारगतं द्वन्द्वं सदपि द्वन्द्वातीतमिति विरोधाभासः । तथा अद्वितीयम् उपमाशून्यम् । अज्ञाने असंविदा अज्ञानेन साकमिति शेषः द्वन्द्वपरं युध्यमानम् अविद्यानाशनपरमित्यर्थः परं परन्तु तत् सर्वविज्ञानपुरुषेषु मध्ये परं सर्वश्रेष्ठं स्वम् आत्मस्वरूपं परस्परमितरेतरमित्यव्ययम् आशु सत्वरं दिक्षु स्वकीयपार्श्वस्थेन अजस्थानं परस्परं दातुमिच्छु सर्वैरैक्योभावावगमार्थं बद्धपरिकरम् आसीदिति शेषः केवलं लौकिकदृष्ट्या युगलरूपेण पृथग्भावालोक्यमानं वस्तुतस्तु अभिन्नस्वरूपमिति भावः ॥ ४४ ॥

चिन्तापराऽभूज्जननी तदीया गदेन केनापि 'बिले' परीतः ।
पुरोगतं योऽखिलवस्तुजातं पश्यन्नपि प्रत्ययशून्य एव ॥ ४५ ॥

चिन्तापरेति । तदीया नरेन्द्रस्य जननी भुवनेश्वरी चिन्तापरा नरेन्द्रविषये उत्कण्ठासक्ता अभूत् । कीदृशी सा चिन्तेत्याह—'बिले' नरेन्द्रः केनापि अज्ञानेन गदेन रोगेण परीतः आक्रान्तः यः नरेन्द्रः पुरोगतं पुरतः स्थापितम् अखिलवस्तुजातम् अन्नपानादिस्वरूपं पश्यन्नपि तद्वस्तुजातम् इन्द्रियविषयीकुर्वन्नपि प्रत्ययशून्य एव तत्तद्विषयकज्ञानशून्य एवेत्यहो आश्चर्यमिति तस्याश्चिन्ताविषयः ॥ ४५ ॥

'चराचरव्यापिनमीशमेकं विभाव्य नित्यं प्रियतास्वरूपम् ।
सर्वस्वमस्यार्प्य' मिदं नरेन्द्रोऽद्वैतानुभूतेर्विभवादवादीत् ॥ ४६ ॥

चराचरव्यापीति। चराचरव्यापिनं स्थावरजंगमात्मकजगद्व्यापिनं 'स भूमिं विश्वतो वृत्वा' इति श्रुत्यनुसारम्। नित्यम् अनाद्यनन्तं प्रियतास्वरूपम् प्रेमरूपं विभाव्य स साक्षात्कारं ज्ञात्वा अस्य परमेश्वरस्य तस्मै इत्यर्थः स्वकीयं सर्वस्वमपि अर्प्यम् अर्पणीयम् इति इत्थं नरेन्द्रः अद्वैतानुभूतेः अद्वैतसाक्षात्कारस्य अनुभवस्य विभवात् ऐश्वर्यात् अवादीत् उक्तवान् ॥ ४६ ॥

निःस्वेषु दीनेषु च दुःखितेषु विशेषतः संस्थित एष सेव्यः ।
ईशास्वरूपेदृशजीवसेवा सेवा पराऽस्ते परमेश्वरस्य ॥ ४७ ॥

निःस्वेष्विति। एषः परमेश्वरः विशेषतः विशेषरूपेण निःस्वेषु दरिद्रेषु, दीनेषु असहायेषु दुःखितेषु आपद्ग्रस्तेषु च संस्थितः विद्यमानः सेव्यः सेवनीयः। सर्वव्यापित्वेन ईश्वरः सर्वत्र विद्यत एव परं विशेषतः दीनदुःखिजनेषु विद्यमानः ईश्वरः सेवार्ह इति भावः। ईशास्वरूपाणां परमेश्वररूपाणाम् ईदृशानां जीवानां सेवैव परमेश्वरस्य परा श्रेष्ठा सेवा पूजा आस्ते। सर्वथा तादृशजीवसेवैवास्माकं कर्तव्यम् ॥ ४७ ॥

नित्यं लयो भूम्नि नरेन्द्रलक्ष्यं गुरोस्तथापीष्टतरा नृसेवा ।
तमर्थमुद्दिश्य कदाचिदेनमुवाच वाचं परिलोभनीयाम् ॥ ४८ ॥

नित्यमिति। भूम्नि अद्वैतब्रह्मणि नित्यं नैरन्तर्येण लयः मज्जनमेव वस्तुतः नरेन्द्रस्य अन्तिमं लक्ष्यमासीत्, तथापि गुरोः रामकृष्णदेवस्य नृसेवा मानवसेवैव इष्टतरा ब्रह्मणि लयादपि नरेन्द्रकृते तादृशसेवा इष्टतरा आसीदिति शेषः। तमर्थं मानवसेवारूपमुद्देश्यं मनसि कृत्वा कदाचित् कस्मिंश्चित्समये श्रीरामकृष्णदेवः एनं नरेन्द्रं परिलोभनीयां लोभोत्पादनसमर्थां वाचं वाणीम् उवाच उक्तवान्। सिद्धिप्रदर्शकवचनेन नरेन्द्रः कदाचित् विचलितः भवेत् इति विचार्येति भावः ॥ ४८ ॥

जगज्जनन्या स्वकरैः पुरस्ताद् विश्राणिताः पुत्रक सिद्धयोऽष्टौ ।
अर्थो न चास्ते मम ताभिरर्थ्योऽभ्युपेयुषा भक्तिपथं यथेष्टम् ॥ ४९ ॥

जगज्जनन्या इति। श्रीरामकृष्णदेवेनोक्तम् हे पुत्रक! पुरस्तात् पूर्वं जगज्जनन्या भवतारिण्या स्वकरैः स्वहस्तैः अष्टौ सिद्धयः मह्यमिति शेषः विश्राणिताः प्रतिपादिताः विद्यन्ते। ताभिः सिद्धिभिः 'अणिमा महिमा चैव गरिमा लघिमा तथा। प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः।' इत्याकारिकाभिः अष्टसिद्धिभिः मम कोऽपि अर्थः प्रयोजनं न अर्थ्यः प्रार्थनीयः विद्यते तासां सिद्धीनां सहायेन न मम किमपि प्राप्तव्यं विद्यते। यतः यथेष्टं स्वेच्छानुसारं भक्तिपदम् ईश्वरभक्तिमार्गम् उपेयुषा लब्धवता भक्तिमार्गावलम्बिना मया ताभिः सिद्धिभिः सहायिकाभिः न किमपि प्रार्थनीयमिति भावः ॥ ४९ ॥

त्वया विधेयं किल मातृकार्यं मार्गे तवासामुपयोगितास्ते ।
सहायतः सिद्धिकदम्बकस्य साध्यं कठोरं सुकरीक्रियेत ॥ ५० ॥

त्वया विधेयमिति। पुनरप्याहाचार्यः। त्वया नरेन्द्रेण मातृकार्यं विश्वसंदेशप्रसारणस्वरूपं कर्तव्यमास्ते। तस्मिन् त्वयाऽनुगन्तव्ये मार्गे तासामष्टसिद्धीनामुपयोगिता तव सहायप्रदानार्थम् आवश्यकता आस्ते विद्यते। यतः सिद्धीनां कदम्बकस्य समूहस्य

सहायत साहाय्येन कठोरमपि साध्य स्वय सुकरीक्रियेत अनायासत सफलता-माप्नुयात् ॥ ५० ॥

दत्तश्चिरमनुभवत स्वगुरोर्वचस्सु विश्वासपूर्णहृदय सदयं तमूचे ।
जाने ध्रुवं सकलसिद्धिबलान्वितस्त्वं सिद्धेः फलं कथय किं परमेशलाभः ॥५१॥

दत्तश्चिरादिति । दत्त नरेन्द्र चिरानुभवत चिरकालात् स्वगुरुयोग्यताविषये य अनुभव सत्यात्मक ज्ञानम् 'मम गुरौ सर्वमपि शक्यसम्भवमिति अद्य यावज्ज्ञातात्' प्रत्यक्षानुभवात् तस्य वचनेषु विश्वासेन श्रद्धया पूर्णं भृत हृदय यस्य तादृश स्वोपरि दयया सहित एवमूचे उक्तवान् । भवान् अष्टसिद्धिशक्तियुक्त इत्यहं ध्रुवं जानामि परम् प्रसन्ने कथय सिद्धे फल परिणाम परमेश्वरप्राप्ति भवेत्किम् । यद्येव न तर्हि किं प्रयोजनं सिद्धिस्वीकारेण इति प्रश्न ॥ ५१ ॥

श्रीरामकृष्णेन किमुत्तरितमित्याह—

सिद्धिर्भवेद्भगवतोऽध्वनि विघ्नभूता भूतार्थरूपवचनं स गुरोर्निशम्य ।
भूतेऽनयाऽलमिह को नु विवेकशील शाल्योदनं किल विहाय मृषा तुषार्थी ॥

सिद्धिर्भवेदिति । सिद्धि जात्येकवचनम् अष्टसिद्धय इत्यर्थः । भगवत अध्वनि मार्गे विघ्नभूता अन्तरायरूपा भवेदिति गुरो भूतार्थरूप सत्यात्मक वचन वाक्य निशम्य श्रुत्वा भूते अब्रवीत् वर्तमानसामीप्ये वर्तमानवद्वा इति लट् । तर्हि यदि सिद्धय भगवत्प्राप्तिमार्गे बाधास्वरूपा तर्हि ताभिरलं न मम प्रयोजनम् । क विवेकशील मनुष्य । सोऽपि विवेक एव आसीत् । शाल्योदन सुगन्धि तण्डुलसिद्धमोदन विहाय मृषा निष्प्रयोजनमेव तुषाणां कृते धान्यबहिरावरणभूतानुपप्राप्त्यर्थमर्थी प्रयोजनवान् स्यादिति प्रश्न ॥ ५२ ॥

उद्देश्यमन्त्यममुना निजजीवनस्य निर्णीतमीशकृपया सह लोकसेवा ।
येनाप्त शान्तिसुखसम्पदभूद्यतीन्द्रः शिष्योन्नतिर्न तु विना गुरुत प्रसादात् ॥

उद्देश्यमिति । अमुना नरेन्द्रेण निजजीवनस्य स्वपार्थिवजीवितस्य अन्त्यम् अन्तिमम् उद्देश्य साध्य निर्णीतमासीत् । किं तत् ? ईशकृपया सह भगवत्कृपालाभेन सह लोकसेवा । येन कारणेन यतीन्द्रः नरेन्द्र आप्ता अधिगता शान्तिसुखसम्पद् येन तादृश अभूत् । अर्थान्तरेण आह—गुरुत आचार्यस्य प्रसादात् विना गुरुकृपा विना शिष्यस्य कापि मानसिकी आध्यात्मिकी वा उन्नति न शक्या ॥ ५३ ॥

लोकं मोहतमोहतं धृतहिता लोकं विधातु क्षमे
शिष्याध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
काश्या द्वादश भैक्ष्यचरणासक्तेन कीर्त्ये महा
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गश्चतुर्थो गत ॥ ५४ ॥

इति विवेकानन्दमहाकाव्ये पूर्णतालाभो नाम चतुर्थ सर्ग समाप्त ॥ ४ ॥

लोकमिति । लोकमित्यादि प्रधानाश्रय इत्यन्त पूर्ववत् । काश्या द्वादशवर्षपर्यन्त भैक्ष्यचरणासक्तेन माधुकरीवृत्तिमनुसरता त्र्यम्बकसूरिणा विरचिते कीर्तनीये पठनयोग्ये ऽस्मिन्विवेकानन्दमहाकाव्येऽयं चतुर्थ सर्ग समाप्तिं गत ॥ ५४ ॥

इति 'विवेकानन्द'महाकाव्यटीकाया 'विवेकदीपाभिधानाया' चतुर्थ सर्ग समाप्त ॥ ४ ॥

——

## अथ पञ्चमः सर्गः

वेदान्तविद्यावगतिर्यतीन्द्राद् बी० ए० पदं विश्वविद्यालयाच्च ।
एतद्द्वयं बीजमिवोप्तमासीत् प्राक्प्रत्यगाशोभयमेलनस्य ॥ १ ॥

वेदान्तेति । यतीन्द्रात् परमहंसदेवात् वेदान्तविद्यावगतिः ब्रह्मविद्याधिगमः एतत्तु एकम् । अयं तु विश्वविद्यालयात् बी० ए० इति पदवीलाभः । एतद्द्वयं प्राक्प्रत्यगाशोभयमेलनस्य पूर्वपश्चिमदिशोः परस्परसंगमस्य बीजमिव उप्तमासीत् वपनविषयीकृतमिवासीत् । पश्चिमायां दिशि आंग्लभाषाप्रभुतावशाद् गुरोः सकाशात्प्राप्तया ब्रह्मविद्यायाः सहायेन तेन नवधर्मोपदेशो विहितः इति भावः ॥ १ ॥

'एकत्वसंख्यामिलिताऽद्वयेन द्विकं विधत्ते' नियमोऽङ्कशास्त्रे ।
संमेल्य लोकेऽयमनेकधर्मानेकं विधातेति न किं विचित्रम् ॥ २ ॥

एकत्वसंख्येति । यदि एकत्वसंख्या 'एक' इति संख्याऽद्वयेन अन्यया 'एक' इत्याकारकसंख्यया मिलिता द्विकं विधत्ते एकमेकेन संमिलितं सत् द्वौ इति संख्या निष्पद्यते । इति अङ्कशास्त्रे गणितशास्त्रे नियमः अस्ति । अनेन भाविविवेकेन तु किमपि अद्भुतं विहितम् । किं तत् । अयं नरेन्द्रस्तु अनेकधर्मान् सर्वानपि धर्मानित्यर्थः । गुरूपदेशतः सम्मेल्य लोके परमहंसोपदेशानुसारं सर्वधर्मसमन्वयात्मकं कार्यं विधाय एकं विधत्ते 'वेदान्तधर्मात्मक'मेकमेव धर्मं विधाता प्रचारयिष्यति इति न विचित्रं किमु ? ॥ २ ॥

प्रातः परीक्षादिवसेऽपि दृप्तो वम्भ्रम्यमाणः परिदृश्यते स्म ।
सुहृत्सतीर्थ्याश्रयसन्निकर्षे सम्प्रार्थयन्नीशमसावगासीत् ॥ ३ ॥

प्रातरिति । परीक्षादिवसे यस्मिन्दिने तस्य पदवीपरीक्षा समारब्धासीत् तस्मिन्दिने प्रातः काले दृप्तः नरेन्द्रः इतस्ततः वम्भ्रम्यमाणः भ्रमणशीलः दृष्टः । मार्गे इतस्ततो भ्रमन् सुहृदां मित्राणां तथा सतीर्थ्यानां सहाध्यायिनाम् आश्रयस्य सन्निकर्षे निवासस्थानसमीपं गतः सन् ईशं परमेश्वरं सम्प्रार्थयन् प्रार्थनापरः असौ नरेन्द्रः अगासीत् गातुमारभत ॥ ३ ॥

तदेव गानं दर्शयति—

'शश्वद्विश्वपते ! विभूषितनिजोच्चैर्दिव्यसिंहासनः
स्वच्छन्दं रचितान्शृणोषि विविधांस्त्वं विश्वगीतस्वरान् ।
धूलिः सन्निजकण्ठनिर्गतमिमं त्वां श्रावयामि स्वरं
सूर्याचन्द्रमसोर्वसन्निव रहोऽहं कामये दर्शनम् ॥ ४ ॥'

शश्वद्विश्वपते इति । हे विश्वपते ! जगदीश ! विभूषितम् अलंकृतं निजं स्वकीयं दिव्यं स्वर्गीयं सिंहासनं उच्चबहुमूल्योपवेशनस्थानं येन एतादृशस्त्वं स्वच्छन्दं स्वेच्छानुसारं रचितान् उत्पादितान् विविधान् अनेकप्रकारान् विश्वगीतस्वरान् विश्वम् अनन्तब्रह्माण्डस्वरूपा सृष्टिरेव महत् गीतं तस्य स्वरान् निषादर्षभादिसंगीतशास्त्रोक्तान् स्वरान् त्वद्रचितं सम्पूर्णं विश्वमेव महागानं तस्य स्वरान् सृष्टेः विविधांशभूतानित्यर्थः शृणोषि श्रुतिविषयी करोषि एतादृशे महागीते मम परमाणुस्वरूपस्य तु किमपि मूल्यं नास्ति अहं विश्वसृष्टौ

इषु प्रार्थनागीतस्वर
वमस्मिव स्वशिर्मित
प्रार्थयमह तत्र दर्शन
कामयेऽभिलषामि इत्थ समष्टि यष्टिमयोगार्थं प्रार्थयन्नस्वल्प सङ्गीतस्वर धावयामि ॥ ४ ॥

निशम्य गीतं तु नरेन्द्रगीतं चमत्कृता जातसुखा सखाय ।
ऊचुर्भवान् भ्राम्यति गानमत्त कुतो वृथा द्वित्र्यदिनेऽपि दीर्घम् ॥ ५ ॥

निशम्येति । नरेन्द्रेण गीत गानविषयीकृत गीत निशम्य श्रुत्वा तस्य सखाय मित्राणि जातसुखा आनन्दिता सन्त चमत्कृता आश्चर्यभावनापूरितहृदया अभूवन् । ऊचु उक्त-वन्तश्च भवान् गानेन उन्मत्त इव वृथा निष्प्रयोजन द्वित्र्यदिने द्वित्र्यपरीक्षादिनेऽपि दीर्घं बहुकालपर्यन्त कुत कस्मात् भ्राम्यति । अद्य तु अस्माक परीक्षारम्भदिवस अस्मिन् दिने तु अध्ययनमेव प्रधानकार्यं तत्परित्यज्य भ्रमसितस्ततो भ्रमणशील पुनस्तु न युक्तमिति भाव ॥ ५ ॥

तेनोक्तमीशस्मरणार्थमित्थ स्वान्तेषु शक्ति परिरक्षणीया ।
न केवल बाह्यजगत्परीक्षादानेन सविद्भजते समृद्धिम् ॥ ६ ॥

तेनोक्तमिति । तेन नरेन्द्रेण उत्तरितम्—'इत्थं यादृश गीत मया श्रावित तादृश ईश स्मरणार्थं अस्माद्दृशै स्वान्तेषु स्वमनस्सु शक्ति बल परिरक्षणीया पालनीया तादृशबला-भावात् केवलं बाह्यजगद्व्यापृतैरस्माभि ईश्वरस्मरणार्थं क्षणात्मकोऽपि काल न पार्यतेऽधिगन्तुम् । यत केवल बाह्यजगत्परीक्षादानेन विश्वविद्यालये पदवीप्राप्त्यर्थं परीक्षादानेन सवित् ज्ञानशक्ति समृद्धिं वृद्धिं न भजते केवल विश्वविद्यालयपरीक्षाभि ज्ञानवृद्धिर्न भवति यथार्थज्ञानप्राप्तये तु ईश्वरभजनादिकमेवावश्यकमिति भाव ॥ ६ ॥

साध्यं सुखेनास्त्वथवास्तु दु खात् कार्यं हृदामोदि सशान्ति कार्यम् ।
सदु खचिन्तं हि मनो मनुष्यं साफल्यसन्दिग्धविधिं विधत्ते ॥ ७ ॥

साध्यमिति । साध्य कार्यं यस्य कार्यस्य सिद्धिं वयमभिलषाम तत्साध्य कार्यं सुखे नानायासेन भवतु अथवा बहुकष्टसाध्य भवतु कार्यारम्भात् पूर्वं स्वकीय हृत् हृदयम् आमोदि आनन्दयुक्त तथा सशान्ति शान्तियुक्त कार्यं कर्तव्यम् । किमर्थमेव कर्तव्यमित्याह—सदु ख चिन्त दु खयुक्त चिन्तायुक्त च मन अन्त करण मनुष्य कार्यकर्तारमित्यर्थं साफल्यकार्य स—
। सन्दिग्ध सन्देहयुक्त विधि उपाय यस्मिन्नेतादृश विधत्ते करोति दु खिते
धाद्या ' मनसि कार्यसफलताविषये सन्देह एव पुरत तिष्ठति कार्यं क्रिया अपि

काव्य
इति विवेकानन्दम[...]र्थमितस्ततोऽसौ सम्मीलितोऽभूत् सुहृदालयेषु ।
लोकमिति । लोकर्मि[...]रसामृतेन प्रमोदसान्द्रानखिलानकार्षीत् ॥ ८ ॥

। असौ नरेन्द्र मनोविनोदार्थं मन आनन्दपूर्ण रक्षितु सुहृदालयेषु
ऽस्मिन्विवेकानन्दमहाकाव्येऽकदाचिदेकस्य मित्रस्य गृह कदाचिदपरस्य इत्थ भ्रमणशीलोऽ
इति 'विवेकानन्द'महाकाव्यटीकामृतेन स्वगीतगानमधुरतापीयूषेण अखिलान् सुहृद कर्म-
वेशान् अकार्षीत् कृतवान् ॥ ८ ॥

इत्थं सुखामोदमहे प्रवृत्ते श्रीविश्वनाथो जनकस्तदीयः ।
हृद्रोगतोऽसूनजहादकस्माज्जाताधिकाधिः श्रुतवान् नरेन्द्रः ॥ ९ ॥

इत्थमिति । इत्थं परीक्षासमयेऽपि सुखस्य आमोदप्रमोदस्य महे उत्सवे प्रवृत्ते सति तदीयः नरेन्द्रस्य जनकः विश्वनाथदत्तः हृद्रोगतः हृद्व्यसनाभिभूतः अकस्मात् एवमचिरादेतादृशी घटना भविष्यति इति ज्ञानं विनैव असूनजहात् स्वपार्थिवजीवनमत्यजत् नरेन्द्रश्च श्रुतवान् । जातः उत्पन्नः अधिकः असह्यः आधिः मानसिकव्यथा यस्यैतादृशो जातः ॥ ९ ॥

गतः क्षणान्मित्रगणेन सार्धं शोकाकुलां स्वां जननीमपश्यत् ।
आश्वास्य चैनां पितरं स गङ्गातटे यशःशेषतयाऽन्वयोक्षीत् ॥ १० ॥

गत इति । क्षणात् अचिरात् स नरेन्द्रः मित्रगणेन सार्धं स्वेष्टमित्रैः सह गृहं गतः शोकाकुलाम् अतिदुःखितां स्वां जननीं मातरमपश्यत् अद्राक्षीत् । एतां स्वमातरम् आश्वास्य समाश्वासनपरैः वचनैः शान्तचिन्तां कुर्वन् स्वपितरं गङ्गातटे भागीरथीरोधसि यशः एव शेषो अवशिष्टं यस्य स यशःशेषः तस्य भावः यशःशेषता तया अन्वयोक्षीत् योजितवान् युज्धातोः कर्तरि लुङ् ॥ शरीरदाहादिकार्यं कृतवानित्यर्थः ॥ १० ॥

बी. ए. सनाथोऽपि पितुर्वियोगादभूदनाथोऽथ नरेन्द्रनाथः ।
गृहे धनाभाववशेन खिन्नः कुटुम्बभारोद्वहनप्रयत्नैः ॥ ११ ॥

बी.ए.सनाथ इति । बी. ए. सनाथः अपि विश्वविद्यालयात् पदवीं लब्ध्वाऽपि पितुः वियोगात् नरेन्द्रनाथः अनाथ इव असहाय एव अभूत् जातः । तथा गृहे धनस्य अर्थस्य अभाववशतः अर्थाभावादित्यर्थः कुटुम्बभारोद्वहनप्रयत्नैः मातृभगिनीभ्रात्रादीनां पालनपोषणप्रयत्नैः खिन्नः अतीव चिन्तितः अभूत् ॥ ११ ॥

गुरोरभावोऽन्यजनापवादः सम्बन्धिवर्गे कलहप्रियत्वम् ।
ऋणस्य भारः सुहृदोऽपरागा अहो महोत्पातपरम्परेयम् ॥ १२ ॥

गुरोरभाव इति । गुरोः रामकृष्णपरमहंसस्य दर्शनाभावः अनुपस्थितिरिति यावत् । अन्यजनापवादः सम्बन्धरहितैः अन्यजनैः क्रियमाणा निन्दा । सम्बन्धिवर्गे स्वसम्बन्धिषु कलहप्रियत्वं निरन्तरं परस्परकलह एव येषां लक्ष्यम्, न केवलं पित्रा किमपि धनं न रक्षितमपि तेन ऋणमपि कृतमासीत् तस्यापि भारः नरेन्द्रशिरसि विद्यमानः आसीत् । सुहृदः मित्राणि पूर्ववत् स्नेहयुक्ताः न आसन् इति तेषामपरागत्वम् । इत्थं नरेन्द्रस्योपरि महती उत्पातपरम्परा आपत्संहतिः पतिता । अहो अतिदुःखस्यायं विषयः ॥ १२ ॥

शोकाभिभूता भुवनेश्वरी तं निजात्मजं जातरुषा जगाद ।
क्व वा तवेशः सहसा प्रयातो यतो विधत्ते न स हा ! सहायम् ॥ १३ ॥

शोकाभिभूतेति । भुवनेश्वरी नरेन्द्रमाता शोकेन पतिवियोगजेन अभिभूता आक्रान्ता सती तन्निजात्मजः पुत्रं नरेन्द्रं जाता उत्पन्ना रुषा क्रोधः यस्या एतादृशी जगाद उक्तवती । रे नरेन्द्र ! तव ईशः यस्मिंस्तव विश्वासः विद्यते स तव परमेश्वरः सहसा अकस्मात् क्व प्रयातः कस्मिन् स्थाने अदृश्यो जातः यतः यस्मात् इति खेदे स सहायं न विधत्ते आपत्समये सहायको न भवति ॥ १३ ॥

अकारि दारिद्र्यपिशाचिकाया प्रत्यक्षतो दर्शनमद्य तेन ।
वृत्त्यर्थमभ्राम्यदितस्ततोऽसौ तोषो न चासीन्मनसः कुतोऽपि ॥ १४ ॥

अकारीति । अद्य जनकप्रयाणानन्तरं तेन नरेन्द्रेण दारिद्र्यपिशाचिकायाः निर्धनतारूपराक्षस्याः प्रत्यक्षतो दर्शनम् अकारि विहितम् । असौ वृत्त्यर्थं जीविकाप्राप्त्यर्थं च इतस्ततोऽभ्राम्यत् । परन्तु तस्य मनसः कुतोऽपि स्थानात् मनसः अन्तःकरणस्य सन्तोषो नाभूत् । अभिलषिता वृत्तिं न लेभे ॥ १४ ॥

निमन्त्रितोऽस्मीति गृहात् प्रयातो दिनं प्रयातं च विनाऽन्नपानम् ।
अन्यः कथंचित् परिवारवर्गश्चकार वृत्तिं लवणाऽदनेन ॥ १५ ॥

निमन्त्रितोऽस्मीति । अहं कस्यचिन्मित्रस्य गृहे अद्य भोजनार्थं निमन्त्रितोऽस्मि इति गृहे खाद्याभावात् इत्यर्थः, मातरं कथयित्वा गृहाद्बहिः प्रयातः तद्दिनं च अन्नपानं विनैव प्रयातं गतं गृहप्रतिनिवर्तनकालपर्यन्तं बुभुक्षित एवासीत् इत्यर्थः । गृहे च अन्यः परिवारवर्गः मातृभगिन्यादिः कुटुम्बिजनः लवणोदनेन वराटकशाकादिकं विनैव वृत्तिमुदरपूरणं चकार कृतवान् ॥ १५ ॥

निजालये सोऽभ्यवहर्तुमुक्तो भुक्तं मया मित्रगणैस्तदुक्तम् ।
निशम्य माताश्रुजलार्द्रचक्षुर्बभूव पुत्रोऽप्यनुकम्पनीयः ॥ १६ ॥

निजालये इति । यदा मात्रा स्वगृहे अभ्यवहर्तुं भोजनार्थं 'नरेन्द्र ! आयाहि भोजनं परिवेशितम्' इत्युक्तः, तदा नरेन्द्रात् 'मया अद्य मित्रगणैः सहैव भोजनं विहितम्' इति तदुक्तं वचनं निशम्य अश्रुजलैः आर्द्रे चक्षुषी यस्याः एतादृशी जाता । अथ स नरेन्द्रः अपि अनुकम्पनीयः दयनीयदशापन्नः अभूत् ॥ १६ ॥

सोऽमन्यतोक्ता बहुधा मदर्थं जनन्यनुष्ठानपरा पुराऽभूत् ।
उपेक्षमाणं किल पूजनीयां धिग् धिङ् मुहुर्मामकृतज्ञसूनुम् ॥ १७ ॥

सोऽमन्यतेति । स नरेन्द्रः अमन्यत मनसि विचारयामास । मदर्थं मत्स्वरूपपुत्रप्राप्त्यर्थम् उक्ता उत्कण्ठिता सती पुरा जन्मनः पूर्वं मम जननी अनुष्ठानपरा शिवपूजनादिसक्ता अभूत् आसीत् । अधुना मां तत्पुत्रं पूजनीयां पूजार्हां मातरम् उपेक्षमाणं तस्याः पोषणभारं सर्वथा परित्यज्य स्थितं मादृशं, कृतम् उपकारं जानाति इति कृतज्ञः न तादृशम् अकृतज्ञं पुत्रं पुनः असकृत् धिक् ॥ १७ ॥

प्राप्योद्भवं मातृऋणं जगत्यां न चेदपाकर्तुमहं समर्थः ।
कोऽर्थस्तदा मेऽफलजीवितेन तदीक्षणास्रोद्गमकारणेन ॥ १८ ॥

प्राप्योद्भवमिति । जगत्यामस्मिञ्जगति उद्भवं प्राप्य जन्म लब्ध्वा मातृऋणं पुत्रशिरसि विद्यमानं मातृपोषणादिभारस्वरूपं ऋणं अपाकर्तुं परिहर्तुं चेदहं न समर्थः तर्हि मम अफलजीवितेन निष्फलजीवनेन तदा तस्याः ईक्षणयोः अस्रोद्गमस्य अश्रूत्पत्तेः कारणभूतेन मम (निष्फलजीवनेन) किं प्रयोजनं न किमपि । यदि मातुः पालनपोषणं मया कर्तुं न शक्यते तर्हि पुत्रस्य मम जीवनमेव निष्प्रयोजनम् ॥ १८ ॥

गृहे प्रसूं सेवितुमद्य नो चेदलं क्षुधाऽसह्यविपत्परीताम् ।
कथं ततः श्वो मम मातृभूमेर्लोकस्य सेवामथवा विधातुम् ॥ १९ ॥

गृहे प्रसूमिति । अद्य अस्मिन्दिने स्वगृहे क्षुधायाः बुभुक्षायाः असह्यया असहनीयया विपदा दुःखेन परीताम् आक्रान्तां प्रसूं मातरं सेवितुं पोषणादिकं कर्तुं चेदद्याहं नालं न समर्थः तर्हि श्वः आगामिनि दिवसे भविष्यति काले मम मातृभूमेः भारतभूमेः लोकस्य विश्वस्य वा सेवां परिचर्यां विधातुं कर्तुं कथम् अलं समर्थः भविष्यामि ! गृहे मातृसेवाकरणासमर्थः कथं लोकसेवाविधाने प्रभुः स्याम् ॥ १९ ॥

सम्बन्धिनोऽन्नेन विना विनाशोन्मुखान् सुखेनानिशमीक्षमाणः ।
अमन्दमन्दाक्षयुतोऽतिमन्दः कथं न दीर्णान्तरतामुपैमि ॥ २० ॥

सम्बन्धिन इति । अन्नेन विना आहाराभावेन विनाशोन्मुखान् म्रियमाणान् सम्बन्धिनः कुटुम्बिनः अनिशं सुखेन कदापि चिन्तया विना दिवानिशम् ईक्षमाणः अमन्दम् अत्यधिकं यन्मन्दाक्षं लज्जा तया युतः युक्तः अतिमन्दः मूर्खः कथं केन प्रकारेण शीर्णं खण्डशः जातम् आन्तरं हृदयं यस्यैतादृशः तस्य भावं नोपैमि न प्राप्नोमि । एतादृशीं मातुः असहायाम् अवस्थामवलोक्य मम हृदयेन तु विदीर्णेन भवितव्यम् तत्तु न जातमित्यहो आश्चर्यम् ॥२०॥

'दयासरित् सर्वगता विधातु'र्निशम्य गीतध्वनिमध्वनीनम् ।
मनस्यभून्मेऽवितथं किलेदं लक्ष्मीश्वराणां न तु दुर्गतानाम् ॥ २१ ॥

दयासरिदिति । अध्वनि मार्गे केनापि साधुना इमम् वक्ष्यमाणं गीतध्वनिं गानशब्दार्थं निशम्य श्रुत्वा । कीदृशं गानशब्दार्थमित्याह—विधातुरीश्वरस्य दयासरित् करुणानदी सर्वगता सर्वव्यापिनी तस्य करुणा तु सर्वेषामप्युपरि भवितुं शक्या इत्याकारकं गानशब्दार्थं निशम्य मे नरेन्द्रस्य मनसि अभूत् 'ईश्वरकरुणा सर्वगता इति यदुच्यते तत् किल लक्ष्मीश्वराणां धनाढ्यजनानां विषये एव अवितथं सत्यं न तु अस्मादृशानां दरिद्राणां विषये ॥ वयं तस्येश्वरस्य कदापि दयापात्रं भवितुं नार्हाः ॥ २१ ॥

आहूतवन्तः स्वगृहे महेषु मानेन गानार्थमहो ! सखायः ।
भ्रमन्निदानीं परितो नरेन्द्रो जीवन्मृतो वेति न ते विदन्ति ॥ २२ ॥

आहूतवन्त इति । पूर्वं मम सखायः मित्राणि महेषु उत्सवादिषु गानार्थं 'त्वया किमपि गीतं गीयतां' इति प्रार्थनापूर्वकं मानेन सह ससम्मानं स्वगृहे निजनिवासे आहूतवन्तः निमन्त्रितवन्तः । परं स एवाहं नरेन्द्रः जीविकार्थम् इतस्ततो भ्रमन् अटन् जीवन् म्रियते अथवा मृतः गतप्राणः वा इति ते न विदन्ति न जानन्ति ॥ २२ ॥

विलोक्य बन्धून् भगिनीश्च दीनान् क्षीणाङ्गयष्टीन् परिपुष्टिहीनान् ।
एकान्तमेत्य स्रवदस्रधारमेकान्तशोकान्तमलं न गन्तुम् ॥ २३ ॥

विलोक्येति । स्वबन्धून् भ्रातॄन् सम्बन्धिनो वा भगिनीश्च दीनान् असहायान् क्षीणाः क्लान्ताः अङ्गयष्टयः शरीराणि येषां तादृशान् तथा परिपुष्टिहीनान् अन्नवस्त्रादिसाधनरहितान् विलोक्य वीक्ष्य एकान्तं किमपि निर्जनस्थानमागत्य स्रवन्ती नेत्राभ्याम् अधःपतन्ती

अस्राणाम् अश्रुजलस्य धारा यस्मिन्कर्मणि यथा तथा इत्यव्ययम् एकान्तम् अत्यन्तं शोकस्य परिजनकृतेऽनुभूयमानस्य दु खस्य अन्त गन्तुम् अल न समर्थो नाभूत् ॥ २३ ॥

अनेकशो वैतनिकस्य सेवाकार्यस्य लाभे विफल प्रयत्न ।
दरिद्रदीनार्तकृते कृतं न स्थानं जगत्यामिह लभ्यमाणम् ॥ २४ ॥

अनेकश इति । अनेकश बहुवारं वैतनिकस्य मासिकवृत्तिलाभपूर्वकं क्रियमाणस्य सेवाकार्यस्य लाभे प्राप्तौ कृत प्रयत्न विफलो निष्फलो जात । तत किमायातम् इत्याह— 'जगत्यां लोके दरिद्राणां निर्धनानाम् आर्तानां पीडितानां च कृते ईश्वरेण किमपि स्थानं यत्र ते स्वोदरभरण कुर्यु एतादृश स्थानं न निर्मितम् इत्यस्मिन्विषये इदं प्रमाणं यत् प्रयत्ने कृतेऽपि क्वापि वृत्तिव्यवस्था नाभूत्' ॥ २४ ॥

कृच्छ्रान्वितनाथ च विधुतानां ह्यूमादिकानां किल नास्तिकानाम् ।
समर्थितं तेन मतं कदाचि 'च्छ्रद्धा नर क्वापि जहाति दु खात्' ॥ २५ ॥

कृच्छ्रान्वितेनेति । कृच्छ्रान्वितेन कष्टपरम्परापरीतेन तेन नरेन्द्रेण विश्रुतानां प्रसिद्धानां ह्यूमादिकानाम् आङ्गलनास्तिकानां यत् मतमपि समर्थितम् 'ईश्वर नास्ति' इत्याकारक मतम् एतैं नास्तिकैं प्रतिपादित तन्मतानुयायी भवितुमपि तत्पर जात । अत्रार्थान्तरेणाह—कदाचित् जीवने नर क्वापि कुत्रचित् विषये श्रद्धां विश्वास जहाति परित्यजति ॥ २५ ॥

वचो जनन्या 'कृपालुरस्तयेश' स्मरन्नविश्वासपथानुगोऽभूत् ।
श्रीरामकृष्णोऽधिगतप्रवृत्तिश्चकार तस्यागमनप्रतीक्षाम् ॥ २६ ॥

वचो जनन्या इति । तव नरेन्द्रस्य ईश ईश्वर क गत क पलायित यस्मिन्नीश्वरे तव विश्वास आसीत् स तु न अद्यापि सहाय्यप्रदान करोति इति जनन्या स्वमातु वच वचनं स्मरन् स्मरणविषयीकुर्वन् अथ नरेन्द्र अविश्वासपथानुग नास्तिकमतानुसारी अभूत् जात अस्यामवस्थायां श्रीरामकृष्णदेव नरेन्द्र नास्तिकमतमनुसर्तुमुद्यत इति प्रवृत्तिमुपलभ्य तस्य नरेन्द्रस्य आगमनप्रतीक्षां दक्षिणेश्वरागमनप्रतीक्षां चक्रे ॥ २६ ॥

आसादितो येन गुरुप्रसादो भूमानुभूतिं समवाप्य भूतिम् ।
यश्चाष्टसिद्ध्यागमयोग्यशिष्य श्रद्धाविहीन स कथं नरेन्द्र ॥ २७ ॥

आसादित इति । येन नरेन्द्रेण भूम्न निर्विकल्पसमाधौ ब्रह्मात्मभावनाया अनुभूतिस्वरूपिणीं भूतिम् ऐश्वर्यम् आत्यन्तिकसौख्य गुरो श्रीरामकृष्णस्य प्रसाद वर आसादित प्राप्त । यश्च नरेन्द्र अष्टसिद्ध्यागमयोग्यशिष्य अणिमाद्यष्टसिद्धिलाभकृते योग्य समर्थ शिष्यश्चासीत् स नरेन्द्र कथं केन प्रकारेण श्रद्धाविहीन नास्तिकमतानुसारी जात इति आश्चर्यम् ॥ २७ ॥

तल्लोकयात्रापतित प्रभूतक्लेशेष्टकास्थापितभित्तिभूतम् ।
सौधं स निर्मित्सति किन्तु विश्वभ्रातृत्वसाम्यत्वसमन्वयाख्यम् ॥ २८ ॥

तल्लोकयात्रेति । तस्य नरेन्द्रस्य लोकयात्रायाम् ऐहिकजीवने पतिता इतस्तत विकीर्णा प्रभूता अमितसङ्ख्याका या इष्टका ताभि स्थापित भित्तीनां महाप्रासादाधारभूताना

मूलम्। शिलान्यासः यस्यैतादृशं सौधं स ईश्वरः निर्मातुमिच्छति किम् अस्मिन् इत्युत्प्रेक्षायाम् कीदृशं सौधम् विश्वे भ्रातृत्वं बन्धुत्वभावना—साम्यं समानता-तथा धर्मसमन्वयस्वरूपम्। नरेन्द्रस्य पार्थिवजीवने आगतानाम् आपदां सहायेन जगति विश्वभ्रातृत्वादिरूपं महान्तं प्रासादं निर्मातुमिच्छति परमेश्वरः॥ २८॥

तन्मानसे विश्वशिवप्रियत्वप्रसूतिसम्पादनहेतुभूता।
सर्वेश्वरप्रेरितदर्शना किं सांसारिकी दुःखपरम्परेयम्॥ २९॥

तन्मानस इति। तस्य नरेन्द्रस्य मानसेऽन्तःकरणे विश्वस्य जगतः यच्छिवं कल्याणं तस्मिन् यत् प्रियत्वं प्रेम तस्य प्रसूतेः जन्मनः सम्पादनम् उत्पादनं तत्र हेतुभूता कारणस्वरूपा सर्वेश्वरेण भगवतैव प्रेरितं प्रेषितं दर्शनम् अवलोकनं यस्या एतादृशी एषा सांसारिकी भौतिकजीवनमध्यपतिता दुःखानाम् आपदां परम्परा संहतिः। नरेन्द्रमानसे विश्वप्रियत्वभावनाम् अधिकाधिकं जागृतां कर्तुमेव भगवता प्रेरिता इदमापत्परम्परा अस्ति किमु॥ २९॥

कदाचिदाक्रान्तमनःशरीरेन्द्रियोऽपतत् खिन्न इवाध्वपार्श्वे।
तन्द्रीं निमीलन्नयनः पुरस्ताद् व्यलोकयद्दिव्यतरप्रकाशम्॥ ३०॥

कदाचिदिति। कदाचित् कस्मिन्नपि समये आक्रान्तानि मनः मानसं शरीरं देहः इन्द्रियाणि च यस्य एतादृशः खिन्न इव क्लान्त इव अध्वपार्श्वे अपतत् पतितः। तत्र च तन्द्रया निद्रया निमीलती नयने यस्य एतादृशः पुरस्तात् स्वस्य पुरतः दिव्यतरम् अलौकिकं प्रकाशम् द्युतिं व्यलोकयत् अवलोकितवान्॥ ३०॥

वाक्पण्डितस्यातिविशालबुद्धेः सोपाधिकस्य प्रतिभावतोऽपि।
तेजस्विनः शुद्धधियस्तदानीं वृत्तेरभावोऽद्भुत एव भाति॥ ३१॥

वाक्पण्डितस्येति। वाक्पण्डितस्य वक्तृत्वशक्तिसम्पन्नस्य अतिविशालबुद्धेः अतिविशाला महत्तमा बुद्धिः प्रज्ञा यस्य सोपाधिकस्य विश्वविद्यालयेऽधिगतपदवीकस्य प्रतिभावतः नवोन्मेषशालिधिषणायुक्तस्य तेजस्विनः आध्यात्मिकबलान्वितस्य तथा शुद्धधियः पवित्रान्तःकरणस्यापि नरेन्द्रस्य वृत्तेः जीविकाया अभावः अद्भुतः आश्चर्योत्पादक इव भाति दृश्यते॥ ३१॥

तस्योद्भवोऽभून्निजबान्धवानां न केवलं पोषणभारहेतोः।
परं विधातुं नवविश्वकार्यमिति प्रतस्थेऽथ स दक्षिणेशम्॥ ३२॥

तस्योद्भव इति। तस्य नरेन्द्रस्य उद्भवः जन्म केवलं निजबान्धवानां स्वकुटुम्बिनां पोषणभारहेतोः पालनपोषणार्थमेव न अभूत्। परं नवं नवीनमलौकिकं विश्वकार्यं धर्मसमन्वयाख्यं विधातुं कर्तुं तस्योद्भवः जातः। इति हेतोः सः दक्षिणेश्वरम् प्रतस्थे॥ ३२॥

चिरागतं तातवियुक्तमात्मसम्बन्धिचिन्ताकुलितान्तरं च।
तमश्रुधाराप्लुतलोचनानां समादधानो गुरुरित्यवोचत्॥ ३३॥

चिरागतमिति। चिरागतम् अनेकदिवसानन्तरं दक्षिणेश्वरमागतं तातेन जनकेन वियुक्तं रहितम् आत्मनः ये सम्बन्धिनः मातृभगिन्यादयः तत्संबन्धि चिन्तया आकुलितं व्याकुलं

अन्तःकरणं यस्य तथा अश्रुणा धारया आप्लुते लोचनप्रान्ते यस्य तादृशं नरेन्द्रं समाश्वासयन् गुरुः श्रीरामकृष्णदेव इति वक्ष्यमाणप्रकारेण अवोचत् उक्तवान् ॥ ३३ ॥

मातुस्त्वया सर्वजनीनमुच्चैर्विधास्यते कार्यमतः स्थिरः स्याः ।
जगद्धितान्तर्गतमेव सर्वं शिवं यथार्थं सुधियो वदन्ति ॥ ३४ ॥

मातुस्त्वयेति । त्वया नरेन्द्रेण मातुः जगन्मातुः उच्चैः सर्वथैव कार्यं करणीयं विधास्यते करिष्यते अतः कारणात् त्वं स्थिरः स्याः व्याकुलो मा भूः । सर्वमखिलं शिवं कल्याणं जगद्धितान्तर्गतं जगत्कल्याणकार्यं नु अन्तर्निहितम् अन्यत् सर्वमपि कुटुम्बभरणादिकं पुनः शिवं जगत्कल्याणस्वरूपिणि महति शिवे च अन्तर्गतमिति यत् सुधियः विद्वांसः वदन्ति तद् यथार्थमेव सत्यमेव ॥ ३४ ॥

नरेन्द्रेण उक्तम्—

नङ्क्ष्यन्ति सर्वं मम पश्यतः किं तथापि तूष्णीं समुपेक्षणीयाः ।
त्वदर्थनं यच्छृणुयात् प्रभुस्तद्योगस्तदर्थं करणीय यत्नः ॥ ३५ ॥

नङ्क्ष्यन्तीति । मम पश्यतः अवलोकयतः अनादरे षष्ठी । सर्वं मम कुटुम्बिनः नङ्क्ष्यन्ति विनाशं प्राप्स्यन्ति तथापि एते मया तूष्णीं मौनावलम्बनपूर्वकं समुपेक्षणीयाः किम् 'म्रियन्तां नाम ते किं मया कर्तव्यम्' इति बुद्ध्वा अवज्ञेयाः । किमु इति प्रश्ने । प्रभुः ईश्वरः त्वदर्थनं तव प्रार्थनां अवश्यमेव शृणुयात् आकर्णयिष्यति स्वीकरिष्यति इति त्वया तदर्थं अस्मत्कुटुम्बिनां कृते कश्चिदुपायः करणीयः कार्यः भवेदेव ॥ ३५ ॥

श्रीरामकृष्णदेव उवाच—

नरेन्द्र साक्षाद्भवतारिणीयं कामांस्तवापूरयितुं समर्था ।
सश्रद्धमभ्यर्थयसे भवांश्चेदुपायमेषा नियतं विदध्यात् ॥ ३६ ॥

नरेन्द्र इति । हे नरेन्द्र ! इयं पुरतो विद्यमाना साक्षाद् एव भवतारिणी जगन्माता [illegible] । चेद्यदि भवान् सश्रद्धं [illegible] अवश्यमेव विदध्यात् [illegible] कामो भवेत् तादृश-विश्वासोत्पादनार्थमयमुपायः श्रीरामकृष्णदेवेन विहितः ॥ ३६ ॥

अस्यामविश्वासयुतो मनुष्याः पदं भवन्त्यापदुपग्रहाणाम् ।
तद्गच्छ शीघ्रं जननीसमीपं स्वेच्छानुसारं वरमाप्स्यतेऽद्य ॥ ३७ ॥

अस्यामिति । अस्यां भवतारिण्यां विश्वासं न कुर्वन्ते इत्यविश्वासयुताः श्रद्धारहिता इत्यर्थः आपदुपग्रहाणामनेकविधापदाक्रमणस्य पदं आस्पदं भवन्ति । भवतारिण्यां अश्रद्धावन्त एव आपदाक्रान्ता भवन्तीति भावः । तत् त्वं शीघ्रं मन्दिरं जननीसमीपं मातुरन्तिकं गच्छ प्रयाहि [illegible] स्वेच्छानुसारं [illegible] वरमद्य [illegible] अधिगम्यते ॥ ३७ ॥

आकर्णिताचार्यवचा नरेन्द्रो विवेश मातुर्भवनं जनन्याः ।
न केवलं सा प्रतिमोपलात्मा परा परास्ते परमा न शङ्के ॥ ३८ ॥

आकर्णितेति। आकर्णितं श्रुतम् आचार्यस्य गुरोः वचः येन स नरेन्द्रः सद्यः गुरोराज्ञानन्तरमेव जनन्या भवनं भवतारिणीमन्दिरं विवेश प्रविष्टवान्। सा मन्दिरस्था भवतारिणी प्रतिमा केवलं उपलात्मा पाषाणमयी न अपि तु परात्परा सर्वश्रेष्ठा परमेश्वरशक्तिस्वरूपा आस्ते। एतदर्थमेव श्रीरामकृष्णदेवेन तस्या अनन्यभावेन आराधना कृताः तस्याः साक्षात्कारश्च कृतः॥ ३८॥

अनन्तसौन्दर्यवतीं प्रसन्नां तां सच्चिदानन्दमयीं पुरस्तात्।
विलोक्य शुद्धान्तरतामुपेतो मनोरथं विस्मृतवान्नरेन्द्रः॥ ३९॥

अनन्तसौन्दर्यवतीमिति। तां भवतारिणीम् कीदृशीम्? अनन्तसौन्दर्यवतीम्। अविनाशिचारुतायुक्तां प्रसन्नां वरदानानुकूलां सच्चिदानन्दमयीं नित्यां ज्ञानमयीं सर्वोत्तमसुखमयीं च पुरस्तात् अग्रतः अवलोक्य शुद्धान्तरताम् निर्मलचित्ततामुपेतः प्राप्तः नरेन्द्रः स्वमनोरथं 'कुटुम्बिनां कृते कोऽपि उपायः कर्तव्यः' इति प्रार्थनाभिलापं विस्मृतवान् विसस्मार॥ ३९॥

दिव्यप्रकाशाच्चकितेक्षणोऽसावलौकिकानन्दभृतान्तरङ्गः।
विशुद्धभक्तिर्नतजानुशीर्षं विस्मृत्य सर्वं सहसा ययाचे॥ ४०॥

दिव्यप्रकाशादिति। भवतारिणीमन्दिरप्रवेशानन्तरमेव अलौकिकप्रकाशदर्शनेन चकिते तेजसाक्रान्ते ईक्षणे लोचने यस्यैतादृशः असौ नरेन्द्रः केनापि अलौकिकेन आनन्देन सुखानुभवेन भृतं परिपूरितं अन्तरङ्गं मानसं यस्यैतादृशः विशुद्धा अव्यभिचारिणी भक्तिः श्रद्धा यस्य नते नम्रे जानुनी शीर्षं च यस्मिन् यथा तथा सर्वं कुटुम्बपोषणप्रार्थनादिकं सर्वमेव विस्मृत्य सहसा अकस्मात् ययाचे प्रार्थितवान्॥ ४०॥

किं प्रार्थितवान् इत्याह—

अहं न वृत्तिं न धनं समीहे निरन्तरं दर्शनमेव मातः।
ज्ञानेन सार्धं प्रतिपद्य भक्तिं विवेकवैराग्ययुतो भवेयम्॥ ४१॥

अहमिति। हे मातः जननि! अहं नरेन्द्रः त्वच्चरणयोः वृत्तिम् उदरभरणार्थं जीविकां धनं सम्पदं वा न समीहे नाभिलषामि केवलं नित्यं तव दर्शनमेवेच्छामि। तथा ज्ञानेन आत्मज्ञानेन सह भक्तिं त्वयि विश्वासं प्रतिपद्य लब्ध्वा अहं सदसद्विचारस्वरूपविवेकेन संसारं प्रति च विरागभावनया युक्तः सम्पन्नः भविष्यामि॥ ४१॥

पृष्टो जगन्मातृगृहान्निवृत्तस्तथा विधायात्मनिवेदनं सः।
अभ्यर्थितं किं भवता यथोक्त'महो मया विस्मृतमेव सर्वम्'॥ ४२॥

पृष्ट इति। सः नरेन्द्रः जगन्मातृगृहात् भवतारिणीमन्दिरात् निवृत्तः बहिरागतः किं कृत्वा? तथा तेन प्रकारेण आत्मनिवेदनं स्वात्मसमर्पणं विधाय कृत्वा गुरुणा पृष्टः 'भवता त्वया यथोक्तं वृत्त्यर्थं भवतारिणी प्रार्थ्या' इति यदुक्तं मया तदभ्यर्थितं किम्। नरेन्द्रोऽब्रवीत् 'अहो! आश्चर्यं मया तु सर्वमेव विस्मृतमासीत्'॥ ४२॥

त्रिवारमेवं समुपेत्य कालीनिकेतनं प्रार्थितवांस्तथैव।
अङ्गीकृतानेन परं स्वमातेत्यतीव तुष्टोऽजनि रामकृष्णः॥ ४३॥

त्रिवारमिति। एवमनेन परिपाट्या नरेन्द्रः कालीनिकेतनं भवतारिणीमन्दिरं समुपेत्य प्रविश्य तथैव तेनैव प्रकारेण 'अहं न वृत्तिं न धनं समीहे' इति पूर्ववदेव प्रार्थयामास। ततः किमायातमित्याह परं परं तु अनेन नरेन्द्रेण स्वमाता भवतारिणी अङ्गीकृता तस्यां श्रद्धावान् जातः इति हेतोः श्रीरामकृष्णः अतीव सन्तुष्टो जातः। अनेन प्रसङ्गेन तस्यान्तःकरणात् नास्तिकताविचारः कथं बहिष्कृतः अभूत्, तदर्थं श्रीरामकृष्णदेवेन च कीदृश उपायोऽवलम्बितः इति स्पष्टं भवति ॥ ४३ ॥

'गुरोः प्रभावस्य फलं किलेदं' मत्वा नरेन्द्रोऽपि स मौनमास।
अतः परं चास्य गृहेऽन्नवस्त्राभावस्य चिन्ताविलयं प्रपेदे ॥ ४४ ॥

गुरोरिति। नरेन्द्रः अपि इदं सर्वं गुरोः श्रीरामकृष्णदेवस्य प्रभावस्य अलौकिकशक्तेः फलं परिणामः इति मत्वा चिन्तयित्वा स मौनं तूष्णीम् आस स्थितः। अतः परं अनन्तरं अस्य नरेन्द्रस्य गृहे अन्नवस्त्राभावस्य चिन्ता व्याकुलता विलयं प्रपेदे गोऽवरिता ॥ ४४ ॥

यावद्ध्रियेऽहं जगतीह तावन्नरेन्द्र! दासो भवता विधेयः।
या भुक्तिमुक्त्यर्थवराभयानां दात्री निषेव्या भवतारिणी सा' ॥ ४५ ॥

यावद्ध्रिये इति। हे नरेन्द्र! अहं पार्थिवजीवनमवलम्ब्य यावत्कालपर्यन्तम् इह जगति ध्रिये धारयामि तावत् भवतापि अत्रैव निवासः विधेयः कर्तव्यः सा तादृशी च भवतारिणी जगन्माता निषेव्या सेवितव्या। कीदृशी सा? या भुक्तिर्भोगः तस्याः दानसमर्था, मुक्ति दानसमर्था तथा अर्थाः चतुर्विधपुरुषार्थाः तेषामपि दात्री दानसमर्था अभिलषितवरदानार्हा तथा अभयदानशीला च एतादृशी जगन्माता त्वया निरन्तरं सेवनीया ॥ ४५ ॥

अतः परं परमहंसदेवेन भवतारिण्याः स्तुतिर्विहिता—

माताऽस्मदीयाऽखिलबालकानां तारा गुणाधारपरात्परा त्वम्।
जाने त्वयं दुर्गतदुःखधाराहारा पुनर्दीनदयामयी त्वम् ॥ ४६ ॥

माताऽस्मदीयेति। हे जगज्जननि! त्वम् अस्मदीया अस्माकम् अखिलानामन्यबालकानां च माता जननी। भवसि इति शेषः। तारा तारणकर्त्री गुणानां सत्त्वरजस्तमसाम् आधारः अवलम्बभूता परात्परा सर्वश्रेष्ठशक्तिस्वरूपिणी असि। त्वं स्वयं दुर्गतानाम् आपदाक्रान्तानां दुःखधारां विपत्परम्परां हर्तुं शील यस्याः एतादृशी भवसि। तथा हे मातः! त्वं पुनः दीनेषु असहायेषु दयामयी करुणापूर्णहृदयाऽपि वर्तसे ॥ ४६ ॥

जले स्थले त्वं सकलाद्यमूले घटे घटे चाक्षिपुटे समेषाम्।
साकाररूपासि निराकृतिस्त्वं सन्ध्या त्वमेव त्रिपदाऽसि मातः ॥ ४७ ॥

जले स्थले इति। हे मातः! त्वं सर्वव्यापिनी यत् जलाभ्यन्तरे स्थले भूम्यभ्यन्तरे तथा सकलानां जीवजन्तूनाम् आद्यमूले मूलकारणे तत्रापि तत्रैव स्थितिः। घटे घटे प्रतिशरीरे समेषां सर्वेषामक्षिपुटे नयनाभ्यन्तरे च तवैव अस्तित्वं विद्यते। त्वमेव त्रिगुणात्मिका सती आकारसहिता त्रिगुणातीता च सती निराकृतिः निराकारा च। त्वमेव सन्ध्या मातः सन्ध्याह्वसायसन्ध्यास्वरूपिणी त्रिपदा गायत्रीस्वरूपा च असि। त्वया विना विश्वस्मिन् किञ्चिदपि स्थानं रिक्तं न विद्यते इत्यर्थः ॥ ४७ ॥

आधारभूतासि जगत्त्रयस्याप्याधारशून्या जननि ! त्वमेका ।
सदाकुलत्राणपरा, शिवा त्वं सदाशिवस्यार्धहराऽप्युदारा ॥ ४८ ॥

आधारभूतेति। त्वम् जगत्त्रयस्य स्वर्गमर्त्यपातालात्मकत्रिलोक्या आधारभूताऽवलम्बभूता सत्यपि आधारशून्या, न तव कोऽपि अन्य आधारः विद्यते। त्वमेवैका जननी ! सदा अनिशम् आकुलानां चिन्तितानां त्राणे परिरक्षणे परा आसक्ता शिवा पवित्रस्वरूपा तथा सदाशिवस्य त्र्यम्बकस्य अर्धं हरति तच्छीला अर्धाङ्गिनीत्यर्थः। अपि चार्थे उदारा उदारहृदया ॥ ४८ ॥

गायन् स्तुतिं सद्गुरुकल्पितां स क्षपां निनाय क्षणकालतुल्याम् ।
अलौकिकानन्दसमन्वितं तत् स्वान्तं तदाऽभूच्च नितान्तशान्तम् ॥४९॥

गायन्निति। स नरेन्द्रः सद्गुरुकल्पितां परमहंसदेवेन कृतां स्तुतिं भवतारिणीस्तवं गायन् गीतस्वरबद्धां पठन् क्षपां सकलां रात्रिं क्षणकालतुल्याम् सपदीत्यर्थः। निनाय क्षपितवान्। फलतः तत्स्वान्तं तस्य अन्तःकरणं अलौकिकानन्दसमन्वितं दिव्यसुखानुभवपूर्णम् अत एव नितान्तशान्तम् आत्यन्तिकशान्तियुक्तमभूत् जातम् ॥ ४९ ॥

योऽवोचदीशेक्षणदर्शनादि भ्रमात्मकं काल्पनिकं च सर्वम् ।
श्रद्धान्वितान्तःकरणेन तेनेदानीं ध्रुवं सत्यमिति प्रतीतम् ॥ ५० ॥

योऽवोचदिति। यः नरेन्द्रः इदम् अवोचत्। किं तत् ईशेक्षणदर्शनादि परमेश्वरस्य स्वेक्षणाभ्यां यद्दर्शनादिकं तदखिलं भ्रमात्मकं मायामयं काल्पनिकं केवलं कल्पनाजगति विद्यमानं न वास्तविकं सत्यमित्याद्युक्तवानिति सम्बन्धः। तेन नरेन्द्रेण श्रद्धान्वितान्तःकरणेन विश्वासयुक्तमानसेन इदानीं ध्रुवं निश्चितं सत्यमिति प्रतीतं ज्ञानम्। मातुः साक्षात्कारेण दिव्यगानप्रभावेण च साक्षात्कारः काल्पनिकः न अपितु ध्रुवसत्यस्वरूपः इति तेन ज्ञातमिति भावः ॥ ५० ॥

अनेकशो भक्तगणाः कदाचित् समागता निर्मलदेवगेहम् ।
उपादिशज्जीवदयां मतेषु समानतां नाम्नि रुचिं च सर्वान् ॥ ५१ ॥

अनेकशः इति। अनेकशः संख्यातिगाः भक्तगणाः श्रद्धालवः कदाचित्समये निर्मलं पवित्रं देवगेहं दक्षिणेश्वरं समागताः प्राप्ताः। तान् सर्वान् भक्तगणान् परमहंसदेवः उपादिशत् उपदिष्टवान् किं तत् जीवेषु प्राणिषु दयां करुणाम्, मतेषु द्वैताद्वैतादिविभिन्नमार्गेषु समानताम् 'यावन्ति मतानि तावन्तो मार्गाः' इति परमहंसवचनानुसारमित्यर्थः तुल्यताम् नाम्नि भगवन्नामोच्चारणे रुचिम् उत्कटाभिलाषं च उपदिष्टवान्' इत्यनेन संबन्धः ॥ ५१ ॥

जगत्समग्रं हरिकल्पितं स्वस्वान्ते विभाव्याखिलजीववृन्दे ।
दयार्द्रभावः करणीय इत्थं वदन् समाधावभवद्विलीनः ॥ ५२ ॥

जगत्समग्रमिति। 'समग्रं सम्पूर्णं जगत् हरिणा भगवता कल्पितं रचितम्' इति स्वस्वान्ते निजान्तःकरणे विभाव्य चिन्तयित्वा अखिलजीववृन्दे सर्वप्राणिसमुदाये दयार्द्रभावः अनुकम्पादृष्टिः करणीयः कर्तव्यः' इत्थं वदन्नेव स परमहंसदेवः समाधौ निर्विकल्पसमाधिसुखे विलीनः मग्नः अभवत् ॥ ५२ ॥

क्षणात् परं बाह्यदशामवाप्तो धिक् त्वामहो ! कोऽसि दयां विधातुम् ।
दया न जीवेषु परं परेषु सेवाऽनिशं ते शिवसंविदोचे ॥५३॥

क्षणात् परमिति । क्षणकालानन्तरं बाह्यदशां भौतिकावस्थामागतः सन्नूचे किमित्याह अहो इत्याश्चर्यम् त्वां जीवदयाकर्तारं धिक् 'जीवदया' कर्तव्या इत्युक्तिस्तु महान् प्रमादः । त्वं दयां विधातुं कर्तुं संसारे कोऽसि न कोऽपीत्यर्थः । जीवेषु प्राणिषु दया न परन्तु परेषु ईश्वरस्मादन्येषु अनिशं निरन्तरं शिवसंविदा शिवज्ञानपूर्वकं सेवाभाव आचरणीय ॥ ५३ ॥

नरेन्द्रनाथोऽप्यथ दिव्यवाणीरहस्यबोधेन मुदान्वितोऽभूत् ।
शिवस्वरूपाखिलजीवसेवामेवाकरोज्जीवनलक्ष्यमुच्चैः ॥ ५४ ॥

नरेन्द्रनाथ इति । नरेन्द्रनाथ अपि अथ अनन्तरं गुरोः दिव्यवाणीरहस्यबोधेन रामकृष्णदेवस्य अलौकिकगिरः रहस्यज्ञानेन मुदान्वितः आनन्दितः अभूत् जातः शिवस्वरूपा ईश्वरा मता ये अखिला जीवा तेषां सेवा एव स्वजीवनस्य उच्चं श्रेष्ठं लक्ष्यं निश्चितम् अकरोत् कृतवान् ॥ ५४ ॥

नाबोधि केनाप्यपरेण तथ्यं यथा नरेन्द्रेण सदुक्तवाचाम् ।
अभून्मनस्यस्य नवः प्रकाशः सर्वत्र कार्येषु प्रयोगयोग्यः ॥ ५५ ॥

नाबोधीति । इदं गुरुवचनं सत्यं यथा येन प्रकारेण नरेन्द्रेण अबोधि ज्ञातं तथा अन्येन केनाप्यपरेण न ज्ञातम् । अस्य नरेन्द्रस्य मनसि च नवः नूतनः प्रकाशः दीप्तिः अभूत् उत्पन्नः च प्रकाशः सर्वेष्वपि लौकिकालौकिककार्येषु प्रयोगयोग्यः उपयोगार्हः विद्यते ॥ ५५ ॥

प्रतीकरूपो हि नरः शिवस्य बीजं महज्जीवरहस्यसेवा ।
लोके मतानां च समन्वयस्य भ्रातृत्व मैत्री समता गुणानाम् ॥ ५६ ॥

प्रतीकरूप इति । हि यस्मात् कुतः नरेन्द्रस्य मनसि नवः प्रकाशः अभूत् इति प्रश्ने इदमुत्तरम् । नरः शिवस्य भगवतः प्रतीकरूपः उपासनार्थेषु लक्ष्मस्वरूपः । जीवरूपस्य रहस्यं गूढम् जीवस्तु परमात्मस्वरूप एव कूटस्थात्मा इत्यर्थः । तत्स्वरूपरहस्यस्य सेवा समस्या लोके मतानां विविधमार्गाणां समन्वयस्य सामञ्जस्यस्य बीजस्वरूपिणी तथा भ्रातृत्वं विश्वबन्धुता, मैत्री सौहार्दं, समता अवैषम्यम् एतेषां गुणानामपि सा सेवा बीजस्वरूपा प्रत्येकमन्त्रस्य किमपि बीजाक्षरं विद्यते यथा 'गं गणपतये नमः' इत्यत्र गम् इति बीजम् तद्वत् सेवैव समन्वयमहामन्त्रस्य बीजस्वरूपिणीति भाव ॥ ५६ ॥

अस्माभिः सह मानवाः प्रतिदिनं सम्बन्धमायान्ति ये
येषु स्नेहपरा वयं जगति नो येऽभ्यर्चनीयाः पुनः ।
ते सर्वेऽप्यतिशुद्धबुद्धशिवसद्रूपा इति श्रद्धया
संसेव्या हृदयेन सन्ति जनुषो ध्येयं मया निश्चितम् ॥ ५७ ॥

अस्माभिरिति । ये मानवा मनुजाः अस्माभिः सार्धं जगति प्रतिदिनं प्रत्यहं सम्बन्धं दर्शनभाषणादिभिः सङ्गतिभावमायान्ति प्राप्नुवन्ति । येषु मनुजेषु च वयं स्नेहपराः सम्बन्धराहित्येऽपि ये जना अस्मत्प्रेमपात्रम्, पुनः ये चास्माभिः अभ्यर्चनीयाः पूजनीयाः सन्ति ।

ते सर्वेऽपि अस्मत्स्नेहपात्रजनाः सम्बन्धिनः, पूजनीयव्यक्तयश्च अतिशुद्धबुद्धशिवसद्रूपाः अत्यन्तनिर्मलज्ञानमयभगवत्स्वरूपाः इति प्रज्ञया बुद्धया हृदयेन पवित्रमनसा सेव्याः सेवनीयाः सन्ति इति अद्य प्रभृति मम जनुषः जन्मनः ध्येयं लक्ष्यमिति मया स्थिरीकृतमास्ते। 'शिवज्ञानेन जीवसेवा' इति गुरोर्दिव्यवचनस्य नरेन्द्रमनसि महान् प्रभावो जात इति भावः। अत्र शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

यावज्जीवसमष्टिकारणवशादेको महाकाशवद्
यावद्वर्णविभिन्नजातिषु ततो यो दीनहीनेषु च।
यो दुष्टेषु च दुःखितेषु च पुनर्व्याप्तः समानोऽनिशं
तस्याराधनकर्मणा जनिततां शान्तिं समीहे भृशाम् ॥ ५८ ॥

यावज्जीवेत्यादि। यावन्तः ये जीवाः प्राणिनः तेषां या समष्टिः समुदायः तस्य कारणवशात् हेतुभूतत्वात् यः महाकाशवत् एकः अद्वितीयः सर्वव्यापिस्वरूपः विद्यते यश्च सर्वसकलमनुजवर्णेषु ब्राह्मणक्षत्रियादिषु तथा विभिन्नजातिषु ततः विस्तृतस्वरूपेण स्थितः यश्च दीनहीनेषु च असहायदलितेषु च तथा यः दुष्टेषु दुराचारिषु दुःखितेषु सांसारिककष्टपरम्पराक्रान्तेषु च व्याप्तः सर्वव्यापीत्यर्थः। यश्च सर्वेषु विद्यमानोऽपि अनिशं समानः उच्चनीचभावनाशून्यः तस्य सर्वज्ञस्य सर्वशक्तिमतः सर्वव्यापिनश्च आराधनकर्मणा अर्चनया जनिततां अनेकजन्मपरम्परासु भृशमात्यन्तिकीं शान्तिं मनसः समाधानं समीहेऽभिलषामि। लोकसेवयैव सर्वमतिर्भांतिकर्जीवनं यापयितुमिच्छामीत्यर्थः। अत्रापि शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥

लोकं मोहतमोहतं धृतहिताल्लोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
तत्त्वज्ञानपुराणसंस्कृतगिरां शिक्षाकृतास्मिन् महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽगमत्पञ्चमः ॥ ५८ ॥

इति विवेकानन्दचरिते महाकाव्ये लक्ष्यनिश्चयो नाम पञ्चमः सर्गः ॥ ५ ॥

लोकमिति। लोकमित्यादि प्रधानाश्रये इत्यन्तं पूर्ववत्। तत्त्वज्ञानं दर्शनशास्त्रम्, पुराणं इतिहासः संस्कृतं देववाक् एतेषु विषयत्रयेषु शिक्षाकार्यं करोति इति शिक्षाकृता विरचितेऽस्मिन् विवेकानन्दचरिते नाम्नि महाकाव्ये पञ्चमः सर्गः अगमत् समाप्तिं गतः ॥५८॥

इति विवेकानन्दचरिते महाकाव्ये 'विवेकदीप'टीकायां पञ्चमः सर्गः ॥ ५ ॥



# अथ षष्ठः सर्गः

काशीपुरोपवनसुन्दरमन्दिरस्थो यो विद्रधिव्रणविपाकपरीतकायः ।
तं रामकृष्णमुपसेवितुमन्यभक्तैः सार्धं दिनानि कतिचिन्न्यवसन्नरेन्द्रः ॥ १ ॥

काशीपुरेति । काशीपुरनामके कालीघट्टनगरसमीपे किञ्चिदुद्याने तस्मिन्नुद्याने विद्यमाने सुन्दरे आरोग्यप्रदायके मन्दिरे गृहे तिष्ठति इति तत्रस्थः श्रीरामकृष्णदेवः यः विद्रधिव्रणविपाकपरीतकायः विद्रधिव्रणः 'कैन्सर' इत्याख्यो व्रणः तस्य विपाकेन वृद्ध्या तेन परीतः आक्रान्तः कायः शरीरं यस्य एतादृशः आसीत् तं श्रीरामकृष्णपरमहंसदेवं सेवितुं रुग्णावस्थायां स्वगुरुसेवनार्थम् अन्यभक्तैः सार्धं अन्यशिष्यवर्गेण सह कतिचिद्दिनानि पर्यन्तं नरेन्द्रः अवसत् उषितवान् । अत्र वसन्ततिलकं वृत्तम् ॥ १ ॥

आमयः पुनरसाध्यतां गतः प्रोचुरत्र निखिलाश्चिकित्सकाः ।
ऐहिकक्रमपदोपसंहृते स्थानमस्य ननु काशिकापुरम् ॥ २ ॥

आमय इति । आमयः व्रणव्याधिः पुनश्चात्र असाध्यतां गतः चिकित्सासामर्थ्यातीतः इति निखिलाः सर्वेऽपि चिकित्सकाः पाश्चात्यपौरस्त्यपद्धतिकुशलाः अगदङ्काराः अत्र व्याधिविषये प्रोचुः ऐकमत्येन निर्णयं कृतवन्तः । इदं काशिकापुराख्यम् उद्यानं अस्य श्रीरामकृष्णदेवस्य ऐहिकक्रमे इहलोकयात्रायां यानि पदानि इतस्ततो भ्रमणं तस्य उपसंहृतिः समाप्तिः तस्याः स्थानं पदमभूत् । अत्रैव श्रीरामकृष्णदेवस्य महासमाधिर्भविष्यतीति सचिकित्सकैर्भक्तगणैश्चोक्तमित्यर्थः । अत्र रथोद्धता वृत्तम् सर्गसमाप्तिपर्यन्तम् ॥ २ ॥

तं तथाप्यनुचरं यतिव्रते तीव्रतेजसमसौ सहेतरैः ।
दीक्षितं विहितवानपत्नजो गैरिकाणि वसनानि चार्पयत् ॥ ३ ॥

तं तथेति । तथापि रुग्णावस्थायामपि तीव्रं तेजः प्रतिभाशक्तिः यस्य एतादृशं तं स्वकीयम् अनुचरं नरेन्द्रमित्यर्थः । इतरैः सह कतिपयैः कार्यक्षमैः अन्यभक्तैः सह यतिव्रते सन्न्यासे दीक्षितवान् तेभ्यः सन्न्यासदीक्षां ददावित्यर्थः । दीक्षादानसामान्यसिद्ध्यर्थं तेभ्यः सर्वेभ्यः जपस्रजं जपमालां तथा गैरिकाणि वसनानि सन्न्यासियोग्यानि वस्त्राणि च अर्पयामास । भविष्यन्महल्लोकमङ्गलकार्यार्थं तेभ्यः सन्न्यासदीक्षां दत्तवान् । परमहंसेन केवलं गैरिकवस्त्राणि समर्पितानि विरजाहोमसहिता सन्न्यासदीक्षा परमहंसशिष्यैः वराहनगरे १८८८ तमे वर्षे विधिपूर्वकं स्वयमेव गृहीता ॥ ३ ॥

तत्र रुद्रसमभिक्षुसंहतौ वैश्वनाथिरभवद्यतिर्महान् ।
नामतोऽजनि विवेकपूर्वकानन्द इत्यभिनवोदयोंऽशुमान् ॥ ४ ॥

तत्र रुद्रेत्यादि । तत्र तस्मिन् रुद्रसमायां ब्रह्मचर्यतेजसा शिवतुल्यायां भिक्षुसंहतौ यतिसंघे वैश्वनाथिः विश्वनाथस्यापत्यं पुमान् नरेन्द्र इत्यर्थः महान् श्रेष्ठः यतिः अभवत् जातः । नामतः अभिधानेन च 'विवेकपूर्वकानन्दः' 'विवेकानन्दः' इति अजनि जातः कथम् अभिनवः नूतनः उदयः यस्य एतादृशः अंशुमान् सूर्य इव सुषमः । अमेरिकागमनपर्यन्तं तस्य 'विवेकानन्द' इति नाम न प्रथितम् परमहंसस्तु तं 'नरेन्द्र' इति नाम्नैव

आहूतवान् भारतभ्रमणे विविदिषानन्द सच्चिदानन्द इति वा स आसीत् । खेतडी-महाराजेन अमेरिकागमनसमये 'विवेकानन्द' इति नाम दत्तमित्युच्यते तदेवान्तपर्यन्तं तेन स्वीकृतमासीत् ॥ ४ ॥

रामकृष्णयतिसंघनाम यत् संगतं सकललोकविश्रुतम् ।
तस्य जीवशिवसेवनार्थिनः सूत्रपात इह तेन कारितः ॥ ५ ॥

रामकृष्णेति । यत् संगतं सर्वजनीनकार्यकर्त्री संहतिः 'रामकृष्णयतिसंघ' इत्येतन्नाम यस्यैतादृशं सकललोकविश्रुतम् सकलजगद्विख्यातं श्रीविवेकानन्दस्वामिना पाश्चात्य-भ्रमणानन्तरं भारतमागत्य स्थापितं तस्य यतिसंघस्य कीदृशस्य जीवस्वरूपः यः शिवः ईश्वरः तादृशेश्वरसेवनस्य अर्थी इच्छुकः एतादृशभाविरामकृष्णसंघस्य सूत्रपातः प्रारम्भ इति यावत् तेन श्रीपरमहंसदेवेन कारितः । स्वानुयायिभ्यो सन्न्यासदीक्षाप्रदानेन भावि-संघस्य आरम्भस्तेन कृतः कारितः कृधातोर्णिजन्तात् कर्मणि क्तः ॥ ५ ॥

भैक्ष्यचर्यपरमा इमे युवज्ञानिनश्च यतयः शुचिव्रताः ।
स्वार्थशून्यहृदया दयापरा लोकसंग्रहकृते कृतान्तराः ॥ ६ ॥

भैक्ष्यचर्येति । भैक्ष्यचर्यं भिक्षाप्राप्तेनान्नेन वृत्तिरेव परमम् उदरभरणसाधनं येषाम् एतादृशा इमे गुरुतः प्राप्तदीक्षायता युवानः ज्ञानवन्तश्च संन्यासिनः पवित्रव्रताचरणाः स्वार्थेन स्वप्रयोजनेन शून्यं रहितं हृदयं मानसं येषां तादृशाः दीनेषु अनुकम्पापराश्च तथा लोकसंग्रहकृते जगदुपकारकरणे कृतं समर्पितम् आन्तरं मानसं यैः एतादृशास्ते आसन् ॥ ६ ॥

पुनश्च कीदृशा एते इत्याह—

भौतिकीष्वनिशमात्मवत्तया मन्दमानमतयः स्वमूर्तिषु ।
सोद्यमा अनुदिनं निजात्मनां मुक्तये च जगतां हिताय च ॥ ७ ॥

भौतिकीष्विति । आत्मवत्ता आत्माऽस्ति येषां ते आत्मवन्तः जितेन्द्रियाः आत्मज्ञानिनो वा यतः कारणात् ते यतयः एतादृशा आसन् अतः भौतिकीषु स्वमूर्तिषु स्वकीयपार्थिव-शरीरेष्वित्यर्थः । मन्दमानमतयः आस्थाशून्याः । आत्मज्ञानिनो स्वकीयभौतिकपिण्डेषु न कापि ममता विद्यते इति भावः । अनुदिनं दिवानिशं निजात्मनां मुक्तये मोक्षाय तथा जगतां हिताय जगत्कल्याणाय च सोद्यमा उद्यमयुक्ता अनिशमासक्ता इत्यर्थः ॥ ७ ॥

एतादृशैः निःस्वार्थैर्यतिभिरेव इयं पृथिवी दत्ताधारा तिष्ठतीत्याह—

ईशभक्तिनिरतैर्विवेकिभिः क्षेमयोगविषये गतव्यथैः ।
विश्ववन्द्यचरितैर्जितेन्द्रियैर्धार्यते यतिभिरीदृशैर्मही ॥ ८ ॥

ईशभक्तिनिरतैरिति । मही सकलभुवनमण्डलं एतादृशैः स्वार्थशून्यसंन्यासिभिरेव दत्ताधारा सती स्थिरतया तिष्ठति । कीदृशैर्यतिभिः ? ईशभक्तिनिरतैः श्रद्धालुभिः आस्तिकैरिति यावत् विवेकिभिः सदसद्विवेकविचारशीलैः क्षेमयोगविषये स्वकीययोगक्षेमविषय-मधिकृत्य गतव्यथैः निश्चिन्तैः 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' इति श्रीमद्भगवद्गीतावचनानुसारं स्वयोगक्षेम-विषये चिन्ताशून्यैः । तत्र अप्राप्तस्य लाभः योगः तादृशप्राप्तवस्तुनः परिरक्षणं च क्षेम ।

विश्वेन जगता वन्द्यं वन्दनीयं चरितं येषां तादृशैः जितेन्द्रियैः इन्द्रियनिग्रहिभिश्च यतिभिः इयं मही धार्यते इति सम्बन्धः । धृधातोर्णिजन्तात्कर्मणि लट् ॥ ८ ॥

पुनः कीदृशैरित्याह—

द्वन्द्ववृन्दमतिमन्दमानसैर्दिव्यकाममनुसन्धयन्धनैः ।
स्त्रीषु जातनिजमातृभावनैर्धार्यते यतिभिरीदृशैर्मही ॥ ९ ॥

द्वन्द्ववृन्देत्यादि । द्वन्द्वानां सुखदुःखलाभालाभजयापजयरूपाणां यानि वृन्दानि तेषां विषये या मतिः विचारः तत्र मन्दम् आलस्ययुक्तं मानसमन्तःकरणं येषां शीतोष्णादिद्वन्द्वविचारानिरतैरिति भावः ... कामेन भोगेच्छया धनेन ... आसक्तिः स एव बन्धनं यस्तादृशैः कामकाञ्चनसङ्गशून्यैरित्यर्थः । स्त्रीषु नारीषु जाता उत्पन्ना निजमातृभावना स्वकीयजननीविचारः येषामेतादृशैरेव निरन्तरं यतिभिः मही धार्यते इति पूर्ववत् ॥ ९ ॥

दिक्षु शान्तिसुखविश्वबन्धुताऽभेदसाम्यकरुणाप्रचारकैः ।
त्यागिभिश्च परदुःखदुःखिभिर्धार्यते यतिभिरीदृशैर्मही ॥ १० ॥

दिक्ष्विति । दिक्षु सर्वासु आशासु सर्वस्मिन् जगतीति यावत् शान्तिः कलहाभावः, सुखम् आपदामभावः विश्वबन्धुता विश्वभ्रातृत्वभावना अभेदः जातिधर्मादीनां भेदराहित्यं साम्यं समानता करुणा प्राणिषु दया एतेषां गुणानां सर्वत्र प्रचारकैः त्यागिभिः यज्ञमय-जीवनयापनशीलैः तथा परेषां दुःखेन स्वयं दुःखमनुभवद्भिः यतिभिः मही धार्यते इति पूर्ववत् ॥ १० ॥

श्रीविवेकयतिराशया तपस्त्यागयोर्भगवतो गयामितः ।
बोधिवृक्षतलमास्थित पुनर्ध्यानतत्परतया दिनत्रयम् ॥ ११ ॥

श्रीविवेकयतिरिति । स्वामी विवेकानन्दः भगवतः बुद्धस्य तपस्त्यागयोः तपस्यायाः त्यागस्य उद्देश्यं आशया यादृशं तपः तेन कृतं यादृशश्च त्यागः तेन आचरितः तादृशौ तपस्त्यागौ ममापि स्यातामिति विचारेण गयां 'बोधगया'भिधानं स्थानम् इतः गतः तत्र किं कृतवानित्याह बोधिवृक्षतलम्, यस्य वृक्षस्य अधः गौतमः बुद्धत्वं प्राप्तवान् तत्रैव दिनत्रयपर्यन्तं ध्यानतत्परतया ध्यानमग्नो भूत्वा आस्थितः । दिनत्रयपर्यन्तं बोधिवृक्षस्य तले ध्यानस्थ आसीत् ॥ ११ ॥

प्राप्य तत्र मनसो विशालतां सेवितुं निववृते गुरुं निजम् ।
तत्र ... लप्स्यमानतन्मानशून्यानधिमात्मसम्पदाम् ॥ १२ ॥
नामतोऽजनि वि

तत्रेत्यादि । तत्र त... तरे मनसः अन्तःकरणस्य विशालताम् उदारताम् अधिगम्य ... ण सेवितुं निववृते निवृत्तः किमर्थं निवृत्तः तस्य गुरोः यतिसंघे ... आध्यात्मिकज्ञानसम्पदा मानशून्यः अतिबृहत्परिमाणयुक्तः जातः । नामतः अभिधानेन च ... हीतुमित्युद्देश्य विवेकानन्दस्वामिना स्वदक्षिणाचार्यात् अभिनवः नूतनः उदयः यस्य ... तदर्थं च अतिविशालान्तःकरणस्य अपेक्षा विद्यते अतः तस्य । ... व इव ॥ १२ ॥

स्वामिनाथ बुबुधे बुधेन यद् देवजीवनमिहान्तमेष्यति ।
सेवनेऽस्य परयास्थयाऽन्वितस्तत्परः स्वयमभूद्दिवानिशम् ॥ १३ ॥

स्वामिनेति । बुधेन सुदूरं विचारशीलेन स्वामिना विवेकानन्देन बुबुधे ज्ञातम् । बुधधातोः कर्मणि लिट् किं ज्ञातम् । यत् देवस्य श्रीरामकृष्णदेवस्य जीवनं भौतिकदेहयात्रा इह काशीपुरोद्याने अन्तं समाप्तिम् एष्यति गमिष्यति । अतः सोऽपि स्वयं दिवानिशम् अहोरात्रम् अस्य गुरोः सेवने सेवायां परमास्थया अन्वितो युक्तः श्रद्धाभक्तिपुरःसरं तत्परः सेवासक्तः अभूत् ॥ १२ ॥

'यत्परं परमतत्त्वलाभतो धन्यतां न गत' इत्ययं यतिः ।
अन्नपानपरिहारपूर्वकं व्याकुलोऽभवदतीव मानसे ॥ १४ ॥

यत्परमिति । यत् यस्मात् हेतोः अयं यतिः विवेकानन्दः परमतत्त्वलाभतः अपरोक्षानुभूतिप्राप्तिवशतः परं अत्यन्तं धन्यतामहोभाग्यतां न गतः । गुरुप्रसादान्निर्विकल्पसमाधिं न प्राप्तवान् इति अन्नपानपरिहारपूर्वकं भोजनपानादिकमपि वर्जयित्वा स्वमानसेऽन्तःकरणेऽतीव व्याकुलश्चिन्तितो जातः ॥ १४ ॥

निर्विकल्पसुखसागराप्लवं लिप्सुरेष शुकवद्वराद् गुरोः ।
ध्यानतत्परतया स्थितः क्रमाल्लुप्तबाह्यविदभूत् समाधिगः ॥ १५ ॥

निर्विकल्पेत्यादि । एष विवेकानन्दः गुरोः देशिकस्य वरात् कृपातः शुकवत् शुकाचार्यवत् निर्विकल्पसुखसागराप्लवं समाधिसमुद्रमज्जनसुखानुभवं प्राप्तुमिच्छुः सन् तस्यैव गुरोः कृपातः तत्क्षणात् ध्यानतत्परतया ध्यानमग्नः स्थितः तदनन्तरं लुप्ता नष्टा बाह्यजगतः संवित् ज्ञानं यस्य एतादृशः समाधिमग्नः अभूत् ॥ १५ ॥

लब्धसंविदयमुत्थितः क्रमात् पार्श्वतः समुपतस्थिवान् गुरोः ।
तं विनम्रशिरसं गदाधरोऽप्युक्तवानलमनेन साम्प्रतम् ॥ १६ ॥

लब्धसंविदिति । अयं विवेकानन्दः लब्धा अधिगता संवित् बाह्यजगज्ज्ञानं येन एतादृशः क्रमात् शनैः उत्थितः गुरोः पार्श्वतः समीपं समुपतस्थिवान् प्राप्तः । विनम्रं शिरः मस्तकं यस्यैतादृशं गदाधरः श्रीरामकृष्णदेवः उक्तवान् साम्प्रतं वर्तमानकाले अनेन अलम् एतदखिलं समाधिसुखं तव अधुनैव नोचितमिति भावः ॥ १६ ॥

मातृकार्यमधुना तवाग्रतो विद्यते सकललोकमङ्गलम् ।
पूर्णतां तदखिलं नयन्नये लप्स्यसे पुनरिमं सुखाप्लवम् ॥ १७ ॥

मातृकार्यमिति । नरेन्द्रं प्रति चोक्तवान् तत्र अग्रतः पुरतः अधुना मातुः जगन्मातुः कार्यं संदेशश्रावणात्मकं विद्यते त्वयैव कर्तव्यमस्ति यत्कार्यं सकललोकमङ्गलं सम्पूर्णजगत्कल्याणकारकमास्ते । अये ! इति सप्रेम संबोधनम् । नरेन्द्र ! तन्मातृकार्यं पूर्णतां नयन् समापयन् पुनः एकवारम् इमं पूर्वानुभूतं सुखाप्लवं निर्विकल्पसमाधिसुखमज्जनं लप्स्यसे लब्धा । आत्मानुभवस्वरूपादानन्दात् जगत्कल्याणं श्रेयस्करमित्यर्थः । 'आत्मनो मोक्षाय जगद्धिताय च' इत्युभयात्मकः रामकृष्णसंघस्य जीवनादर्श आसीदित्युपरिष्टाद्द्रक्ष्यते ॥ १७ ॥

सन्तुतोष परमं यतिर्युवा 'लब्धवानहमनन्तसंमुदम्'।
मानसं प्रवयसो यतेः परं तुष्टमेष जगदर्चनापरः ॥ १८ ॥

सन्तुतोष इति। युवा यतिः विवेकानन्दः परममत्यधिकं सन्तुतोष सन्तुष्टोऽभूत्। किमर्थं 'अहम् अनन्तसमुदम् आत्यन्तिकसुखानुभवं लब्धवान् प्राप्तवान्' इति विचार्य तथैव प्रवयसः यतेः श्रीरामकृष्णदेवस्य मानसम् स्वान्तम् अपि परम् अधिकतरं तुष्टम् कुतः एष नरेन्द्रः अधुना विवेकानन्दः जगदर्चनापरो जातः मानुः सदुपदेशदानेन जगत्सेवासक्तः समजनि इति विचारेण गुरुरपि सन्तुष्टः अभूत् ॥ १८ ॥

स्वस्वरूपममुनाऽवबुध्यते चेदयं न भविता पुनर्भुवि।
इत्यवेज्ज्जनिरहस्यमस्य सोऽनन्तमङ्गलकृते कृतोद्भव ॥ १९ ॥

स्वस्वरूपमिति। श्रीपरमहंसदेवश्चिन्तयामास अमुना विवेकानन्देन स्वस्वरूपम् 'कोऽहम्' इत्याकारकं बुध्यते चेत् अयं पुनः भुवि भूतले न भविता न भविष्यति। स्वपूर्वपदमेव प्रवेक्ष्यतीत्यर्थः। एतादृशम् अस्य विवेकानन्दस्य जनिरहस्यं जन्मनः गूढतत्त्वं स च अनन्तमङ्गलकृते असीमविश्वकल्याणार्थं कृतः विहितः उद्भवः आविर्भावः यस्य तादृशः असौ इति च अवेत् अज्ञानात् विरलं तद्रूपम् ॥ १९ ॥

किं मयाऽध्ययनमेव विश्वविन्मन्दिरेऽनवरतं करिष्यते।
शास्त्रपुस्तकसन्दर्भकं कदाप्यन्तरङ्गरतये ॥ कल्पते ॥ २० ॥

किं मयेति। वितर्कयति विचारयामास मया विश्वविन्मन्दिरे विश्वविद्यालये अनवरतम् आदितोऽन्तपर्यन्तम् अध्ययनं विविधविषयकग्रन्थानां पन्मासादिकमेव करिष्यते न किञ्चिदन्यत्। तत्तु न समीचीनम् यतः कृतं यदि मदधिगतज्ञानस्य न कश्चिदुपयोगः भविष्यति तर्हि शुष्कज्ञानार्जनेन किं प्रयोजनम्। यतः केवलं शास्त्रविषयकाणां पुस्तकानां ग्रन्थानां सन्दर्भकः समूहः एतादृशपुस्तकानामध्ययनम् अन्तरङ्गरतये अन्तरिन्द्रियस्य रतये सुखाय मानसिकशान्तये इत्यर्थः। कदापि न कल्पते कारणं न भवति। अन्तरङ्गरतये इत्यत्र 'क्लृपि सम्पद्यमाने च' इति वार्तिकानुसारं चतुर्थी ॥ २० ॥

हर्म्यजातमधमाश्रयान्मठन्मन्दिराणि वसुधाधिपालयान्।
भैक्ष्यवृत्तिचरणादुपेयिवानादरास्पदमभूच्च सर्वतः ॥ २१ ॥

हर्म्यजातमिति। स विवेकयति भैक्ष्यवृत्तिचरणात् भिक्षावृत्तिहेतो हर्म्यजातम् धनिनां गृहाणि, अधमाश्रयान् निर्धनानां कुटीराणि च मठन्मन्दिराणि देवालयान्, वसुधाधिपालयान् राजप्रासादांश्च उपेयिवान् प्राप्तः भिक्षाप्राप्त्यर्थं कुत्र गन्तव्यं कुत्र न गन्तव्यमिति भेदं विनैव भैक्ष्यचर्यां कृतवान्। उपेयिवान् इति 'उपेयिवाननाश्वाननूचानश्च' इति निपातनात् साधु। सर्वतः यत्र कुत्रापि स गतः स सर्वेषामपि आदरपात्रं जातः। सर्वेऽपि तमपूपुजन् ॥ २१ ॥

रामकृष्णयतिरन्तिमे पदे मज्जनार्थमधुनोद्यतोऽभवत्।
व्याधिजाऽस्य तु कथा वपुर्व्यथा जाग्रतः सदुपदेशकर्मणि ॥ २२ ॥

रामकृष्णेत्यादि। अधुनेदानीं रामकृष्णयतिः श्रीपरमहंसदेवः अन्तिमे पदे परब्रह्मस्वरूपे महासमुद्रे मज्जनार्थम् उद्यतः तत्परः अभवत् जातः। व्याधिजा विद्रधिरोगोद्भवा अस्य

वपुर्व्यथा केवलं कथामात्रं स्वशरीरव्यथाया पूर्णतया स उपेक्षां कृतवान् यतः निरन्तरं सदुपदेशकर्मणि भक्तेभ्यो दीयमानोपदेशकार्ये जाग्रतः जागरूकस्य तस्य शरीरदुःखम् उपेक्ष्यमेवासीत् ॥ २२ ॥

अस्मिन्नेवान्तरे श्रीरामकृष्णदेव उक्तवान्—

सोऽब्रवीज्जगदिदं निरन्तरं रामकृष्णमयमीक्ष्यते मया।
कस्य किं समुपदिश्यतेऽधुना विश्वभद्रकरवार्तयाऽप्यलम् ॥ २३ ॥

सोऽब्रवीदिति। श्रीपरमहंसदेवोऽब्रवीत्, किमित्याह मया इदानीं इदं दृश्यमानं जगत् राममयं कृष्णमयं च ईक्ष्यतेऽवलोक्यते। जगत् न जगद्रूपेण अपि तु रामरूपेण कृष्णरूपेण चावलोक्यते मया। अस्यामवस्थायाम् यदि सर्वं रामकृष्णमयमेव तर्हि कस्य किमुपदिश्यते निर्वाणसमये तु उपदेश्योपदेशकभावोऽपि विलीयते। अत एव विश्वकल्याणवार्ताऽपि निष्प्रयोजना प्रतिभाति ॥ २३ ॥

शिष्यवृन्दमखिलं निजं परं तद्विवेकमुखमादिदेश सः।
तैः परार्थपरसंघसङ्गतैः कार्यमार्यचरितप्रचारणम् ॥ २४ ॥

शिष्यवृन्दमिति। परं परंतु निजं स्वकीयं तत् अखिलं सम्पूर्णं शिष्यवृन्दम् कीदृशम् विवेकः मुखं प्रधानः यस्मिन्नेतादृशम् आदिदेश उपदिष्टवान्। किमित्याह तैः सर्वैरपि शिष्यैः परार्थपरः लोककल्याणमेव परं श्रेष्ठं कार्यं यस्य एतादृशे संघे संहतौ सङ्गतैर्मिलितैस्तैर्विवेकानन्दादिसर्वशिष्यैः जगति आर्यचरितस्य शुद्धोपनिषद्ज्ञानात्मकस्य प्रचारणकार्यं कर्तव्यमिति ॥ २४ ॥

स्वामिनं पुनरुवाच पुत्रकानर्पितांस्तव यतीन् सहायकान्।
रक्ष बन्धुसमभावनापरः सोऽपि साश्रुनयनोऽन्वमन्यत ॥ २५ ॥

स्वामिनमिति। श्रीरामकृष्णदेवः स्वामिनं विवेकानन्दम् उवाच एतान् पुत्रकान् पुत्रतुल्यान् तव सहायकान् सहायकर्तॄन् अर्पितान् प्रतिपादितान् यतीन् नवसंन्यासिनः रक्ष प्रतिपालय। कथम् बन्धुसमभावनापरः भ्रातृतुल्यव्यवहारतत्परः सन् सोऽपि विवेकानन्दः अपि साश्रुनयनः अश्रुाकुलितनेत्रः अन्वमन्यत अनुमतवान् ॥ २५ ॥

तं स धर्मजनकः प्रभाविणं भाविनं निजकृते धुरन्धरम्।
पुत्रकासि नरलोकशिक्षकस्त्वं महानिति शुभाशिषाऽब्रवीत् ॥ २६ ॥

तं स इति। धर्मजनकः धर्मोपदेशदानसंबन्धेन पितृतुल्यः श्रीरामकृष्णदेवः तं प्रभाविणं जगति प्रभावोत्पादकं निजकृते स्वात्मने भाविनं भविष्यन्तं धुरन्धरं कार्यभारवहनतत्परं शुभाशिषा शुभाशीर्वादपूर्वकं अब्रवीत् किम् हे पुत्रक! त्वं महान् लोकशिक्षकः जगति महान् धर्मोपदेशकः असि ॥ २६ ॥

रामकृष्णविमलास्यपङ्कजान्निःसृता नवनवा सरस्वती।
सा विवेकयतिरूपधारिणी पावयिष्यति जगद्युगे युगे ॥ २७ ॥

रामकृष्णेत्यादि। श्रीरामकृष्णस्य यत् विमलं पवित्रं आस्यपङ्कजं वदनकमलं तस्मात् निःसृता नवनवा अतिनवीना या सरस्वती वाणी सा श्रीरामकृष्णदेवमुखपङ्कजविनिःसृता

वाण्येव अधुना विवेकानन्दरूपधारिणी सा वाण्येव नूनं विवेकानन्दयतेः रूपं धत्तवती इत्युत्प्रेक्षा। एतादृशी विवेकानन्दस्वरूपिणी वाणी युगे युगे जगत् विश्वं पावयिष्यति पवित्रयिष्यति ॥ २७ ॥

विश्वमङ्गलविधौ कृतश्रम सद्गुरोः स स्थितः दक्षिणः करः ।
आर्यधर्मपथबीजमुत्तमं येन कीर्णमिह सर्वतो चिरात् ॥ २८ ॥

विश्वमङ्गलेति। स विवेकानन्दः विश्वमङ्गलविधौ विश्वकल्याणार्थं कृतश्रमः विहित-परिश्रमः सद्गुरोः दक्षिणः करः सर्वप्रधानसहायकः आसीत्। येन इह जगत्यां उत्तमं श्रेष्ठं आर्यधर्मपथबीजं वेदान्तधर्ममार्गस्य बीजं उपदेशस्वरूपं सर्वतो दिशि सर्वत्र कीर्णं विकीर्णं प्रसृतमित्यर्थः ॥ २८ ॥

स्वामिनाऽस्य नवधर्मवाचिकं श्राविनं नृजगते हितावहम् ।
तेन नूनमनुकम्पितं भुवो मण्डलं कलिविमण्डितं चिरात् ॥ २९ ॥

स्वामिनाऽस्येति। स्वामिना विवेकानन्देन अस्य गुरोः नवधर्मवाचिकं वेदान्तधर्मसन्देशं नृजगते मानवसमाजाय हितावहं कल्याणकारकं श्रावितं श्रवणविषयीकारितम्। तेन तादृश-नवधर्मसन्देशश्रावणेन भुवो मण्डलं भूमण्डलं यत् चिरात् दीर्घकालात् कलिविमण्डितं धर्मादिस्खलनकारणात् विखण्डितं खण्डशः कृतमासीत् ॥ २९ ॥

आजुहाव यतिशिष्यमेकदा वासरेऽन्तिमसमितेऽन्तिमे दिने ।
सर्वथा परिजने बहिर्गते द्वारि चापि पिहिते स्वसद्मनः ॥ ३० ॥

आजुहावेति। श्रीरामकृष्णदेवः एकदा कदाचित् अन्तिमे वासरे अन्तिकं समीपमिते आगते सति निर्वाणसमयात् पूर्वमित्यर्थः। परिजने समीपस्थान्तेवासिषु सर्वथा पूर्णतया बहिर्गते प्रयाते सति तथा स्ववेश्मनः निवासस्य द्वारि कपाटेऽपि पिहिते आवृते सति यतिशिष्यं विवेकानन्दं आजुहाव समीपागमनायाऽऽदिदेश ॥ ३० ॥

स रहः समुपवेश्य सम्मुखं तदृशोः स्वनयने निवेशयन् ।
देशिकः क्रमसमाधिमाययौ नेतुमेनमसमात्मसाम्यताम् ॥ ३१ ॥

स रह इति। स विवेकानन्दं रहः एकान्ते सम्मुखं स्वपुरतः समुपवेश्य उपवेष्टुमुपदिश्य, तस्य नयनयोः स्वनयने निवेशयन् स्थिरीकुर्वन्। अनेन तस्य महायोगित्वं सूच्यते। देशिकः श्रीरामकृष्णदेवः क्रमशः निर्विकल्पसमाधिं प्राविशत्। किमर्थम्, एनं शिष्यं असमं स्वात्मना सह समानतां साम्यं प्रापयितुम्। विवेकानन्दस्य मनः पूर्णतया स्वमनसैकी कुर्वाण इत्यर्थः ॥ ३१ ॥

रामकृष्णवपुषो विनिर्गतं वारिदादिव लसत्क्षणप्रभा ।
ज्योतिरद्भुतमविशदन्तरं तस्य येन स यतिर्विमोहितः ॥ ३२ ॥

रामकृष्णवपुष इति। श्रीरामकृष्णदेवस्य वपुषः शरीरात् विनिर्गतं बहिरागतं, कथमिवेत्युपमयाह लसन्ती प्रकाशमाना क्षणप्रभा विद्युत् वारिदादिव बलाहकादिव यथा विद्युत्प्रभा वारिदाद्बहिरागच्छति तद्वत्, बहिरागतं अद्भुतं अलौकिकं ज्योतिः ज्ञानमयं दिव्य-प्रकाशं तस्य अन्तरं अभ्यन्तरं अविशत् प्रविवेश, येन स यतिरपि विमोहितः मूर्च्छित इव अभूत् ॥ ३२ ॥

प्रेक्ष्य सोऽथ नवशिक्षको गुरुं चक्षुषोर्विगलदश्रुसन्ततिम् ।
व्याकुलेक्षण इव क्षणादभूत् संविदं समधिगम्य सम्पदम् ॥ ३३ ॥

प्रेक्ष्येति । अथ ज्योतिःप्रवेशानन्तरं स नवशिक्षकः नूतनोपदेशकः गुरुं श्रीरामकृष्णदेवं चक्षुषोः नेत्रयोः विगलन्ती पतन्ती अश्रुसन्ततिः अस्रपरम्परा यस्य तादृशं प्रेक्ष्य अवलोक्य क्षणात् अचिरात् व्याकुलेक्षण इव पर्याकुलदृष्टिरिव अभूत् किं कृत्वा संविदं ज्ञानरूपिणीं सम्पदं सम्पत्तिं समधिगम्य प्राप्य श्रीरामकृष्णशरीरात् यत् ज्ञानज्योतिर्निर्गतं तद् स्वामिनः हृदये प्रविष्टं तद् ज्ञानज्योतिरेव महती संपत्तिः तेन स्वगुरोर्लब्धा इति भावः॥३३॥

तुभ्यमद्य सकलं समर्पितं निःस्वतां पुनरहं स्वयं गतः ।
गीः शुभाऽस्तु तव विश्वभारती याहि पुत्र ! जगतोऽसि मङ्गलम् ॥३४॥

तुभ्यमिति । मया अद्य सकलं ज्ञानधनं तुभ्यं समर्पितं प्रतिपादितं स्वयं अहं च निःस्वतां धनरहितत्वमिव गतः प्राप्तः पुत्र ! तव विवेकानन्दस्य शुभा पवित्रा गीः वाक् न संकुचितस्वरूपा अपि तु विश्वव्यापिनी संदेशस्वरूपिणी भारती सरस्वती अस्तु । याहि पुत्र ! त्वं जगतः मङ्गलं कल्याणमसि । सद्गुरोरासादितः अयं महान् प्रसादः येन सहायेन विवेकानन्देन विश्वस्मिन् अभूताश्रुतपूर्वं धर्मसमन्वयात्मकं महत्कार्यं कृतम् ॥ ३४ ॥

मौनमास्र यतिराननै गुरोर्लग्नदृष्टिरमुनैकतां गतः ।
सञ्चचार बलमेकतोऽपरं सागरं तु मिलिता तरङ्गिणी ॥ ३५ ॥

मौनमास्रेति । यतिः विवेकानन्दः गुरोः आनने श्रीरामकृष्णमुखे लग्ना आसक्ता दृष्टिः नयने यस्य तादृशः अमुना गुरुणा सह एकतां तादात्म्यं गतः प्राप्तः । एकतः देशिकात् बलमाध्यात्मिकी शक्तिः अपरं शिष्यं विवेकानन्दं संचचार प्रथमस्थानान्निर्गत्य शिष्यात्मक-द्वितीयस्थानं प्रविष्टा तस्मिन्नेवक्षणे तरङ्गिणी सरित् सागरं महासमुद्रं मिलितेव ॥ ३५ ॥

तामेव ज्योतिर्निर्गमनघटनां वर्णयति त्रिभिः—

एकतः सपदि पूर्णवस्तुनः पूर्णमन्यमुदभूज्जगच्छिवम् ।
यत्प्रकाशवशतो ध्रुवं भवेद्य विश्वमखिलं प्रभान्वितम् ॥ ३६ ॥

एकत इति । एकतः एकस्मात् परिपूर्णवस्तुनः अन्यत् परिपूर्णं जगच्छिवं जगत्कल्याण-करं वस्तु उदभूत्निर्गतम् । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इत्युपनिषद्वाक्यमत्रानुसन्धेयम् । यस्य परिपूर्णवस्तुनः प्रकाशेन अद्य अखिलं सम्पूर्णं विश्वं प्रभान्वितं प्रकाशयुक्तं भविष्यति ॥ ३६ ॥

ज्योतिरेकमथवा निजाश्रयात् प्राप्तमन्यदवलम्बमंशतः ।
विस्फुलिंग इव लब्धदोहदस्तत्समृद्धमचिरान्नवास्पदे ॥ ३७ ॥

ज्योतिरेकमिति । अथवा एकं ज्योतिः तेजः निजाश्रयात् श्रीरामकृष्णस्वरूपात् अंशतः न तु पूर्णतया विवेकानन्दरूपम् अन्यमपरमवलम्बमाश्रयस्थानं प्राप्तम् । यदि परमहंसेन सर्वमेव स्वामिने समर्पितं तर्हि गुरुः पूर्णतया रिक्तः अभूदिति न मन्तव्यम् । इदमुपमया विशदीकरोति लब्धः दोहदः शुष्कतृणादिस्वरूपः येन एतादृशः विस्फुलिंगः यथा महतोऽग्ने रूपं धारयितुमलं तथेदं ज्योतिरपि विवेकानन्दरूपमाश्रयमधिगम्य नवास्पदे स्वामिनव-स्थाने अचिरात् सत्वरमेव समृद्धं परिवृद्धमासीत् ॥ ३७ ॥

विश्वधर्मतरुबीजमाहितं नूनमद्य हृदयेऽमुना यतेः ।
यत्फलानि मधुराणि साम्प्रतं लाभवन्त्यखिलदेशवासिनाम् ॥ ३८ ॥

विश्वधर्मेत्यादि । अथवा अद्य शिष्यदीक्षादिने अमुना श्रीरामकृष्णेन यतेः विवेकानन्दस्य यतेः हृदये विश्वधर्मतरुस्य बीजमिव आहितं रोपितम् नूनमित्युत्प्रेक्षा यद्बीजोद्भूतानि मधुराणि फलानि साम्प्रतं वर्तमानकालेऽखिलदेशवासिनां भारतीयानां लाभवन्ति लाभदायकानि भविष्यन्ति इति शेषः । सकलमपि भारतं श्रीरामकृष्णोप्तबीजोद्भूततरुमधुरफलानि आस्वाद्य आत्यन्तिकसुखमधिगच्छन्ति इति ॥ ३८ ॥

आगते तदनु निर्वृतेः क्षणे वेदनाव्यतिकरे स्फुरत्यपि ।
सान्त्वयन्ननुचरान्निजानसावास साधुवचनान् महामनाः ॥ ३९ ॥

आगत इति । अथ निर्वृतेः अन्तिमशान्तेः क्षणे समये आगते सति वेदनाव्यतिकरे व्याधिजनितदुःखवेदनायां स्फुरन्त्यां अतितरामनुभूयमानायामपि स महामनाः उदारदेशिकः निजाननुचरान् अश्रुव्याकुलितेक्षणान् सान्त्वयन् व्याकुलताशमनपरैर्वचनैः शान्तान् कुर्वन्नुवास न तु शारीरिकव्याधिविचारे मग्नः ॥ ३९ ॥

स विवेकयतिरादरादसौ तत्प्रयाणसमये व्यचिन्तयत् ।
भाषतेऽयमवतार इत्ययं प्रत्ययार्थमधुनैकदापि किम् ? ॥ ४० ॥

स विवेकयतिरिति । असौ विवेकयतिः तं प्रति आदरात् पूज्यभावेन तस्य महाप्रयाणकाले मनसि व्यचिन्तयत् विचारयामास । अधुना ऐहलौकिकयात्रायां अन्तिमप्रसङ्गे प्रत्ययार्थं मनसि विश्वासोत्पादनार्थं एकदाऽपि अस्मिन्नन्तिमसमयेऽपि 'अहं भगवदवतारस्वरूपः' इति भाषते किम् यद्येवं तर्हि मत्कृते समीचीनं स्यादिति स शिष्यः विचारयामास ॥ ४० ॥

शान्तकण्ठमयमब्रवीद्यते चित्रमेतदधुनापि संशयः ।
यश्च राम इति कृष्ण इत्यभूद् रामकृष्ण इति लक्षणोऽधुना ॥ ४१ ॥

शान्तकण्ठेति । अथ देशिकः शान्तकण्ठम् प्रशान्तस्वरेण अब्रवीदुक्तवान् चित्रमाश्चर्यं अधुनापि अद्यापि तव मानसे संशयः वर्तते श्रूयताम् यश्च त्रेतायां रामः अभूत् यश्च द्वापरे श्रीकृष्णः अभूत् उभौ मिलित्वा अधुना कलियुगे रामकृष्ण इति स्वकं अभिधानं यस्यैतादृशः समभवत् ॥ ४१ ॥

परमिदं 'सर्वं खल्विदं ब्रह्मेति' वचनानुसारं नेत्याह—

ब्रह्म सर्वमिति नेदमुच्यते सत्यमेतदुपगम्य भाषितम् ।
स्तम्भितोऽभवदसौ रहस्यविद् रामकृष्णजनुषो यथार्थतः ॥ ४२ ॥

ब्रह्म सर्वमिति । 'यश्च रामः यश्च कृष्णः स एवेदानीं रामकृष्णः' इति यन्मयोच्यते तत् केवलं सर्वं खल्विदं ब्रह्म इति उक्त्यनुसारं न मयोच्यते साक्षादनुभवपूर्वकं मया भाषितम् न तु अर्थवादप्रतिपत्तिपूर्वकमिदमर्थं ततश्च असौ विवेकानन्दः श्रीरामकृष्णजनुषः तस्य अवतारस्य याथार्थ्येन रहस्यं वेत्तीति तादृशः सन् स्तम्भितः आश्चर्यचकितः अभूत् ॥ ४२ ॥

सर्वधर्ममयरूपमादधत् स्थापकं श्रुतिमताध्वनः पुनः ।
विश्वदेवमवतारमुत्तमं रामकृष्णगुरुमानतोऽस्म्यहम् ॥ ४३ ॥

सर्वधर्ममयेत्यादि। अहमत्यादरेण श्रीरामकृष्णगुरुमानतोऽस्मि तं नमामीत्यर्थः। कीदृशम्। सर्वधर्ममयं रूपं यस्य तादृशम्। सर्वेषामपि धर्माणामेकमेवान्तिमं लक्ष्यमिति कृत्वा श्रीरामकृष्णेन विविधधर्माणां साधना कृता आसीद् इति सर्वश्रुतम्। पुनः तथैव श्रुतिमताध्वनः वैदिकमार्गस्य संस्थापकं संपूर्णविश्वस्य देवं पूजनीयं उत्तमं सर्वश्रेष्ठमवतार-स्वरूपम्। अत्र स्वामिनैव विरचितः श्लोकः अनुसन्धेयः—तद्यथा—'स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे। अवतारवरिष्ठाय रामकृष्णाय ते नमः'—इति ॥ ४३ ॥

आर्यजातिरखिला युगेषु यान् ज्ञानकीर्त्यनुभवानविन्दत।
तानसावलभतैकजन्मना विश्ववेदविवृतिस्तदस्तिता ॥ ४४ ॥

आर्यजातिरिति। अखिला सम्पूर्णा आर्यजातिः अनादिकालतः अस्तित्वसिद्धा यान् ज्ञानं संविदं कीर्तिं यशः अनुभवं अपरोक्षानुभूतिं युगेषु सहस्रवर्षपर्यन्तं अविन्दत लब्धवती, तान् सर्वान् ज्ञानकीर्त्यनुभवान् असौ श्रीरामकृष्णः एकेनैव जन्मना प्राप्तवान्। तस्य श्रीरामकृष्णदेवस्य अस्तित्वं विश्ववेदस्य सम्पूर्णवेदस्योपरि विवृतिर्भाष्यस्वरूपा विद्यते ॥ ४४ ॥

ज्ञानमूर्तिकृतधर्मशासनं स्वामिना जगति यत्प्रचारितम्।
अध्वजातिविषयानपेक्षि तद् विश्वमानवनवोदयावहम् ॥ ४५ ॥

ज्ञानमूर्तिरिति। स्वामिना विवेकानन्देन जगति विश्वस्मिन् यत् ज्ञानमूर्तिकृतं श्रीराम-कृष्णेन शिक्षितं धर्मशासनं सत्यधर्मोपदेशः प्रचारितं प्रचारविषयीकृतं तत् अध्वनां विविधधर्मपथानां जातीनां ब्राह्मणादिजातीनां विषयाणां देशानां च अनपेक्षि विचार-रहितं विश्वमानवानां नवोदयः नवसमृद्धिः तमावहति उत्पादयति सकलजगत्समृद्धि-कारणीभूतम्। भवति इति शेषः ॥ ४५ ॥

शैवभागवतशाक्तसौगतब्राह्ममोहमदखृष्टवर्त्मनाम्।
यत्समन्वयकरं विकासकं द्वैतशून्यमपि भेदसादरम् ॥ ४६ ॥

शैवभागवतेत्यादि। शैवाः शिवोपासकाः, भागवताः विष्णूपासकाः। शाक्ताः शक्त्यु-पासकाः, सौगताः बौद्धाः, ब्राह्मा निर्गुणनिराकारोपासनापराः, मोहमदाः कुराणाभिमा-निनः, खृष्टाः खिस्तधर्मोपासकाः एतेषां सर्वेषामपि धर्ममार्गाणां समन्वयकरं सामञ्जस्य-विधायकं विकासकं समृद्धिकारणीभूतं द्वैतशून्यमपि विरोधभावनाशून्यमपि भेदेषु विवि-धधर्ममार्गेषु आदरसहितं च विद्यते ॥ ४६ ॥

भूतभाविसवदध्वनिम्नगासंगमात्मकमिदं गतोपमम्।
यत्सनातनपथस्य जीवितं ह्येकमात्रकलिनाशकं सुखम् ॥ ४७ ॥

भूतभावीति। भूताः भूतकाले स्थिताः, भाविनः भविष्यति काले उत्पत्स्यमानाः भवन्तः वर्तमाने च विद्यमाना या विविधधर्ममार्गरूपिण्यः निम्नगाः सरितः तासां संगमात्मकमिदं शासनं गतोपमं निरुपमं अद्वितीयम्। यच्च सनातनपथस्य सनातनवैदिकमार्गस्य जीवित-मिव तादृशशासनानुसरणाभावे सनातनधर्मः मृतवद्भविष्यतीत्यर्थः। ह्येकमात्रमद्वितीयं कलेः धार्मिककलहस्य नाशकं निवारकं सुखकारकं च विद्यते ॥ ४७ ॥

चन्द्रशान्तहृदयो दयोदयः चन्द्रकान्तिरधिचन्द्रवासरम्।
तज्जलानिति स मध्यमस्थितौ लीयते स्म सगदो गदाधरः ॥४८॥

चन्द्रशान्तहृदय इति। चन्द्र इव शान्तः शान्तिपूर्णं हृदयं यस्य दयाया जगदुद्धारस्वरूपाया उदयः यस्मिन्नेतादृशः चन्द्रस्य उज्ज्वला कान्तिः ज्ञानप्रकाशः यस्यैतादृशः सगद् रनामा नशरीरः गदाधरः श्रीरामकृष्णपरमहंसः अधिक-द्वयाम्बर सोमवासरे 'नत्र-रान्' इत्यत्र या मध्यमस्थितिः तस्माज्जायते, यस्मिन्लीयते, यस्मिन्नपि प्राग्नि—एतासु उपनिषदुक्तासु तिसृषु अवस्थासु मध्ये या मध्यमावस्था महानिर्व्यगस्वरूपा तस्यामवस्थायां लीयते स्म परे महसि विलीनो जात इत्यर्थः ॥ ४८ ॥

तस्य पार्थिववपुः सुरापगारोधसि ज्वलनदाहसंस्कृतिः।
कीर्तिशेषमभवत् सतां चिरं शिष्यते हि यशसा न वर्ष्मणा ॥४९॥

तस्येति। तस्य श्रीरामकृष्णदेवस्य पार्थिवं पाञ्चभौतिकं वपुः शरीरं (कर्म) सुरापगारोधसि भागीरथीतीरे ज्वलनदाहेन संस्कृतिः संस्कारः (कर्ता) कीर्तिरेव शेषः अवशेषः यस्यैतादृशमभवत्। अग्निसंस्कारेण दग्धमित्यर्थः। अत्रार्थान्तरन्यासेनाह—सतां महात्मनां यशसा कीर्तिरूपेण शिष्यते न वपुषा ॥ ४९ ॥

रामकृष्णसहधर्मिणी पुनः शारदाऽप्यजनि पीडिता भृशम्।
त्यक्तुकाममनसं स्वकङ्कणे सोऽभवन्नयनगोचरः क्षणम् ॥ ५० ॥

रामकृष्णेत्यादि। रामकृष्णस्य सहधर्मिणी सहधर्मचारिणी श्रीशारदा देवी भृशमत्यधिकं पीडिता दुःखिता अजनि अभूत्। स्वसुवर्णकङ्कणे त्यक्तुकामं मनः यस्याः तादृशीं पत्युर्मृत्योरनन्तरं कङ्कणादिकं धारयितुं न पत्न्या अधिकारः इति सा कङ्कणे त्यक्तुमुद्यता अभूत्, परं सः रामकृष्णदेवः क्षणं नयनगोचरः दृष्टिगोचरः सन्नुवाच ॥ ५० ॥

एकतोऽहमपरत्र केवलं प्रस्थितः स्थित इहास्मि नित्यदा।
येन जीवनमसौ सकङ्कणा भक्तवृन्दजननी समीक्षिता ॥ ५१ ॥

एकत इति। अहं रामकृष्णः एकतः एकस्मात् स्थानात् प्रस्थितः कृतप्रस्थानः केवलम् अपरत्र अन्यत्र गत्वा स्थितः वस्तुतस्तु नित्यदा निरन्तरमत्रैव अस्मि। येन वचनेन सा भक्तवृन्दजननी भक्तगणमातृरूपा जीवनं यावत् अन्तिमक्षणपर्यन्तं कङ्कणाभ्यां सहिता सधवैवावलोकिता ॥ ५१ ॥

श्रीशारदामातुरथाभिलाषाद् देवस्य पूजादिकनित्यकृत्यम्।
अत्यादरात् प्रत्यहमेत्य सर्वेऽप्यारेभिरे भक्तगणा युवानः ॥ ५२ ॥

श्रीशारदामातुरिति। श्रीशारदामातुः अभिलाषात् इच्छया देवस्य श्रीरामकृष्णदेवस्य पूजादिकं नित्यकृत्यं सर्वेऽपि युवानः भक्तगणाः प्रत्यहं प्रतिदिनम् अत्यादरात् सादरमेत्य आगम्य आरेभिरे आरब्धवन्तः ॥ ५२ ॥

ईशात्मोभयचिन्तनाय जगतः कल्याणकामाय च
स्थायिस्थानकृते कृताक्षविजयः सत्पार्षदानां गणः।
सेवाभावभरातिनिर्मलमतिर्व्यग्रः समग्रोऽप्यभूत्
साफल्यं जनुषः स शान्ति भविता यद्देशिकादेशतः ॥ ५३ ॥

ईशात्मोभयेत्यादि। ईशात्मोभयचिन्तनाय ईश्वरचिन्तनाय आत्मचिन्तनाय च एक-दैवोभयचिन्तनाय वा, जगतः विश्वस्य कल्याणकामाय च 'सर्वेऽपि सुखिनः सन्तु' इति

जगत्कल्याणेच्छया च कृतः विहितः अक्षाणां इन्द्रियाणां विजयः येन एतादृशः सतां पार्षदानां भक्तकार्यकर्तृणां गणः समूहः सेवाभावेन 'शिवरूपेण जीवसेवा' इति विचारेण यत्रा उत्पन्ना अतिनिर्मला पवित्रा मतिः धीः येषां सेवाबुद्ध्या कार्यकरणात् पवित्रमानसः इत्यर्थः, समग्रोऽपि गणः समूहः स्थायिस्थानकृते सेवाकार्यविधानार्थं निश्चितस्थानप्राप्तये व्यग्रः आसक्तः अभूत्। यत् येन देशिकादेशतः गुरोरादेशानुसारं जनुषः जन्मनः सशान्ति शान्तिसहितं साफल्यं सफलता भविष्यति ॥ ५३ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
कान्ते ज्यौतिषशास्त्रशीलनपरस्वान्तेन शान्ते महा-
काव्ये त्र्यम्बकसूरिणा विरचितेऽयं षष्ठसर्गो गतः ॥ ५४ ॥

इति विवेकानन्दचरितमहाकाव्ये गुरुनिर्वाणं नामः षष्ठः सर्गः ॥ ६ ॥

लोकमित्यतः—प्रधानाश्रये इत्यन्तं पूर्ववत् कान्ते चारुतरे शान्ते शान्तरसप्रधाने ज्यौतिषशास्त्रे फलज्योतिषशास्त्रे शीलनपरं अध्ययनपरं स्वान्तं मनः यस्य तेन रचिते विवेकचरिते महाकाव्ये षष्ठः सर्गः समाप्तः ॥ ५४ ॥

इति विवेकानन्दचरितमहाकाव्यटीकायां 'विवेकदीपाभिधाना'यां षष्ठः सर्गः ॥ ६ ॥



# सप्तमः सर्गः

नन्दवंशरघुवंशभूषणाख्ययाद्वयाङ्कितलक्ष्मणो गुरोः ।
भाविकर्मपरभाषितं स्मरंश्चिन्तितोऽभवदकिञ्चनो यतिः ॥ १ ॥

अस्मिन् सप्तमे सर्गे श्लोकानां क्रमशः तृतीयाक्षरैः श्रीरामकृष्णदेवस्य एकश्लोकात्मकं चरितं सम्पद्यते तद्यथा—

सुते श्रीक्षुदिरामधाम्नि जननं बाल्यं विरागान्वितं
कालीदर्शनशारदापरिणयौ सिद्धिः समाधिस्थितिः ।
सन्न्यासश्चिरनेकधर्मपथगत्व षोडशीपूजनं
लोकेऽभेदविवेकबोधनमिदं श्रीरामकृष्णामृतम् ॥

नन्दवंशेत्यादि । नन्दवंशस्य भूषणं कृष्णः रघुवंशस्य भूषणं रामः इति यदाख्याद्वयं अभिधानयुगलं तस्मात् चितं रचितं अयं च वैपरीत्येन रचितं लक्ष्म चिह्नं लौकिकं नाम यस्यैतादृशस्य रामकृष्णस्य न तु कृष्णरामस्य गुरोराचार्यस्य भाविकर्मपरं भविष्यत्कर्मप्रणालीविषयकं भाषितं वचनं स्मरन् अकिञ्चनः निर्धनः यतिः विवेकानन्दः चिन्तितः चिन्तायुक्तः अभवत् जातः । गुरूक्तकार्यं धनाभावात् कथं भवेदिति तस्य चिन्ताकारणम् ॥ १ ॥

नासीद् गेहादिकं तेषां यूनामाश्रयसाधनम् ।
धनाभावः सोद्यमानां नान्तरायः परं पथि ॥ २ ॥

नासीदिति । तेषां युवभक्तानां कृते गेहादिकं भवनादिकं आश्रयसाधनं नासीत् नाभूत् । परं सोद्यमानां उद्योगयुक्तानां मनुष्याणां कृते धनस्याभावः पथि मार्गे अन्तरायः विघ्नभूतः न भवति ॥ २ ॥

सद्यः श्रीर्जुषते धन्यान् निःस्वार्थश्रमकारिणः ।
सता सा हि गुणैः कृष्टा समुद्योगमपेक्षते ॥ ३ ॥

सद्य इति । निःस्वार्थश्रमकारिणः स्वार्थं परित्यज्य केवलं परार्थकृते परिश्रमकर्तॄन् धन्यान् भाग्यवतः प्रति श्रीः लक्ष्मीः धनं सद्यः जुषते सेवते एतादृशैः पुरुषैः आवश्यकं धनमपि प्राप्यते । हि यस्मात् सा लक्ष्मी सतां सत्कर्मकारिणां गुणैः सद्गुणैः कृष्टा सती केवलं समुद्योगमपेक्षते ॥ ३ ॥

तृषं क्षुधमुपेक्ष्यैते जगत्क्षेमक्रियाक्षमाः ।
अतुष्यन् भक्षयन्तोऽपि केवलं लवणौदनम् ॥ ४ ॥

तृषमिति । तृषं पिपासां क्षुधं बुभुक्षां उपेक्ष्य परित्यज्य जगतः विश्वस्य क्षेमक्रिया कल्याणकरणं तत्र क्षमाः समर्थाः केवलं लवणयुक्तं ओदनं भक्षयन्तः अपि ते अतुष्यन् । कथमपि उदरपूर्तिं विधाय सेवापरायणता अभूवन् ॥ ४ ॥

सेवार्थिकं गुरोः कर्तुं मिश्रं सङ्घसंहते ।
मित्रं सुरेन्द्रनाथाख्योऽवार्षीत्तेषां सहायताम् ॥ ५ ॥

सेवादिकमिति। गुरोः सेवां पूजाभोगादिकां कर्तुं सद्भक्तसंहतेः श्रद्धालुभक्तसमुदायस्य मित्रं सुहृद् मिश्रः सुरेन्द्रनाथाख्यः सुरेन्द्रनाथमित्रः इत्याख्या यस्य तेषां युवयतीनां सहायतां आर्थिकीं सहायतामकरोत् ॥ ५ ॥

आविरासीत् स्वयं रामकृष्णस्तस्य पुरः क्वचित् ।
ब्रूते कुतः पालकत्वं बालकानामुपैषि नो ॥ ६ ॥

आविरासीदिति। स्वयं रामकृष्णः तस्य सुरेन्द्रनाथमिश्रस्य पुरः क्वचित् कुत्रचित्स्थाने आविरासीद् प्रकटीबभूव ब्रूते च मम बालकानामेतेषां युवसंन्यासिनां पालकत्वं कुतः नोपैषि न स्वीकरोषि। आर्थिकसहायताप्रदानेन तेषां सहायको भवेति उक्तवान् ॥ ६ ॥

एतमद्भुतवृत्तान्तं श्रावयंस्तांस्तुतोष सः ।
यतयोऽपि नितान्तं ते चिन्ताशून्यत्वमाययुः ॥ ७ ॥

एतमिति। स सुरेन्द्रनाथमित्रमहोदयः एतं अद्भुतवृत्तान्तं तान् सर्वान् श्रावयतीञ्छ्रावयन् तुतोष आनंदितः अभवत्। ते यतयः अपि नितान्तं चिन्ताराहित्यं प्राप्तवन्तः ॥ ७ ॥

बहुधा ते विधायान्वेषणमाधारमाप्नुवन् ।
वराहनगरे 'भूतावास' इत्यभिधानकम् ॥ ८ ॥

बहुधेति। ते युवकसंन्यासिनः बहुधा अनेकशः अन्वेषणं विधाय वराहनगरे नाम स्थाने 'भूतावास' इति नाम्ना प्रसिद्धं आधारमाश्रयस्थानमाप्नुवन् ॥ ८ ॥

यन्नाम्नि बलमीशस्य तदतर्क्यं ध्रुवं यतः ।
रामकृष्णाख्यया सर्वे ततो भूताः पलायिताः ॥ ९ ॥

यन्नाम्नीति। यत् ईश्वरस्य नामोच्चारणे बलं विद्यते इति बहुध्यते तद् अतर्क्यं अनिर्वचनीयं ध्रुवं निश्चितं च, यतः यस्मात् ततः भूतावासात् 'रामकृष्ण'इति नामोच्चारणमात्रेणैव सर्वे भूताः पलायिताः ॥ ९ ॥

समाजस्तस्य यतीन्द्राणां मूलं विश्वप्रसारिणः ।
महामहीरुहस्यासीद् रामकृष्णाश्रमात्मनः ॥ १० ॥

समाज इति। स यतीन्द्राणां समाजः रामकृष्णाश्रमात्मनः रामकृष्णाश्रमस्वरूपस्य विश्वप्रसारिणः जगति प्रसरणशीलस्य महतो महीरुहस्य वृक्षस्य मूलमिव आसीद्। एतस्य लघुप्रमाणस्य यतिसमाजबीजस्यैव अग्रे श्रीरामकृष्णाश्रमस्वरूपः महान् वृक्षः परिणामः ॥ १० ॥

आसन्नत्राश्रमाः पूर्णे स्थापिता भूमिमण्डले ।
ऐतिहासिककालात् प्रागार्यधर्मोपदेशकैः ॥ ११ ॥

आसन्निति। अत्र अस्मिन् पूर्णेऽखिले भूमण्डले ऐतिहासिककालाद् प्राक् अतिप्राचीनकालेऽपि भारतीयैः आर्यधर्मोपदेशकैः धर्मोपदेशार्थमनेके आश्रमाः स्थापिता आसन् ॥ ११ ॥

नूतनं नैतदत्रत्या विद्वांसो यतयः पुरा ।
धर्मशिक्षां ददुः सर्वमानवेभ्यो धरातले ॥ १२ ॥

नूतनमिति। एतत् नूतनं न न किञ्चिदपि नवीनं यत् पुरा अतिप्राचीनकाले एतद्देशीया विद्वांसो यतयः धर्मशास्त्रज्ञाः धरातले भूमण्डले मानवेभ्यः सकलमनुष्यजातये धर्मशिक्षां धर्मोपदेशं ददुः दत्तवन्तः ॥ १२ ॥

सर्वा बाधास्तिरस्कृत्य मुनयः सर्वमानवान्।
भ्रातृत्व-करुणा मैत्रीशान्तिपाठमपाठयन् ॥ १३ ॥

सर्वाबाधा इति। एतद्देशीया मुनयः मार्गे आगताः सर्वाः बाधाः अन्तरायान् निरस्कृत्य उपेक्ष्य मानवमात्रान् प्रति भ्रातृत्वस्य, करुणायाः मैत्र्याः शान्तेश्च पाठमपाठयन्। उक्तं च मनुना 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'। इति ॥ १३ ॥

कैवल्यं स्वात्मनो विश्वकल्याणं च द्वयं परम्।
अभूल्लक्ष्यमिदं तेषां योगक्षेमातिगामिनाम् ॥ १४ ॥

कैवल्यमिति। स्वात्मनः निजात्मनः कैवल्यं तथा विश्वस्य कल्याणं एतद् द्वयमेव तदा परं श्रेष्ठं लक्ष्यं साध्यमासीत् कीदृशानां यतीनाम्? योगक्षेमौ अतिगच्छन्ति तादृशानां स्वकीययोगक्षेमयोः उपेक्षां कुर्वाणानाम् ॥ १४ ॥

नरा विविधमार्गस्थास्तत्तद्देशनिवासिनः।
एतान्निःस्वार्थिनो नित्यं सादरं समपूपुजन् ॥ १५ ॥

नरा इति। विविधमार्गस्थाः विविधमतावलम्बिनः तत्तद्देशनिवासिनः यत्र यत्र आर्यैः आश्रमस्थापना कृता आसीत् तत्तद्देशवासिनः एतान् स्वार्थरहितानुपदेशकान् नित्यमनिशं सादरं महता आदरेण समपूपुजन् पूजितवन्तः ॥ १५ ॥

किं पुरा भिन्नदेशेषु प्रेषितं यतिमण्डलम्।
धर्मप्रचारकार्यार्थं राज्ञा न प्रियदर्शिना? ॥ १६ ॥

किं पुरेति। पुरा खिस्तपूर्वतृतीयशताब्द्यां भिन्नदेशेषु ग्रीसमिस्रादिदेशेषु धर्मप्रचारकार्यार्थं प्रियदर्शिना अशोकेन राज्ञा नृपेण यतिमण्डलं बौद्धभिक्षुमण्डलं न प्रेषितं किम् ॥१६॥

यदागादन्तमेतेषां कार्यं संकोचिचक्षुषाम्।
तदा परैः समाक्रान्तं भारतं ज्ञानभारतम् ॥ १७ ॥

यदागादिति। यदा यस्मिन्समये एतेषां धर्मोपदेशकानां सङ्कोचीनि मर्यादितवृत्तीनि चक्षूंषि येषां तादृशानामिदं प्रचारकार्यं अन्तं समाप्तिं अगात्, तदैव ज्ञानभारतं सविश्वकारायुक्तं भारतं परैः अन्यैः समाक्रान्तम् पादाक्रान्तमभूत् ॥ १७ ॥

यद्धन्विनां बलं तत्तु राष्ट्ररक्षाप्रयोजनम्।
जितेन्द्रिययतिज्ञानबलं धर्मप्रचारकम् ॥ १८ ॥

यद्धन्विनामिति। यत् धन्विनां धनुर्धारिणां क्षत्रियाणां बलं शक्तिः तत् राष्ट्ररक्षाप्रयोजनम् बाह्याक्रमणकारिभ्यः स्वराष्ट्ररक्षाप्रयोजनं अर्थं यस्य तादृशम्। परं जितेन्द्रियाणां यमिनां यतीनां भिक्षूणां ज्ञानबलं सविच्छक्तिः धर्मप्रचारकार्यार्थमेव। 'अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुः। इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि' इति नीतिरेवोचितरहस्यम् ॥

भारतं किं समाक्रान्तं पुराऽभूद्घोरघोरिणा।
तुग्लक्लोदीमोगलैश्च साम्राज्यं स्थापितं कथम् ॥ १९ ॥

भारतमिति। आर्यैर्धर्मप्रचारपरित्यागो विहितः तत्फलस्वरूपमेव अयं देशः परैराक्रान्तः अभूत्। पुरा ईशवीयदशमशताब्द्यां घोरेण केवलशारीरिकबलान्वितेन घोरिणा गौरनिवासिमहम्मदेन भारतं किमर्थं समाक्रान्तम्? तथैव तुग्लकवंशीयैः, लोदीवंशीयैः तथा मोगलैश्च अत्र साम्राज्यं किमर्थं स्थापितमभूत्। अत्रार्यकृतधर्मशिथिलता एव हेतुः॥१९॥

कुतः कारणतः सोमनाथोऽनाथ इव स्थितः।
चेंगीजतैमुरादीनां नरयज्ञोऽप्यभूत् कुतः ॥ २० ॥

कुत इति। कुतः कारणतः कस्माद्धेतोः सोमनाथस्य मन्दिरं गजनीस्थमोहम्मदेन भग्नम् सोमनाथश्च अनाथः असहाय इव स्थितः तथा चेंगीजखाँ तैमूरलंग इत्यादिनिर्दयाक्रामकाणां नरयज्ञः मनुष्यसंहारः अपि कुतः कारणात् अभूत् सर्वमिदं धर्मप्रचारकार्यपरित्यागादेव ॥ २० ॥

सेवालीनैर्विवेकाद्यैर्दर्शितेन पथा पुनः।
धर्मप्रसृतये भाव्यं तत्परैर्यतिभिः क्षितौ ॥ २१ ॥

सेवालीनैरिति। अस्माद्धेतोः विवेकाद्यैः विवेकानन्दादिभिः सेवालीनैः सेवाव्यापृतैः यतिभिः दर्शितेन पथा प्रदर्शितमार्गेण पुनः अतिप्राचीनकाल इव क्षितौ भूमण्डले धर्मप्रसृतये आर्यधर्मप्रचारकार्यार्थं तत्परैः प्रसितैः भाव्यम् भवितव्यम् ॥ २१ ॥

सदादर्शचरित्रास्ते पवित्रास्तेजसान्विताः।
अकार्षुर्धर्मजिज्ञासां वराहनगराश्रमे ॥ २२ ॥

सदादर्शेति। ते विवेकानन्दादयः यतयः सदादर्शचरित्राः आदर्शमयपवित्राचरणाः निर्मलमानसाः तेजसान्विताः अध्यात्मिकशक्तियुक्ताः वराहनगरस्थिते नूतनाश्रमे धर्मजिज्ञासां धर्मसमालोचनां अकार्षुः कृतवन्तः ॥ २२ ॥

अत्राशनाद्यनुत्कास्ते बुद्धेसादिमहात्मनाम्।
अयतन्त जगज्जेतुं सम्यक्त्यागतपोगुणैः ॥ २३ ॥

अत्रेति। अत्र अस्मिन्नाश्रमे अशनाद्यनुत्का अन्नपानादिचिन्तारहिताः बुद्धेसादिमहात्मनाम् गौतमख्रिस्तादि-अवतारिपुरुषाणां साम्यत्यागतपोगुणैः समता त्यागतपस्यादिगुणैः जगद्विश्वं जेतुमयतन्त-प्रयत्नशीला अभवन् ॥ २३ ॥

मेलनस्यार्यसंस्कृत्योः सिषाधयिषया परम्।
प्राच्यप्रतीच्यशास्त्राणामधीतिमुपचक्रमुः ॥ २४ ॥

मेलनस्येति। आर्यसंस्कृत्योः पौरस्त्यपाश्चात्योभयसंस्कृत्योर्मेलनस्य सिषाधयिषया साधयितुमिच्छया प्राच्यप्रतीच्यशास्त्राणां उभयदिग्दर्शनादिशास्त्राणामधीतिमध्ययनमुपचक्रमुरारेभिरे ॥ २४ ॥

परेशान्तर्गते ह्यर्यमनसी द्वे स्पिनोजसः।
समानयाञ्चक्रिरे श्रीरामानुजमतेन ते ॥ २५ ॥

परेशान्तरिति । स्पिनोज़ेन 'स्पिनोज़ा नामक'स्पेनदेशीयदार्शनिकेन प्रतिपादिते क्षयं भौतिकपदार्थं मनश्च इति द्वे तत्त्वे च परेशान्तर्गते ईश्वरान्तर्भूते ते रामानुजस्य द्वैतमतेन । सह समानधर्मेति तुलनात्मकदृष्ट्या विचारयामासुः । उभयोरपि मतं द्वैतात्मकमेव ॥ संसारे द्वैतमद्वैतं विशिष्टाद्वैतमिति जगति विद्यमानाः मताऽपि पन्थानः आर्षधर्मशाखा एव ॥ २५ ॥

शङ्करस्याहमासार्थं जाग्रत्स्वप्नसुषुप्तिषु ।
डेकार्टस्याहमः सिद्धिं यत्नतः समतूतुलन् ॥ २६ ॥

शङ्करस्येति । जाग्रत्स्वप्नसुषुप्तिषु तिसृष्ववस्थासु समानरूपेण विद्यमानचित्स्वरूपया 'अहम्'इति प्रतीत्या सार्धं डेकार्टस्य 'अहम' सिद्धिम् 'अहं जानामि अतः अहमस्मि' इत्याकारिकां समतूतुलन् तुलयामासुः ॥ २६ ॥

'बर्क्लें'दार्शनिकस्यापि मतीनां समता न वा ।
योगाचारस्य विज्ञानवादेनेति व्यलोकयन् ॥ २७ ॥

बर्क्लें इति । 'बर्कले'इति नामकदार्शनिकस्यापि मतीनाम् कल्पनानां ( Ideas ) बौद्धमतानुयायिषु मध्ये केवलं मतिषु विश्वासयुतां योगाचाराणां विज्ञानवादेन समता सादृश्यं विद्यते न वेति व्यलोकयन् विचारयामासुः ॥ २७ ॥

आत्मापलपनं 'ह्यूम'कृतं पाश्चात्यदर्शने ।
चार्वाकनास्तितावादस्योपमानमकल्पयन् ॥ २८ ॥

आत्मापलपनमिति । पाश्चात्यदर्शनशास्त्रे 'ह्यूम' नामकेन दार्शनिकेन कृतं विहितम् आत्मापलपनं आत्मा नाम कोऽपि अन्यः पदार्थः नास्ति इत्याकारिकं आत्मापह्नुतिः भारतीयदर्शने चार्वाकनास्तिकवादस्य 'नास्ति नास्तीश्वर' 'यावज्जीवेत् सुखं जीवेत्' इत्यादिमतस्य उपमानं समानतां अकल्पयन् विचारयामासुः ॥ २८ ॥

उदीरितं परं द्वन्द्वात् 'हेगेलेन'परं पदम् ।
कान्टोक्तवस्तुतत्त्वं च प्रज्ञया तैर्विचारितम् ॥ २९ ॥

उदीरितमिति । हेगेलेन तन्नामकजर्मण्यदेशीयदार्शनिकेन उदीरितमुक्तं द्वन्द्वात्परं विद्यमानं परं पदम् उत्तमतत्त्वम् तथा कान्टोक्तं 'कान्ट'नामकजर्मण्यदेशीयदार्शनिकोक्तं वस्तुतत्त्वं च ( Thing in itself ) तैर्यतिभिः विचारितं समालोचनाविषयीकृतम् ॥ २९ ॥

कारणं जगतो ब्रह्म प्रधानं परमाणवः ।
विवर्तारम्भसत्कार्यवादाश्चापि विचारिताः ॥ ३० ॥

कारणमिति । जगतः कारणं वेदान्तमतानुसारेण 'जन्माद्यस्य यतः' इति प्रतिपादितं ब्रह्म भवेत् । अथवा कपिलसांख्यमतानुसारेण अव्यक्तापरपर्यायं प्रधानं भवेत् आहोस्वित् कणादवैशेषिकप्रतिपादिताः परमाणवः भवेयुः इति तैः विचारितम् । तथैव वेदान्तप्रतिपाद्यो विवर्तवादः ( रज्जौ भुजङ्गवत् ) वैशेषिकाणां परमाण्वाश्रित आरम्भवादः, अथवा सांख्यमतोक्तः सत्कार्यवादः इति वादत्रयमपि तैः विचारविषयीकृतम् ॥ ३० ॥

ययुस्तौ मतिरत्नेषां दृष्टिश्चापि विशालताम् ।
धर्मेतिहासविज्ञानरहस्यज्ञानहेतुना ॥ ३१ ॥

प्रययाविति। एतेषां युवसंन्यासिनां सद्बुद्धिः दृष्टिश्च धर्मस्य इतिहासस्य भौतिकविज्ञानस्य रहस्यज्ञानस्य कारणात् विशालतां कूपमण्डूकवृत्तिपरित्यागपूर्वकं व्यापकतां प्रययौ प्राप ॥ ३१ ॥

त्यागासिसज्जितकरा जितान्तस्थापकर्तृकाः।
पवित्रधीशिरस्त्रास्ते चरित्रदृढकञ्चुकाः ॥ ३२ ॥

त्यागासीति। त्यागः स्वार्थपरित्याग एव असिः खड्गः तेन सज्जितः युद्धार्थमिव युक्तः करः येषां, जिताः पराभूताः अन्तस्थाः शरीराभ्यन्तरे विद्यमानाः अपकर्तृकाः कामक्रोधादिरिपवः यैः पवित्रधीशिरस्त्राः निर्मलान्तःकरणमेव शिरस्त्रं शिरोरक्षासाधनं येषां तथा चरित्रमेव दृढम् अभेद्यकवचं शरीरावरणं येषाम् एतादृशास्ते युवयतयः आसन् ॥ ३२ ॥

सश्रद्धाः कटिबद्धाश्च सद्धर्मविजयार्थिनः।
कर्मवीराः स्थिरा धीराश्चीरावृतशरीरकाः ॥ ३३ ॥

सश्रद्धा इति। सश्रद्धाः आत्मविश्वासपराः कर्मवीराः जगद्धितार्थं निष्कामकर्मासक्ताः स्थिराः स्थिरचित्ताः धीराः धैर्यशालिनः चीरावृतशरीरकाः गैरिकवस्त्रधारिणः जगति सद्धर्मविजयमिच्छन्तः कटिबद्धा उद्यताः आसन् ॥ ३३ ॥

संन्यासग्रहणं चक्रुः विधिना विरजाहुतेः।
विवेकानन्द एतेषां मालामेरुरिव स्थितः ॥ ३४ ॥

संन्यासेत्यादि। ते सर्वे विरजाहुतेः विधिना विरजाहोमसंस्कारेण—'प्राणापानव्यानोदानसमाना मे शुद्ध्यन्ताम्। ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा'—इत्यादिविधिना संन्यासस्वीकारं कृतवन्तः। तेषु सर्वेषु विवेकानन्दः मालायां रुद्राक्षादिमालायां मेरुमणिरिव प्रधानतया स्थितः ॥ ३४ ॥

बाला मातुरिवाङ्कात्ते निर्गत्य यतयो मठात्।
तीर्थयात्राप्रसंगेन पुनः प्रापुर्निजाश्रमम् ॥ ३५ ॥

बाला इति। वराहनगरस्थान्मठात् बाला मातुरङ्कादिव निर्गत्य तीर्थयात्राप्रसंगेन मथुरावृन्दावनादिपवित्रस्थानदर्शनानन्तरं ते यतयः पुनः निजाश्रमम् वराहनगरस्थितमाश्रमं प्रापुः ॥ ३५ ॥

निजाधिष्ठानतः स्वामी द्रष्टुं भारतमातरम्।
काशीवृन्दावनायोध्या-हरिद्वारपुराण्ययात् ॥ ३६ ॥

निजाधिष्ठानत इति। स्वामी निजाधिष्ठानतः स्वाश्रमात् भारतमातरं द्रष्टुं काशीवृन्दावना-ऽयोध्या-हरिद्वारपुराणि अयात् अगमत् ॥ ३६ ॥

कालं स्थित्वाऽल्पमत्रासौ भैक्ष्यवृत्तिं समाश्रयन्।
अवस्थां भारतस्यास्य जज्ञौ सेवाधृतव्रतः ॥ ३७ ॥

कालमिति। असौ विवेकानन्दः अत्र तीर्थस्थानेषु अल्पकालपर्यन्तं भैक्ष्यवृत्तिं समाश्रयन् जीविकार्थं भिक्षावृत्तिसमाश्रयः। सेवाधृतव्रतः भारतसेवायां धृतं व्रतं येन एतादृशः भारतस्य अवस्थां स्थितिं जज्ञौ ज्ञातवान् ॥ ३७ ॥

पद्धतिर्निश्चिता तेन भ्रमता भाविकर्मणः ।
दुर्गतस्यास्य देशस्य रक्षाऽस्य दुर्गतः कुतः ॥ ३८ ॥

पद्धतिरिति । तेन भ्रमता तीर्थयात्रां कुर्वता भाविकर्मणः भारतसेवाकार्यं कीदृशं कर्तव्यमिति पद्धतिः कार्यरूपरेखा मनसि निश्चिता । विचारिते च अस्य दुर्गतस्य दरिद्रदेशस्य रक्षा कुतः दुर्गतः रक्षणसाधनात् विधेया इति च निश्चितम् ॥ ३८ ॥

गर्दितः केनचिच्छाखामृगैः काश्यामनुद्रुतः ।
'मैवं' स्थितः सधैर्येण प्लवगा येन विद्रुताः ॥ ३९ ॥

गर्दित इति । काश्यां शाखामृगैः वानरैः अनुद्रुतः अनुधावितः मार्गे केनचित् अज्ञातव्यक्त्या गर्दितः उक्तः 'मैवं' एवं मा कुरु सधैर्यं तिष्ठ इत्युक्तः सन् तथैव स्थितः येन तस्मिन् सधैर्ये स्थिते सतीत्यर्थः प्लवगाः वानराः विद्रुताः पलायिताः ॥ ३९ ॥

स मन्त्रान्तरमुत्सृज्य रामकृष्णजपो ययौ ।
अङ्घ्रियानस्तरुच्छाये कौपीनवसनो वसन् ॥ ४० ॥

स मन्त्रान्तरमिति । स विवेकयतिः अन्यं मन्त्रं परित्यज्य 'ॐ नमो भगवते रामकृष्णाय' इत्याकारक एव जपः यस्य तादृशः ययौ अगमत् । विश्रामार्थं अङ्घ्रियानः पादचारी कौपीनवसनः कौपीनमात्रधारी तरुच्छाये वृक्षस्य छायायां वसन् निवासं कुर्वन् ययौ 'वृक्षच्छाये' इत्यत्र छाया बाहुल्ये इत्यकारान्तनपुंसकत्वं पुरस्य ॥ ४० ॥

पुरः सरन् सृतौ वीक्ष्य ताजमाग्रापुरे चिरम् ।
केन्द्रमेकमिव मेने सोऽद्भुतां विश्वचारुताम् ॥ ४१ ॥

पुरः सरन्निति । अग्रे सरन् सृतौ मार्गे आग्रापुरे आग्रानगरे चिरं ताजं 'ताजमहल' इति प्रसिद्धं मोगलकलाकृतिं वीक्ष्य विश्वस्य अद्भुतां चारुतां सौन्दर्यम् एकं केन्द्रं स्थानमिव इताम् एकीभूय स्थितामित्यर्थः । मेने विचारयामास ॥ ४१ ॥

सद्वृत्ताच्छ्वपचाद्धूम्रपानं स्वीकुर्वता यतः ।
वृन्दावनेऽदर्शि तेन कार्ये धर्मो न जातिषु ॥ ४२ ॥

सद्वृत्तिरिति । सद्वृत्तिः सच्चरित्रः श्वपचः चण्डालः तथाकथितः अस्पृश्यजातीयः तस्माद्धूम्रपानं स्वीकुर्वता यतेः आश्चर्ये वृन्दावने तेन धर्मः कार्ये विद्यते न जातिषु इति अदर्शि सन्यासग्रहणानन्तरं जातिवर्णसंस्कारः दूरीभूतः न वा इति द्रष्टुमेव मया श्वपचादपि धूम्रपानस्वीकारः कृतः इति स्वामिनोक्तमासीत् ॥ ४२ ॥

तं शरच्चन्द्रशान्तं सवीक्ष्याग्निरथवेश्मपः ।
हरिद्वारे शरच्चन्द्रो द्राक्सदानन्दतां गतः ॥ ४३ ॥

तं शरच्चन्द्र इति । हरिद्वारे नाम्नि नगरे शरच्चन्द्रशान्तं शारदचन्द्र इव शान्तप्रकृतिं तं स्वामिनं सवीक्ष्यावलोक्य शरच्चन्द्रनामकः कश्चिदग्निरथवेश्मपः अग्निरथाश्रयाधिकारी सर्वस्वं परित्यज्य यतिर्बभूव द्राक् शीघ्रं नाम्ना 'सदानन्द' इति जातश्च ॥ ४३ ॥

भवने भवने भिक्षां भजमानः स भक्तिमान् ।
अन्वगात् स्वामिनं श्वेव ममाहन्ताविवर्जितः ॥ ४४ ॥

सः सदानन्दयतिर्भक्तिमान् भवने भवने भिक्षां भजमानो भिक्षां याचमानः ममाहन्ताविवर्जितः ममत्वाहङ्कारशून्यः स्वामिनं विवेकानन्दस्वामिनं श्वेव कुक्कुर इव अन्वगात् ॥४४॥

ससंकल्पो हृषीकेशे हिमाद्रेर्गन्तुमान्तरम् ।
जनकस्य महाशक्तेर्मुनीनां तपसः पदम् ॥ ४५ ॥

ससङ्कल्प इति । हृषीकेशे नाम्नि तीर्थस्थाने हिमाद्रेः आन्तरं हृदयमिव मध्यभागं, कीदृशस्य हिमाद्रेः महाशक्तेः पार्वत्या जनकस्य पितुः तथा मुनीनाम् ऋषीणां तपसः पदं स्थानं हिमाद्रेः आन्तरं गन्तुं ससङ्कल्पोऽभूत् इति शेषः ॥ ४५ ॥

भित्तेर्धर्मस्य रक्षायां रक्षोहरहरस्थितेः ।
मातृभूमेः किरीटस्य महासेनेष्टवेश्मनः ॥ ४६ ॥

भित्तेरिति । धर्मस्य सनातनवैदिकधर्मस्य रक्षायां परिपालनविषये भित्तेरिव, रक्षांसि हरन्ति इति रक्षोहरः हरः शिवः तस्य स्थितेः निवासस्य, मातृभूमेः भारतवर्षस्य किरीटस्य मुकुटस्य तथा महासेनस्य देवसेनानायकस्य इष्टवेश्मनः प्रियनिवासस्थानस्य हिमाचलस्य आन्तरं गन्तुं ससङ्कल्पः अभूत् । अयं श्लोकः अतीव महत्त्वपूर्णः इति सावधानं विचार्यः ॥४६॥

भूमात्मनोऽसमस्थाम्नो भीष्मसूप्रभवस्य च ।
मानोन्नतोत्तमांगस्य घनकाननसंपदः ॥ ४७ ॥

भूमात्मन इति । भूमा व्यापकः आत्मा शरीरं यस्य, असमस्थाम्नः निरुपमबलस्य, भीष्मसूः गङ्गा तस्याः प्रभवस्य उत्पत्तिस्थानस्य, माने औन्नत्ये उत्तमम् अंगम् कैलासशिखरं यस्य अथ च माने पूजनीयत्वे उत्तमं शिववसतिहेतोः श्रेष्ठम् अंगं यस्य तथा घना निबिडा काननस्य वनस्य सम्पत् सम्पत्तिः यस्य तस्य आन्तरं गन्तुम् ॥ ४७ ॥

परं पथि सदानन्दं रुग्णमालोक्य चिन्तितः ।
तमादाय समायातो वराहनगरं पुनः ॥ ४८ ॥

परमिति । पथि मार्गे सदानन्दस्वामिनं परम् अधिकं, रुग्णं रोगाक्रान्तमवलोक्य चिन्तितः व्याकुलः अभूत् । तमादाय पुनः वराहनगरं समायातः तच्छुश्रूषार्थमित्यर्थः ॥४८॥

सत्पथं जगदानेतुं रामकृष्णोक्तवर्त्मना ।
स्मारितः पुनरत्रासौ मिलितो यतिबन्धुभिः ॥ ४९ ॥

सत्पथमिति । अत्र वराहनगरे यतिबन्धुभिः भिक्षुबान्धवैर्मिलितः असौ रामकृष्णोक्तवर्त्मना जगत् कर्म सत्पथं सन्मार्गमानेतुं पुनः स्मारितः युवकयतिभिरित्यर्थः ॥ ४९ ॥

समागममयं मेने प्राक्प्रतीच्योर्जगद्धितम् ।
अतीतगौरवेणैवमैच्छद्भारतमङ्कितम् ॥ ५० ॥

समागममिति । अयं विवेकानन्दः प्राक्प्रतीच्योः समागमं जगद्धितं जगत्कल्याणकारणस्वरूपं मेने अमन्यत । तथा भारतम् अतीतगौरवेण एवमंकितं युक्तमैच्छत् ॥ ५० ॥

गुरुत्वं भारतस्यासीद् धर्मे ज्ञाने च कर्मणि ।
विश्वे पुरा तथैवेदं सर्वेषामाश्रयप्रदम् ॥ ५१ ॥

गुरुत्वमिति । धर्म धर्मविषये, ज्ञाने अध्यात्मज्ञाने, कर्मणि कर्ममार्गे च पुराकाले विश्वे भारतस्य गुरुत्वमासीत् भारतमेव पुरा, विश्वस्य धर्मज्ञानकर्मोपदेशविषये गुरु आसीत् । तथैव भारत सर्वथा जनानाम् अभ्यागतानामाश्रयत्वात् आसीत् ॥ ५१ ॥

विरोधोऽपि भारतस्यासीदाघातप्रतिघातनैः ।
सम्पीडितमप्यद्यानीं समर्थं विश्वशान्तये ॥ ५२ ॥

विरोध इति । अमी अयमेव भारतस्य विरोधपुञ्ज आसीत् यदिदं आघातप्रतिघातनैः बाह्याक्रमणादिभिः सम्पीडितं सदपि इदानीमपि विश्वशान्तये स्वकीयाध्यात्मिकशक्त्या विश्वे शान्तिस्थापनार्थं समर्थं प्रभु विद्यते ॥ ५२ ॥

विराडङ्गमोऽप्योच्चैर्लक्ष्यं परमस्य गुरोः ।
आदेशादागतो नीचैर्लोककल्याणभूमिकाम् ॥ ५३ ॥

विराडिति । अस्य विवेकानन्दस्य उच्चैः सर्वोच्च लक्ष्यं विराडङ्गमः सर्वव्यापिनः ब्रह्मणः भूम्नः अधिगमः प्राप्तिरासीत् परमस्य गुरोरादेशात् नीचैः निम्नतरां लोककल्याणभूमिकां नीतिकस्ततमागतोऽभूत् ॥ ५३ ॥

मठे शीतातपोपेक्षा अमिलन् यतिबान्धवाः ।
लभमाना कुतोऽप्यन्नं सुखमूषुरयाचिताः ॥ ५४ ॥

मठे इति । मठे वराहनगरस्थे मठे शीतातपयोरुपेक्षां कुर्वन्तः यतिबान्धवाः गुरुबन्धवः यतयः कुतोऽपि भिक्षान्नं लभमानाः अयाचितवृत्तयः सुखम् आनन्देन वराहनगरस्थे मठे ऊषुः न्यवसन् ॥ ५४ ॥

तदपूर्वमभूद् वृन्दं यतीनां स्वामिनेतृकम् ।
आर्यधर्मपताकां यत् स्थिरायां स्मेच्छति स्थिराम् ॥ ५५ ॥

तदपूर्वमिति । स्वामी नेता नायकः यस्मिन्नेतादृशं तत् यतीनां यमिनां वृन्दं समूहः अपूर्वं निरुपममभूत् । यत् यतिवृन्दं स्थिरायां पृथिव्यामार्यधर्मपताकां वेदान्तधर्मपताकां स्थिरां दृढतया स्थापितुम् इच्छति स्म इयेष ॥ ५५ ॥

एकं स्वं जगत् स निर्मातुं सकलं कलिवर्जितम् ।
आचकाङ्क्ष यतीन्द्रः सद्धर्मतत्त्वप्रचारतः ॥ ५६ ॥

एकमिति । स यतीन्द्रः विवेकानन्दः सम्पूर्णं जगत् कलिवर्जितं कलहशून्यम् एकं निर्मातुं विधातुम् आचकाङ्क्ष ऐच्छत् । कथम्? सद्धर्मतत्त्वप्रचारतः सत्यसनातनधर्मस्य यानि विश्वबन्धुत्वादीनि तत्त्वानि तेषां प्रचारतः उपदेशेन ॥ ५६ ॥

दर्शनं गिरिराजस्य कर्तुमीहास्य जागृता ।
कुमारसम्भवादीनां काव्यानां परिशीलनात् ॥ ५७ ॥

दर्शनमिति । गिरिराजस्य हिमाचलस्य दर्शनं कर्तुम् अस्य स्वामिनः ईहा कुमारसम्भवादीनां कालिदासकृतकुमारसम्भवस्य तथान्यकाव्यानां परिशीलनात् जागृता अभवत् ॥

ज्ञानालोकमथायासु मातुरादाय चाशिषम् ।
समुत्सृज्य यतीन् सर्वानेकाकी निरगात् पुनः ॥ ५८ ॥

ज्ञानालोकमिति। अथ वराहनगरे कतिचिद्दिनानि उषित्वा ज्ञानप्रकाशाधिगमाय मातुः शारदादेव्या आशीर्वादं च गृहीत्वा सर्वान् यतीन् गुरुबन्धून् समुत्सृज्य एकाकी पुनः निरगात् ॥ ५८ ॥

नासीत् केवलमस्यासौ गुरुपत्नीव शारदा।
रामकृष्णस्य सा शक्तिः साक्षान्मातृस्वरूपिणी ॥ ५९ ॥

नासीदिति। श्रीशारदादेवी अस्य केवलं गुरुपत्नीव नासीत् अपितु सा श्रीरामकृष्णस्य साक्षाज्जगन्मातृस्वरूपिणी शक्तिरासीत् ॥ ५९ ॥

स्वशुभेतरहन्मातृवरं गंगाधरं तथा।
सहायकौ समालम्ब्य नगेशमविशच्चिरात् ॥ ६० ॥

स्वशुभेतरेत्यादि। स्वस्य शुभेतरमकल्याणं हर्तुं शीलं यस्यैतादृशं मातृवरं शारदामातृवरं तथा गंगाधरं शिष्यं सहायकौ समालम्ब्य आश्रित्य चिरात् दीर्घकालानन्तरं नगेशं हिमालयमविशत् प्रविष्टः ॥ ६० ॥

अभूदन्य इव स्वामी चित्रया यात्रयाऽनया।
अकार्षीदखिलान्मुग्धान् दिव्येन स्वेन तेजसा ॥ ६१ ॥

अभूदिति। अनया चित्रया अद्भुतया यात्रया स्वामी अन्य इव अभूत् जातः पूर्वापेक्षया अधिकविशालदृष्टिरजनि। तथा स्वस्य दिव्येन अलौकिकेन तेजसा सामर्थ्येन अखिलान् तेन सह मिलितान् जनान् मुग्धान् आकृष्टानकार्षीत् कृतवान् ॥ ६१ ॥

निःस्वो विश्वविजेताऽसौ नेता मातृभुवो महान्।
निराश्रयो घनारण्ये बभ्राम भ्रान्तिशून्यहृत् ॥ ६२ ॥

निःस्व इति। निःस्वः अपि निर्धनोऽपि असौ विश्वविजेता जगज्जेता मातृभुवः भारतस्य महान् नेता नायकः घनारण्ये पर्वतीयनिबिडकानने निराश्रयः निश्चिताश्रयरहितः अपि भ्रान्तिशून्यहृत् अभ्रान्तचित्तः सन् बभ्राम ॥ ६२ ॥

स सर्वेषु तुषाराद्रेरङ्गेष्वश्मागसानुषु।
भूमानमन्वभून्नित्यं निर्झरेषु कणे कणे ॥ ६३ ॥

स सर्वेषु इति। स यतिः तुषाराद्रेः हिमाचलस्य सर्वेष्वपि अंगेषु अवयवेषु अश्मसु, अगेषु वृक्षेषु, सानुषु, शिखरेषु, निर्झरेषु जलप्रपातेषु, किं बहुना कणे कणेऽपि भूमानं ब्रह्म निरन्वभूत् अनुभूतवान् ॥ ६३ ॥

तरोः कस्याप्यधः स्थित्वा विश्वैकात्म्यानुभूतिमान्।
जीवसेवा शिवज्ञानादिति निर्णयमाययौ ॥ ६४ ॥

तरोरिति। तत्र कस्यापि तरोः वृक्षस्य अधः स्थित्वा विश्वैकात्म्यानुभूतिमान् सम्पूर्णविश्वेन सहात्मतादात्म्यमनुभवन् मनुष्यमात्रे शिवास्तित्वज्ञानपूर्वकं जीवसेवैव उच्चतमं लक्ष्यमिति निश्चयं गतवान् ॥ ६४ ॥

स्वचित्ते ग्रहणे शक्तां स्वामिस्वान्तविशालताम्।
वीक्ष्याभूत् स स्तम्भिताङ्गः सार्थनामाचलेश्वरः ॥ ६५ ॥

स्वचित्तोद्वहन इति । स्वामिनः स्वान्तस्य अन्तःकरणस्य विशालताम् अमर्यादत्व स्वस्य ( हिमालयस्य ) चित्तोद्वहने स्वविशालत्वरूपस्य स्वीकारे दाक्ष्यं समर्थमवलोक्य। अहमतिविशाल परं मम विशालता स्वामिनः मनस्यपि प्रतिबिम्बिता इत्यहो तन्मनः विशालत्वम् इति विचार्य स हिमाचलः स्तम्भितः स्तम्भितम् आश्चर्येण गतिरहितम् अगं यस्यैतादृशः अभूदत एव 'अचलेश्वर' इति सार्थनामा जातः ॥ ६५ ॥

ऐक्यं धर्मात्मना तेनादर्शि पैगम्बरानुगात् ।
भैक्ष्यं पथि समादाय कुर्वता प्राणरक्षणम् ॥ ६६ ॥

ऐक्यमिति । पथि मार्गे कस्माच्चित् पैगम्बरानुगात् मुस्लिमधर्मानुयायिनः भैक्ष्यं भिक्षां समादाय प्राणरक्षणं कुर्वता तेन स्वामिना धर्मात्मना धर्ममार्गाणामैक्यमदर्शि दर्शितम् सर्वेऽपि धर्माः समाना इति तेन प्रदर्शितम् इदमेव तत्त्व महात्मना गान्धिनापि पश्चादनुसृतमासीत् ॥ ६६ ॥

नन्दनस्येव सादृश्यंऽलकनन्दायनायते ।
दृष्टिपातं विधायास्या नन्देनापूरितं मनः ॥ ६७ ॥

नन्दनस्येवेति । नन्दनस्य इव इन्द्रोद्यानस्य अलकनन्दायनायते तद्ग्रामतीर्थस्थाने गलवर्पत्तिमी दृश्ये दृष्टिपातं विधाय तस्याः दृश्यमवलोकयतः अस्य मनः आनन्देन पूरितम् पूर्णमभूत् ॥ ६७ ॥

यत्रामितगुणाधारो तुहिनाद्रौ पदं न्यधात् ।
अद्यापि तत्र दृश्यन्ते स्मृतिचिह्नानि सर्वतः ॥ ६८ ॥

यत्रामितेत्यादि । तुहिनाद्रौ हिमाचले अमितगुणाधारः असंख्यगुणनिवासस्थानस्वरूप विवेकानन्दः यत्र स्थाने पदं न्यधात् पादन्यासमकरोत् तत्र तत्र स्थाने स्मृतिचिह्नानि स्मरणलक्षणानि 'अस्मिन् स्थाने स्वामिना उषितमित्याकारकाणि' सर्वतः सर्वत्र दृश्यन्ते अवलोक्यन्ते ॥ ६८ ॥

आनन्दं ब्रह्मणो विद्वानपि प्रकृतिदर्शनात् ।
तुतोषासौ प्रयागेषु संगमेहृद्‌यङ्गमे ॥ ६९ ॥

आनन्दमिति । प्रकृतिदर्शनात् प्रकृतिसौन्दर्यावलोकनमात्रेण ब्रह्मणः आनन्दं ब्रह्मानन्दं विद्वान् अनुभवन् प्रयागेषु 'रुद्रप्रयाग' नन्दप्रयाग ' इत्यादिस्थानेषु हृद्‌यङ्गमे मनोहरे संगमे पार्वतनदीद्वयसङ्गमे तद्दर्शनेनेत्यर्थः असौ तुतोष सन्तुष्टः ॥ ६९ ॥

राष्ट्रश्रीधीस्वरूपाणां नारीणां वीक्ष्य दुर्दशाम् ।
अदूयत भृशं तस्य मानसं मानसम्भृतम् ॥ ७० ॥

राष्ट्रश्रीरिति । असमदसौ राष्ट्रस्य श्रीधीस्वरूपाणां लक्ष्मीबुद्धिरूपाणां नारीणां स्त्रीणां दुर्दशां दुरवस्थां वीक्ष्यावलोक्य तस्य विवेकानन्दस्य मानसम्भृतं स्त्रियं प्रति मानसम्भृतं सम्मानपूर्णं मानसमन्तःकरणं भृशमदूयत ॥ ७० ॥

घनराजिर्घनाम्भस्सु सरसां प्रतिबिम्बिता ।
अधःशाखोर्ध्वमूला च बभौ घनतरा स्वयम् ॥ ७१ ॥

वनराजिरिति । हिमालये घना निबिडा वनराजिः सरसां तत्रत्यसरसीनां अम्भस्सु जलेषु प्रतिबिम्बिता प्रतिच्छायारूपेण पतिता अधोभूतशाखा ऊर्ध्वीभूतमूला च स्वयं घनापि घनतरा निबिडतरा बभौ शुशुभे ॥ ७१ ॥

तद्धाम परमं शम्भोरस्याकल्पत शक्तये ।
येन सा सफलीभूता मातुराशीःसरस्वती ॥ ७२ ॥

तद्धामेति । तत् हिमाचलात्मकं शम्भोः शिवस्य परमं धाम निवासस्थानं तस्य स्वामिनः शक्तये अधिकतराध्यात्मिकबलाय अकल्पत अभूत् । येन बलप्राप्त्येत्यर्थः मातुः शारदामातुः आशीःसरस्वती सफलीभूता । शक्तये इत्यत्र 'क्लृपि सम्पद्यमाने चे'ति चतुर्थी ॥ ७२ ॥

समाकृष्टोऽचलेनायं समुद्रेणेव विस्मितः ।
नगेन्दुमणिनागश्रीगोसुरामृतशालिना ॥ ७३ ॥

समाकृष्ट इति । अचलेन गिरिराजशोभया समाकृष्टः अपहृतमानसः कथम् ? समुद्रेण इव समाकृष्टः सन् विस्मितः अद्भुतपरिपूरितमानसः अभूत् । तत्र श्लेषेणाह—यथा समुद्रः नगः कल्पवृक्षः, इन्दुश्चन्द्रमाः, मणिः कौस्तुभः, नागः ऐरावतः, श्रीः लक्ष्मीः, गौः कामधेनुः, सुरा मद्यम्, अमृतं सुधा एतैर्युक्तः तथैव हिमालयोऽपि नगाः वृक्षाः, इन्दुमणयः चन्द्रकान्ताः, नागश्रीः गजानां शोभा, गावः, चमरीमृगाः, सुराः देवाः तथा अमृतं जलम् एतैः शालते शोभते तच्छीलेन । श्लेषः ॥ ७३ ॥

सतृष्णा धीः कस्य न स्याद् वीक्षितुं सुमनोमयम् ।
प्रभवं पुण्यसरितां सर्वरत्नधरं गिरिम् ॥ ७४ ॥

सतृष्णेति । सुमनोमयं देवमयम्, पुष्पसम्भृतं वा पुण्यसरितां गङ्गायमुनादीनां पवित्रनदीनामुत्पत्तिस्थानं सर्वरत्नानि धारयति इति अनेकरत्नसम्भृतं गिरिं वीक्षितुं कस्य धीः मनः सतृष्णा इच्छुका न स्यात् ? ॥ ७४ ॥

ध्यायन् मृत्युहरं हरं गिरिजया सार्धं, पिबन् स्रोतसां
पीयूषोपममम्बु, वल्कलधरः शृण्वन्निनादान् हरेः ।
शुभ्राभ्रप्रतिबिम्बमर्मरशिलाखण्डस्खलच्छम्बरा-
स्तृप्यन् वीक्ष्य तरङ्गिणीर्हिमगिरावानन्दपूर्णो यतिः ॥ ७५ ॥

ध्यायन्निति । वल्कलधरः यतिः गिरिजया पार्वत्या सह मृत्युहरं मृत्युञ्जयं हरं कैलासस्थितं शिवं ध्यायन्, स्रोतसां गिरिनिर्झराणां अमृतोपमं सुधामधुरं अम्बुजलं पिबन्, हरेः सिंहस्य निनादान् गर्जनशब्दान् शृण्वन्, तथा शुभ्राणां विशदानाम् अभ्राणां मेघानां प्रतिबिम्बान्येव मर्मरशिलाः मर्मरपाषाणाः तेषां खण्डेषु स्खलत् वेगेन पतत् शंबरं जलं यासां एतादृशीस्तरङ्गिणीश्च जलप्रतिबिम्बितश्वेतमेघोपरि वहत् जलं मर्मरशिलोपरि जलप्रपात इव शुशुभे एतादृशीस्तरङ्गिणीः वीक्ष्य तृप्यन् तृप्तिमागतः आनन्दपूर्णो जात इति शेषः । शार्दूलविक्रीडितं वृत्तम् उत्प्रेक्षालङ्कारश्च ॥ ७५ ॥

उन्नतं शिखरमस्ति हिमाद्रेः स्वामिनोऽपि च समुन्नतं मनः ।
आदिमं जडमशान्तकठोरं शान्तिपूर्णमपरं मृदुबोधवत् ॥ ७६ ॥

उन्नतमिति। हिमाद्रेः शिखरं कैलासशिखरम् उन्नतं सर्वोच्चमासीत् तथैव स्वामिनः अपि मनः समुन्नतम् उदारविचारचितमासीत् परं तत्र व्यतिरेकमाह—आदिमं हिमशिखरं जलं हिमाच्छादितत्वात् अशान्तं वलवन्मरुदादिना शान्तिरहितं कठोरं पाषाणमयत्वात् कठिनं चासीत् परं स्वामिनः हृदयं शान्तिपूर्णं, मृदु कोमलं, बोधवत् ज्ञानमयं चासीदिति व्यतिरेकः। अर्धसमवृत्तम् व्यतिरेकालङ्कारश्च ॥ ७६ ॥

> लोकं मोहतमोहतं धृतहिनालोकं विधातुं क्षमे
> विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
> अद्वैताश्रमसेवकेन मनसा तुच्छेन गेये महा-
> काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽगमत् सप्तमः ॥ ७७ ॥

इति त्र्यम्बकसूरिविरचिते 'विवेकानन्दचरितमहाकाव्ये'
हिमाचलदर्शनं नाम सप्तमः सर्गः ॥ ७ ॥

लोकमिति। लोकमित्यादि 'धर्मप्रधानाश्रये' इत्यन्तं पूर्ववत् अद्वैताश्रमसेवकेन स्वतुच्छेन बोधशून्येन मनसा अद्वैताश्रमे सेवाकार्यं कुर्वता त्र्यम्बकसूरिणा विरचितेऽस्मिन्विवेकानन्दचरिते नाम महाकाव्ये सप्तम सर्गः समाप्तः ॥ ७७ ॥

इति विवेकानन्दचरितटीकायां 'विवेकदीपाख्यायां' सप्तमः सर्गः ॥ ७ ॥

—

# अथाष्टमः सर्गः

दयालुमासादितदिव्यतेजसं गिरीश्वरस्येक्षणतो यतीश्वरम् ।
विलोक्य लोकाद्भुतमन्यबन्धवो भृशं तुरीयप्रमुखाश्चमत्कृताः ॥ १ ॥

दयालुमिति । दयालुम् दारिद्र्यपीडितजनानवलोक्य दयापूर्णहृदयम् । आसादितदिव्यतेजसं गिरिराजप्रदेशेषु भ्रमणात् प्राप्तालौकिकतेजसं लोकाद्भुतं असाधारणपरिवर्तनयुक्तं ते स्वामिनमवलोक्य तुरीयानन्दप्रधाना अन्यगुरुबान्धवा भृशं चमत्कृता आश्चर्ययुक्ता जाताः । अस्मिन् सर्गे वंशस्थं वृत्तम् ॥ १ ॥

क्वचित् सतीर्थ्यैर्निवसन्ननेकशः पठन् प्रबन्धान् गहनानपि द्रुतम् ।
असौ भृशं वाङ्मयमन्दिरप्रभुं चकार चित्रोदधिमग्नचेतसम् ॥ २ ॥

क्वचिदिति । क्वचित् कुत्रचित् सतीर्थ्यैर्गुरुबन्धुभिः निवसन् तत्र च अनेकशः अनेकान् गहनान् गहनविषयकानपि प्रबन्धान् ग्रन्थान् द्रुतम् अत्यल्पकाल एव पठन् अधीयानः असौ स्वामी तत्रत्यवाङ्मन्दिरप्रभुं पुस्तकालयाधिकारिणं चित्रोदधिमग्नचेतसम् आश्चर्यसम्भ्रमभ्रान्तःकरणं चकार विहितवान् ॥ २ ॥

अथ स्वयं भारतमातरं भुवं समीक्षितुं यत्सकलामियेष सः ।
समृद्धकाश्मीरकिरीटभूषितामुदग्वनालीघननीलकुन्तलाम् ॥ ३ ॥

अथ स्वयमिति । यतः सः स्वयं सकलां सम्पूर्णां भारतमातरं भुवं मातृभूमिं समीक्षितुमियेष अभिलषितवान् । कीदृशीम्—समृद्धः धनधान्यपूर्णः काश्मीरप्रदेश एव किरीटं मुकुटः तेन भूषिताम्, उदग्वनालीघननीलकुन्तलाम् उदीच्यां दिशि या वनाली वनपङ्क्तिः सा एव नीलकुन्तलस्थानीया यस्याः एतादृशीं भारतमातरं समीक्षितुमियेष तस्य निर्यपाविंश्युत्तरेण संबन्धः ॥ ३ ॥

सुरापगामौक्तिकहारहारिणीं लसन्महार्होपलविन्ध्यमेखलाम् ।
पदारविन्दाङ्कितहिन्दसागरां जगद्वरेण्यां मणिहेमभूषिताम् ॥ ४ ॥

सुरापगेति । सुरापगा भागीरथी सा एव मौक्तिकहारः तेन हारिणीं मनोहारिणीम्; लसन्तः महार्हाः बहुमूल्या उपला रत्नपाषाणाः यस्मिन् एतादृशः विन्ध्याचल एव मेखला यस्याः पदारविन्दाभ्यां चरणकमलाभ्यामङ्कितः हिन्दमहासागरः यस्याः एतादृशीं जगद्वरेण्यां जगत्पूजनीयां मणिभिः हेम्ना सुवर्णेन च भूषिताम् ॥ ४ ॥

सरस्वदुत्संगतरङ्गकुण्डलामसीमसौन्दर्यविशुद्धसम्पदम् ।
पुरा शुकव्यासमुनीन्द्रशङ्करार्जुनानुसूयाजनकात्मजापदम् ॥ ५ ॥

सरस्वदिति । सरस्वदुत्संगे पूर्वपश्चिमसमुद्रपृष्ठे विद्यमानाः ( दोलायमानाः ) तरङ्गा एव कुण्डलं यस्याः असीमसौन्दर्यां मर्यादातीतरामणीयकां विशुद्धा पवित्रा सम्पद् यस्याः अथवा असीमसौन्दर्यमेव विशुद्धा सम्पद् यस्याः पुरा प्राचीनकाले शुकव्यासादयः मुनीन्द्राः शङ्कराचार्याः, वीरः अर्जुनः सती अनसूया ललनादर्शभूता जनकात्मजा सीता एतेषां पदम् निवासस्थानभूताम् । समीक्षितुमियेष ॥ ५ ॥

चरित्रशिक्षाप्रतिपादनस्मृतां श्रुतिस्वरूपश्रुतवैभवाद्भुताम् ।
परात्यविद्यादिनिवासमन्दिरं समर्चनीयां विबुधैर्निरन्तरम् ॥ ६ ॥

चरित्रशिक्षेति । चरित्रशिक्षा सदाचारोपदेशः तस्याः प्रतिपादनेन दानेन स्मृताम्, सर्वैरपि स्मरणविषयीकृताम् भारतमेव सदाचारदानसमर्थमिति स्मृताम् श्रुतिस्वरूपं वेदात्मकं यच्छ्रुत प्रसिद्धं वैभवं सम्पत्ति तेन अद्भुताम् । परा विद्या उपनिषद्विद्या वेदान्तविद्या । 'द्वे विद्ये परा चैवापरा च "अथ परा यया तदक्षरमधिगम्यते' इति ब्रह्मविद्यालक्षणम् तस्याः आदिनिवासमन्दिरम् तथा विबुधैः देवैरपि नित्यं समर्चनीयां पूजनीयाम् ॥ ६ ॥

अनेकतायां चिरमेकताद्दशं भृशं च धन्यां धनधान्यसाधनैः ।
महीतले चाखिलनीवृदुत्तमां भुवं समेषां किल धर्मवर्मनाम् ॥ ७ ॥

अनेकतायामिति । अनेकतायां भेदाखिलत्वेऽपि एकताद्दशं समन्वयदृष्टिं, धनधान्यसाधनैः सम्पदन्नादिसामग्र्या अतिशयेन धन्यां भाग्यशालिनीम् महीतले भूमण्डले अखिलेषु नीवृत्सु देशेषु उत्तमां श्रेष्ठां तथा समेषां सर्वेषामपि धर्मवर्मनां धार्मिकमार्गाणां भुवमुत्पत्तिस्थानम् ॥ ७ ॥

परं क्रमाद्विस्मृतपूर्वगौरवां परैः समाक्रान्तहृताखिलश्रियम् ।
चिरप्रसुप्तामिव दीनतामितां प्रतीक्षमाणां विगतात्मवैभवम् ॥ ८ ॥

परमिति । एवं पूर्वोक्तगुणविशिष्टापि विस्मृतं पूर्वं प्राचीनं गौरवं महत्ता यया तत्र कारणमाह—परैः शत्रुभिः समाक्रान्ता अत एव हृता अपनीता अखिला श्रीः धनसम्पद् यस्याः । चिरं चिरकालं प्रसुप्तां निद्रिताम् अत एव दीनताम् असहायतामिता प्राप्ता तथा विगतं नष्टम् आत्मनैभवम् ऐश्वर्यं प्रतीक्षमाणां पुनरपि प्राप्तुमभिलषमाणाम् ॥ ८ ॥

पुनः स्वकीयोच्चपदप्रतिष्ठिता हितार्थमर्हा जगतः प्रवर्तितुम् ।
विहाय बन्धूनखिलानपि प्रभुं सहायमेकं स विधाय निर्ययौ ॥ ९ ॥

पुनरिति । या भारतमाता पुनरेकदा स्वकीयोच्चपदप्रतिष्ठिता निजोन्नतसिंहासनस्थापिता सती जगति लब्धगुरुत्वपदा सती जगतः हितार्थं कल्याणार्थं प्रवर्तितुं प्रवृत्ता भवितुम् अर्हा योग्या । तत् तस्मात् यतिः अखिलान् बन्धून्विहाय एकमीश्वरमेव सहायकं विधाय कृत्वा निर्ययौ भारतदर्शनार्थं निर्गतः ॥ ९ ॥

भ्रमन् स भव्यो भवनेषु भूभृतां क्वचिद्दरिद्रोटजभग्नभूमिषु ।
समादृतः क्वापि च देवमन्दिरेऽमले क्वचिच्छाखितले वसन् ययौ ॥ १० ॥

भ्रमन्निति । स यतिः क्वचित् भूभृतां नृपाणां भव्येषु ऐश्वर्यसम्पन्नेषु भवनेषु प्रासादेषु क्वचिच्च दरिद्राणां निर्धनानाम् उटजभग्नभूमिषु अर्धविध्वस्तनिवासेषु, क्वचित् पवित्रे देवमन्दिरे देवालये समादृतः आदरास्पदं कृतः क्वचिच्च वने केवलं शाखितले वृक्षाधोभागे वसन् ययौ भारतदर्शनार्थं चचार ॥ १० ॥

रसां ससारैः पदलक्षणैरसौ रसात् स्वकीयैरभितो विभूषयन् ।
समागतो देशवरस्य भाविनीं पुरीं प्रधानामथ देहलीश्रुताम् ॥ ११ ॥

रसामिति। असौ स्वामी ससारैः आध्यात्मिकशक्तियुक्तैः स्वकीयैः पदचिह्नैः रसां महीम् अभितः परितः विभूषयन् देशवरस्य भारतवर्षस्य, भाविनीं भविष्यत्काले जनिष्यमाणां प्रधानां 'देहली' इति श्रुतां प्रसिद्धां पुरीं नगरीं समाययौ समागतः ॥ ११ ॥

निशम्य चैनं यतिमांग्लभारतीरतिं तथा तीव्रमतिं समाययुः।
जनास्तथानेकपथावलम्बिनः पदं यथाऽस्याजनि सत्रसन्निभम् ॥ १२ ॥

निशम्येति। एवं यतिम् आंग्लभारतीरतिम् आंग्लभाषापटुं तीव्रप्रतिभाशालिनं च निशम्य अनेकपथावलम्बिनः भिन्नधर्मीयाः जनाः तदाऽस्य समीपे समाययुः यथाऽस्य निवासस्थानं सत्रसन्निभम् महती विद्वत्परिषदिव अजनि ॥ १२ ॥

यशोंऽशवोऽस्य प्रसृता यथा यथा नवोदिताहस्करभास्वरद्युतेः।
तथा तथा भारतदीर्घनिद्रया शिवाय लोकस्य कुतोऽप्यहोगतम् ॥ १३ ॥

यशोंऽशव इति। नवोदिताहस्करभास्वरद्युतेः। नवोदितादित्यस्येव भास्वरा प्रकाशमाना द्युतिः कान्तिः यस्यैतादृशस्य स्वामिनः यशोंऽशवः कीर्तिकिरणाः यथा यथा इतस्ततः देशे प्रसृताः तथा तथा भारतदीर्घनिद्रया भारतस्य चिरकालिकस्वप्नेन लोकस्य कल्याणाय कुतोऽपि गतम् प्रयातम् निद्रानाशादेव भारतकल्याणं भवेत् ॥ १३ ॥

स राजमान्यः प्रतिराजपुत्रकं प्रबोधयिष्यन्नववीरभावनाम्।
गतोऽलवराख्यां नगरीं गरीयसीं यशोलसन्मङ्गलसिंहपालिताम् ॥ १४ ॥

स इति। स राजमान्यः इति राजभिः प्राप्तसम्मानः स यतिः 'राजपूताना'प्रदेशे भ्रमन् प्रतिराजपुत्रकं प्रत्येकराजपुत्रहृदये नववीरभावनां नवीनपराक्रमविचारं प्रबोधयिष्यन् प्रबुद्धां करिष्यन् अल्वराख्यां गरीयसीं महतीं नगरीं यशसा लसता मङ्गलसिंहभूपतिना पालितां गतः ॥ १४ ॥

अलौकिकेनास्य ततेन तेजसा यतेर्विमुग्धाः स्थविराः सबालकाः।
स्त्रियो युवानः सुधियोऽधियस्तदा कपोतपातं न्यपतंस्तदग्रतः ॥ १५ ॥

अलौकिकेनास्येति। अस्य यतेः स्वामिनः ततेन विस्तृतेन अलौकिकेन दिव्येन तेजसा विमुग्धा मोहिताः स्थविराः वृद्धाः बालकैः सहिताः स्त्रियः युवानः सुधियः विद्वांसः अधियः निरक्षराः सर्वेऽपि तदग्रतः तस्य पुरतः कपोतपातं खलेकपोतन्यायेन एकसमयावच्छेदेनैव न्यपतन् दर्शनार्थमागच्छन् ॥ १५ ॥

अनङ्गजिच्छास्त्रतृतीयलोचनो युवा समालोचितसर्वदर्शनः।
सुदर्शनः कश्चन देववाक्चणः समेत्यदोऽश्रावि नृपेण मन्त्रिणः ॥ १६ ॥

अनङ्गजिदिति। अनङ्गजित् जितकामः शास्त्रमेव शास्त्रज्ञानमेव तृतीयं लोचनं यस्य शिवसदृशः इत्यपि ध्वन्यते। समालोचितानि अधीतानि सर्वदर्शनानि दर्शनशास्त्राणि येनैतादृशः सुदर्शनः सुन्दरः देववाक्चणः संस्कृतभाषापण्डितः कश्चन समेति आगच्छति इति नृपेण अल्वरमहाराजेन मन्त्रिणः सचिवात् अश्रावि श्रुतम् ॥ १६ ॥

कुतूहलाक्रान्तमना मनाङ् नृपः स्वयं प्रयातोऽतिथिदर्शनेच्छुकः।
उवाच चैनं यतयो भवादृशाः किमर्थमङ्गीकृतभिक्षुवृत्तयः ॥ १७ ॥

कुतूहलाक्रान्त इति। नृप अल्वरनृपति किञ्चित्कुतूहलाक्रान्तमना एतादृशयति दर्शनार्थमुत्सुक सन् स्वयं प्रयात एनम् उवाच च 'स्वामिन् भवादृशा यतय किमर्थं कुत कारणात् अङ्गीकृतभिक्षुवृत्तय स्वीकृतभैक्षचर्या सन्त इतस्ततो भ्रमन्ति॥ १७॥

भवान् समर्थोऽर्जितुमर्थसम्पद कुतो गृहीतं दयनीयगैरिकम्।
न युक्तमित्थं यदितस्ततो भवान् भ्रमन् वृथैवात्मवपु कदर्थयेत्॥ १८॥

भवानिति। भवान् अर्थसम्पद धनसम्पदम् अर्जितु प्रयत्नपूर्वक प्राप्तु समर्थ अस्ति। परमिदं दयनीयं दयोत्पादक गैरिकं कुत गृहीतम्। यत् भवान् इतस्तत भ्रमन् वृथैव आत्मवपु कदर्थयेत् पीडयेत् इद न युक्तम्॥ १८॥

मृते यति पालनधर्ममात्मनो विहाय नित्यं मृगयापरो भवान्।
तदा परित्यक्तधनार्जनो जनोऽप्ययं प्रियं पार्थिव भैक्षमाश्रित॥ १९॥

मृते यतिरिति। यति अब्रवीत्। आत्मन पालनधर्मं प्रजापालनकर्तव्य विहाय परित्यज्य नित्यम् अनिशं भवान् मृगयापर मृगयासक्त अस्ति तथा अयं जन अहमित्यर्थ। पार्थिव! प्रियं यदभिलषित भैक्ष भिक्षावृत्तिमाश्रित॥ १९॥

अनेन किञ्चिद्चकितो महीपतिर्यतिं जगादाधुनिकेऽपि युगेऽप्यहो॥
प्रजा अजायन्त शिलार्हणादरा यद् क्षणं बालिशलक्षणं न किम्?॥२०॥

अनेनेति। महीपति अनेन स्वामिन उत्तरेण किञ्चिद्चकित चकित आश्चर्ययुक्त यति विवेकानन्द जगाद—आधुनिके युगेऽपि विज्ञानयुगेऽपि प्रजा लोका शिलार्हणादरा प्रस्तरनिर्मितमूर्तिपूजका अजायन्त अहो। आश्चर्यम्। एष क्षणकाल यद् इद प्रस्तरमूर्तिपूजाप्रथा बालिशलक्षण मूर्खताचिह्न लक्षण न किमु॥ २०॥

शिवाय कल्पेत कृति शिलामयी मयि प्रभावोऽन्वयश्च नो यदि।
किमन्यजन्मन्यपि मामधन्यता कलङ्कपङ्को मलिनीकरिष्यति॥ २१॥

शिवायेति। शिलामयी प्रस्तरनिर्मिता कृति देवमूर्ति चेद्यदि शिवाय लोककल्याणाय कल्पेत कारणीभवेत् तथा मयि ममोपरि प्रभावोऽन्वयकृत् प्रभावोत्पादिका च नो भवेत् मम विचारपरिवर्तनं कर्तुमसमर्था भवेत्। तर्हि माम् अन्यजन्मनि अपरजनुष्यपि अधन्यता एव दुर्भाग्यमेव कलङ्कपङ्क लाञ्छनकर्दम मलिनीकरिष्यति किम् मामाविलयिष्यति किम्॥ २१॥

क्षितिक्षिदुक्तौ परिहासवासना स मन्यमानो मुनिभावमागत।
ब्रवीति पूर्वो दृषदोऽर्चयेन्नरो न रोचते मह्यमदो यथार्थत॥ २२॥

क्षितिक्षिदिति। क्षितिक्षिदुक्तौ अल्वरनृपतिवचसि काचित् परिहासवासना मन्यमान स यति मुनिभाव मौनमागत तूष्णीं स्थित। अथ पूर्वं ब्रवीति– नर दृषद प्रस्तरमूर्ती अर्चयेत् पूजयेत् इदं मह्य यथार्थत सत्यमेव न रोचते' इति। रुच्यर्थानां प्रीयमाण इति चतुर्थी॥ २२॥

यति सदोभित्तिगता महीपते प्रतिच्छवि यन्त्रिगणाग्रत क्षिपन्।
जगाद थूत्कृत्य भवत्स्वमङ्गलं विधातुमीश किमु कोऽपि अङ्गलम्॥२३॥

यतिरिति। यतिः सदोभित्तिगतां राजसभागृहस्य भित्तौ अवलम्बितां महीपतेः नृपतेः प्रतिच्छविं चित्रं मन्त्रिगणस्य पुरतः क्षिपन् जगाद मवत्सु कश्चित् थूत्कृत्य निष्ठीवनं कृत्वा मङ्गलनृपतिं चित्रगतम् अमङ्गलं विधातुमपवित्रीकर्तुमीशः समर्थः अस्ति किम् ? ॥ २३ ॥

श्रवोऽतिथीकृत्य वचो महात्मनः सभासदः साध्वसतः परस्परम् ।
विलोकयन्तो गिरमस्य मेनिरे धराधिपस्याप्यवमाननापराम् ॥ २४ ॥

श्रवोऽतिथीकृत्येति। महात्मनः यतेः वचः श्रवोऽतिथीकृत्य निशम्य सभासदः सदोगताः सर्वेऽपि परस्परं परस्पराभिमुखं विलोकयन्तो अस्य स्वामिनः गिरं धराधिपस्य नृपतेः अवमाननापराम् अपमानजनिकां मेनिरे अमन्यन्त ॥ २४ ॥

सोऽप्याह चित्रं किल वर्णसंकरं करोति नैकोऽप्यशिवं तु चित्रकृत् ।
विमाननास्य क्षितिभृत्तिरस्क्रिया प्रमाणमास्ते भवतामनुत्तरम् ॥ २५ ॥

सोऽप्याहेति। यतिरुवाच चित्रमिदं वर्णसंकरस्वरूपं अनेकवर्णसंमिश्रणात्मकं केवलं सदपि युष्मासु मध्ये नैकोऽपि अशिवममङ्गलं करोति इति चित्रकृत् अद्भुतमिव। अस्य चित्रस्य विमानना अपमानः क्षितिभृतः महीपतेः तिरस्कारः इत्यत्र भवतां युष्माकमनुत्तरमेव प्रमाणं सत्यतायाः मानम् ॥ २५ ॥

परेश्वरश्चेत् प्रतिमासु पूज्यते न सार्चना कुत्रचिदश्मनां भवेत् ।
प्रतिप्रतीकं हरिरस्ति चिन्मयः प्रतीकपूजापरिचर्चितः परा हरेः ॥ २६ ॥

परेश्वरश्चेदिति। चेद्यदि परेश्वरः प्रतिमासु मूर्तिषु पूज्यते सार्चना पूजा अश्मनां पूजा न भवेत् प्रतिप्रतीकं प्रत्येकमूर्तिषु चिन्मयः ज्ञानमयः हरिः ईश्वरः विद्यते अतः प्रतीकपूजा न प्रस्तरपूजा अपि तु चिन्मयस्य हरेरिति सत्यम् ॥ २६ ॥

स सर्वगोऽखर्वबलो विलोक्यते बुधैर्हृदि ज्ञाननिधिर्निरन्तरम् ।
पराऽस्य शक्तिर्विविधेह दृश्यते जनिस्थितिध्वंसविधौ पटीयसी ॥ २७ ॥

स सर्वग इति। स परमेश्वरः सर्वगः सर्वव्यापी अखर्वबलः सर्वशक्तिमान् ज्ञाननिधिः संवित्कोशः निरन्तरं नित्यं बुधैः विद्वद्भिः हृदि मानसे विलोक्यते अवलोक्यते। अस्य परा शक्तिः विविधरूपेण सर्वत्र जनौ सृष्ट्युत्पत्तौ स्थितौ सृष्ट्यवस्थाने तथा ध्वंसविधौ विनाशकरणे च पटीयसी अतिकुशला सर्वत्र दृश्यते ॥ २७ ॥

तदा प्रभृत्यास्तिकताऽस्वरप्रभोरभूतपूर्वाऽभ्युदियाय मानसे ।
सदागमस्पर्शमणिप्रभावतः प्रयात्ययोऽसन्ननु काञ्चनच्छविम् ॥ २८ ॥

तदा प्रभृतीति। तस्मात् क्षणादारभ्य अस्वरप्रभोः आस्तिकता मूर्तिषु ईश्वरास्तित्वविषये श्रद्धा अभूतपूर्वा या पूर्वं कदापि नासीत् एतादृशी मानसे अन्तःकरणे अभ्युदियाय उत्पन्ना। सदागमस्पर्शमणिप्रभावतः सतामागमनमेव स्पर्शमणिः स्पर्शप्रस्तरः तस्य प्रभावतः असत् असुवर्णरूपम् अयः ननु काञ्चनच्छविं सुवर्णशोभां प्रयाति। अथ च सतां सज्जनानामागमनेन असन् मनुष्यः काञ्चनं अलौकिकीं कान्तिमधिगच्छति ॥ २८ ॥

अहान्यवात्सीत् कतिचिद्यतिर्महान् पुरे नृपाभ्यर्थनया दयान्वितः ।
दिशंश्च मार्गं धनिनोऽथ दुर्गतान् प्रचारकः संस्कृतभारतीरतः ॥ २९ ॥

अहानीति । महान् यतिः स्वामी नृपस्य अलवरनृपतेः अभ्यर्थनया तस्य नगरे दयान्वित कतिचिद्दिनानि अवात्सीत् उवास। तत्र धनिनः धनाढ्यान् दुर्गतान् निर्धनांश्च मार्गं दिशन् प्रदर्शयन् संस्कृतभारतीरतेः संस्कृतभाषाध्ययनविषये प्रचारकः सन् उवास। सर्वाण्यपि हिन्दुशास्त्राणि संस्कृतभाषायामेव लिखितानि सन्ति। भारतीयसंस्कृतिरक्षाया एकमात्र साधनं संस्कृतभाषाध्ययनमेव इति स्वामिनः मतमासीत्। स्वामी देववाणीं प्रति अतीवादरयुक्त आसीत्। 'आर्यऋषीणां सर्वेऽपि विचाराः संस्कृतभाषायामेव निहिताः सन्ति, अतः तद्भाषाध्ययनं भारतोन्नतिहेतुरि'ति तन्मतम् ॥ २९ ॥

पुरं जयस्याथ स चारुगोपुरं सुरेश्वरस्येव निकेतनं परम् ।
रणत्पुरन्ध्रीपदशोभिनूपुरं क्रमाद्विवेश स यतिर्जितेन्द्रियः ॥ ३० ॥

पुरं जयस्येति। स जितेन्द्रियः कृतेन्द्रियविजयः यतिः क्रमात् क्रमशः जयस्य पुरं जयपुरम् इत्यर्थः अविशत् प्रविष्टः। कीदृशं जयपुरं चारुमनोहरं गोपुरं प्रवेशद्वारं यस्य। परम् अपरं सुरेश्वरस्य इन्द्रस्य निकेतनम् इन्द्रपुरम् इव पुरन्ध्रीपदेषु रणन्ति अत एव शोभायमानानि नूपुराणि यस्मिन् एतादृशं जयपुरं यतिः प्रविष्टः ॥ ३० ॥

दुरूहमप्यद्भुतबुद्धिचातुरीपरीतदोषज्ञधुरीणतां गतः ।
अशेषशेषाननरम्यपत्तने सतः सुतध्यिपाचिराद्धीतवान् ॥ ३१ ॥

दुरूहमिति। अद्भुतबुद्धिचातुरीपरीताः अलौकिकप्रतिभासम्पन्नाः ये दोषज्ञाः विद्वांसः तेषां धुरीणतां मुख्यत्वं गतः प्राप्तः सन् एव यतिः सुतध्यिः सतः विदुषः दुरूहमपि कठिनमपि अशेषशेषाकरं व्याकरणविषये पातञ्जलभाष्यम् अचिरात् अल्पसमयादेवाधीतवान् ॥

सशोक आसीदवलोक्य शोकिनो व्यतीतसीमा किल देशकालयोः ।
'इतस्ततोऽन्वेषणतो 'हरे'र्जनस्तमर्चयेद् दुर्गतगं' तदीप्सितम् ॥ ३१ ॥

सशोक इति। शोकिनः दुःखितानवलोक्य देशकालयोः कस्मिन् देशे कस्मिंश्च काले इति सीमानमतिक्रम्य सशोकः आसीत् दुःखितः बभूव। जनः 'हरेः' ईश्वरस्य इतस्ततः अन्वेषणात् वरं दुर्गतमेव दीनदुःखितेष्वेव विद्यमानमीश्वरम् अर्चयेत् इति तस्य मतमासीत् ॥ ३१ ॥

यमी समुद्धर्तुमियेष सर्वतो जनान् स दीनान् दलितान् प्रपीडितान् ।
तदर्थमभ्यर्थितवान् परेश्वरं विधातुमित्थं च नृपानुपादिशत् ॥ ३२ ॥

यमीति। स यतिः सर्वतः सर्वत्र दीनान् दरिद्रान् दलितान् बलवद्भिः ग्रस्तान् प्रपीडितान् रोगादिदुःखितान् जनान् समुद्धर्तुं दुःखमुक्तान् कर्तुमियेष। एतदर्थं स यतिः परेश्वरं परमेश्वरं प्रार्थयामास तथा एव कर्तुं नृपानपि उपादिशत्। स आराधनं दरिद्रममन्यत दरिद्राणां सेवां च स्वजीवनलक्ष्यं कृतवान् ॥ ३२ ॥

द्विजातयो यस्य परिश्रमान्निजं गुरुत्वमैश्वर्यमथार्थसञ्चयम् ।
अलं बभूवुः परिरक्षितुं क्षितौ कथं स शूद्रो दलनास्पदं गतः ! ॥ ३३ ॥

द्विजातय इति। यस्य तथाकथितस्य शूद्रस्य परिश्रमात् द्विजातयः उच्चवर्णाः ब्राह्मणक्षत्रियवैश्याः द्विजातयः निजं स्वकीयं गुरुत्वम् ऐश्वर्यं प्रभुत्वम् अपच अर्थसञ्चय

परिरक्षितुं क्षितौ जगति अलं समर्था बभूवुः स शूद्रः कथं दलनास्पदं पददलनविषयो जातः वर्तेत्याश्चर्यं ॥ ३३ ॥

अदृश्यतामेष्यति देशकोशतो न यावदेषा दलितोक्तिराक्षसी ।
अलं जगत्यां नतमुन्नतं शिरो निजं विधातुं किमु भारतं भवेत् ॥ ३४ ॥

अदृश्यतामिति । देशकोशतः भारतीयशब्दकोशात् यावत्कालपर्यन्तं एषा दलितोक्तिराक्षसी 'दलितवर्ग' इति भयानकशब्दः अदृश्यतां न याति तावत्कालपर्यन्तं भारतं जगत्यां संसारे स्वकीयं नतं शिरः मस्तकम् उन्नतं विधातुं कथमलं समर्थं भवेत् न कथमपीत्यर्थः ॥ ३४ ॥

गतोऽजमेरं रचितानि मोगलैर्निजप्रजोपप्लववीतवैभवैः ।
ददर्श हर्म्याणि विशालदर्शनान्यथास्मदर्थश्रमसाधितान्यहो ॥ ३५ ॥

गतोऽजमेरमिति । अथ अजमेरं नामापरं राजपुतानानगरे गतः सन् निजप्रजानाम् उपप्लवेन परिपीडनेन वीतं नष्टं वैभवं येषां तैः मोगलनृपतिभिः रचितानि निर्मितानि अस्माकमेव अर्थैः धनैः श्रमैः परिश्रमैश्च साधितानि विशालदर्शनानि हर्म्याणि प्रासादान् ददर्श दृष्टवान् ॥ ३५ ॥

अबूगतं कारुकलाविलासजं स चारुतीर्थंकरमन्दिरं ययौ ।
भ्रमन्तमेनं मनुजास्तथान्वयुर्यथान्नपानावसरं न लब्धवान् ॥ ३६ ॥

अबूगतमिति । सः कारुकलाविलासजशिल्पिकौशलनिर्मितं चारु सुन्दरं तीर्थंकरमन्दिरं जैनमन्दिरं मर्मरशिलामयं 'अबू'नामकपर्वतोपरि स्थितं ययौ गतवान् । भ्रमन्तं च इतस्ततः परिभ्रमन्तं चैनं मनुजास्तथा अन्वयुः अनुजग्मुः यथासौ भोजनपानादिकृतेऽवसरं समयमपि न लब्धवान् ॥ ३६ ॥

न चानुभूताखिलभूतगेश्वरो निवासभिक्षाविनिषेधयानभूत् ।
अथो जगन्मोहकरं स्वखेतडीं नृपस्य मन्त्री जगमोहनोऽनयत् ॥ ३७ ॥

न चानुभूतेत्यादि । स यतिः अनुभूताखिलभूतगेश्वरः अनुभूतः प्रत्यक्षीकृतः अखिलभूतेषु प्राणिमात्रेषु विद्यमानः ईश्वरः येन एतादृशः सन् निवासे भिक्षायाम् अत्र वासः कर्तव्यो न वा अस्मान्नराद् भिक्षा स्वीकर्तव्या न वा इत्यादिविषयेषु निषेधवाक्नाभूत् प्रतिषेधं नाकरोत् कस्यापि गृहे निवासमकरोत् कस्माच्चिदपि मनुष्याद्भिक्षान्नमग्रहीत् । 'खेतडी'नामपुरस्य राजमन्त्री जगमोहनो नाम जगन्मोहकरं तं स्वनगरम् ( खेतड़ीं ) अनयत् ॥ ३७ ॥

निशम्य तस्मान्नरधर्मजीवनप्रबोधनीत्यादिरहस्यशासनम् ।
नृपोऽपि भक्तिप्रवणेन चेतसा नतोत्तमाङ्गः पुरतोऽस्य संस्थितः ॥ ३८ ॥

निशम्येति । नृपोऽपि 'खेतडी'नृपोऽपि तस्माद्यतेः मनुष्याणां धर्मः जीवनं अध्यात्मज्ञानं राजनीतिः इत्यादिविषयाणां रहस्यशासनम् गूढतमोपदेशं निशम्य श्रुत्वा भक्तिप्रवणेन श्रद्धापूर्णेन चेतसा अन्तःकरणेन नतम् उत्तमाङ्गं यस्यैतादृशः अस्य स्वामिनः पुरतः अग्रे संस्थितः ॥ ३८ ॥

नृपोऽनपत्योऽतिशुभाशिषा गुरोः सुखान्वितः सूनुमुखावलोकनात् ।
कथं सदा लोकशिवैककामिनां वचांसि यान्ति व्यभिचारितां सताम् ॥३९॥

नृप इति । अनपत्योऽपि संतानरहितोऽपि नृपः गुरोः शुभाशिषा आशीर्वादेन सूनुमुखावलोकनात् पुत्रमुखकमलदर्शनसौभाग्येन सुखान्वितः आनन्दितः जातः इति शेषः । अर्थान्तरन्यासेनाह सदा निरन्तरं लोकशिवैककामिनां लोककल्याणेप्सूनां साधूनां वचांसि वरदानवचनानि व्यभिचारिताम् असत्यतां कथं यान्ति ॥ ३९ ॥

असावनाहोऽप्यवनीशयाचितः सदोगतो गीतरवे रतस्तथा ।
स्वभावनाद्येह च राजनर्तकीकृतस्वरमेलनतः प्रभावितः ॥ ४० ॥

असाविति । असौ स्वामी नर्तकीगानश्रोतुमनीहोऽपि अनिच्छुकोऽपि अवनीशयाचितः नृपतिप्रार्थितः नर्तकीगीतगानश्रवणार्थं सदोगतः राजसभामुपस्थितः । तत्र च राजनर्तक्या कृतात् स्वरमेलनतः निषादर्षभादिस्वरारोहावरोहादिसम्मेलनेन यतिः अतीव प्रभावितः अभूत् ॥ ४० ॥

किं तद् गानमित्याह—

न भावनीयाः समदर्शिना प्रभो ! ममापराधा नय पारमापदाम् ।
अयो हरेः स्यान्मृगयोर्गृहेऽथवा न हेम किं स्पर्शमणिप्रभावतः ? ॥ ४१ ॥

न भावनीया इति । हे प्रभो ! समदर्शिना समदृष्टिना त्वया ममापराधाः आगांसि न भावनीयाः न विचारणीयाः । भगवन् ! माम् आपदाम् आपत्तीनां पारं नय मम दुःखानि अपनय । अयः हरेः भगवतः गृहे मन्दिरे स्यादथवा मृगयोः तथाकथितव्याधस्य गृहे वा स्यात्, उभयथापि तत् स्पर्शमणिप्रभावतः हेम सुवर्णं न स्यात् किमु ? अपि तु स्यादेव ॥ ४१ ॥

विधूतनिद्रस्य विभासिता दिशो विपश्यतो ब्रह्म च समन्ततः ।
त्वयाद्य मोहः परमो विनाशितः क्षमस्व मां मातरबोधदानतः ॥ ४२ ॥

विधूतनिद्रस्येति । राजनर्तकीगानं निशम्य विधूतनिद्रस्य त्यक्ताज्ञाननिद्रस्येव दिशः विभासिताः प्रकाशमय्यो जाताः । कुतः समन्ततः ब्रह्म च सर्वव्यापिब्रह्मप्रकाशम् अवलोकयतः । आनतः सन् नम्रः सन् अबोचत् च हे मातः ! मां क्षमस्व अद्य त्वया मम मोहः अज्ञानं विनाशितः अपहृतः ॥ ४२ ॥

अलं न विस्मर्तुमभावबाधितान् स्थितोऽपि भव्येष्ववनीन्द्रवेश्मसु ।
तदीहया भूपतयो विशेषतः प्रजासु शिक्षादिविकासमादधुः ॥ ४३ ॥

अलं नेति । स यतिर्भव्येषु महत्सु अवनीन्द्रवेश्मसु राजप्रासादेषु स्थितोऽप्युषितोऽपि अभावबाधितान् धनाद्यभावमात्रपीडितान् दरिद्रजनान् विस्मर्तुम् अलं समर्थः नासीत् । यत्र कुत्रापि स्थितः अनिशं दरिद्रदर्शनेन दुःखितः अभूत् । तस्य स्वामिनः इच्छया भूपतयः राजानः विशेषरूपेण प्रजासु स्वशासितमनुष्येषु शिक्षादिविकासं पठनपाठनादिप्रबन्धम् आदधुः कारयामासुः ॥ ४३ ॥

गुरोः सुसंदेशहरः परात्मनः स दीनसेवार्थममेरिकां गतः ।
तदीयदिव्योक्तिशुभप्रभावतः सहायमाप्नोत्यधुनापि भारतम् ॥ ४४ ॥

गुरोरिति । परात्मनः परमेशस्वरूपस्य गुरोः श्रीपरमहंसस्य धर्मसमन्वयात्मकं संदेशं हरति अन्यत्र प्रापयति एतादृशः भारतीयदीनजनसेवार्थम् अत्रत्यदरिद्रसेवाहेतोः यतिः अमेरिकां गतः । तत्र च तस्य दिव्यानाम् अलौकिकीनाम् उक्तीनां वचसां प्रभावतः भारतम् अधुनापि अद्यापि सहाय्यमाप्नोति अधिगच्छति । इदानींतनकालेऽपि अमेरिकासाहित्यादिषु वेदान्तप्रभावः दृग्गोचरः भवति ॥ ४४ ॥

स्वजीवनं तेन समर्पितं जगच्छिवोच्चवेद्यामनिशं ततोऽब्रवीत् ।
विपत्प्रतीकारकृतो वरं मृतिः स्तरं नृणामुच्चतरं विधास्यतः ॥ ४५ ॥

स्वजीवनमिति । तेन स्वामिना स्वकीयं जीवितं जगच्छिवस्य लोककल्याणस्य उच्चवेद्यां यज्ञस्थण्डिले समर्पितं निवेदितमासीत् । अतः सोऽब्रवीत् उक्तवान् विपत्प्रतीकारकृतः जगद्दुःखनिवारणं कुर्वतः तथा नृणां मानवानां जीवनस्तरम् अवस्थाम् उच्चतरं पूर्वतः समीचीनतरं विधास्यतः करिष्यतः मृतिरपि मृत्युरपि वरं भवेत् ॥ ४५ ॥

यतिः पुनः कम्बलदण्डमण्डितः क्वचिद्वनेऽसाधुभिरेत्य वेष्टितः ।
परं स लिम्डीनृपतिप्रयत्नतो न तस्करोपग्रहतामुपाययौ ॥ ४६ ॥

यतिः पुनरिति । स्वामी पुनः कम्बलदण्डमण्डितः दण्डकमण्डलवासनसहितः मार्गे भ्रमन् क्वचित् कुत्रचिद्वनेऽरण्ये असाधुभिः असज्जनैः एत्य आगत्य वेष्टितः परिवृतः परं 'लिम्डी'संस्थानाधिपतेः प्रयत्नतः स तस्कराणां तादृशासज्जनानाम् उपग्रहतां पीडनास्पदत्वं न उपाययौ न गतः ॥ ४६ ॥

खिलीकृतं यज्जगदीदृशैः खलैः परातिसन्धानपरैरधार्मिकैः ।
जनैस्तदेते स्वसमाजरक्षकैर्बहिष्क्रियेरन्नचिरात् स्थिरात्मभिः ॥ ४७ ॥

खिलीकृतमिति । यद्यस्माज्जगत् ईदृशैः खलैरसाधुभिः परातिसन्धानपरैः इतरजनवञ्चनासक्तैः अधार्मिकैः धूर्तैः खिलीकृतं पीडितमास्ते तत्तस्माद् एतेऽसाधवः स्वसमाजरक्षकैः सामाजिकरक्षातत्परैः स्थिरात्मभिः दृढचित्तैः अचिरात् सत्वरं बहिष्क्रियेरन् समाजात् बहिष्कर्तव्याः ॥ ४७ ॥

अथार्थनातो हरिराजमन्त्रिणः समेत्य 'जूनागढ'राजपत्तनम् ।
निरूपयन् वैदिकधर्मलक्षणं सतां सदस्तत्र चकार चित्रितम् ॥ ४८ ॥

अथार्थनात इति । अथ अनन्तरं 'हरिराज'मन्त्रिण एतन्नामकप्रधानामात्यस्य प्रार्थनाहेतोः 'जूनागढ'राजपत्तनं तन्नामकराज्याधिपतिराजधानीमेत्यागत्य वैदिकधर्मस्य लक्षणं निरूपयन् व्याख्याकुर्वन् सतां विदुषां सदः सभाम् आश्चर्ययुक्तं चित्रिताम् अकरोत् । धर्मस्य लक्षणं स्वामिनानुमतमित्थं भवितुमर्हति 'वेदप्रामाण्यमध्यात्मं वर्णाः कर्मगुणक्रमात् । अनेकं साधनं साम्यं बन्धुत्वं धर्मलक्षणम् ।' इति ॥ ४८ ॥

ततः प्रयातो 'गिरिनार'पर्वतं विभूषितं सत्तमधर्मलक्षणैः ।
अभूत् समं दुःखसुखान्वितान्तरः स्मरन्नरं भारतपूर्वगौरवम् ॥ ४९ ॥

ततः प्रयात इति । ततः स्वामी 'गिरिनार'पर्वतं नाम गिरिं प्रयातः । कीदृशं सत्तमधर्मलक्षणैः श्रेष्ठधार्मिकचिह्नैः जैनबौद्धमन्दिरादिलक्षणैः विभूषितम् अलंकृतम् तथा समं समकालमेव दुःखान्वितः सुखान्वितश्च अभूत् यतः अरं तत्क्षणमेव भारतस्य पूर्वं प्राचीन

गौरव महत्तां स्मरन्। प्राचीनकाले पुनाद्दशकलासौन्दर्यपूर्णानि स्थानानि आसन् अधुना तु कीदृशी भारतस्य हीनदीनावस्था जाता इति सुखदुःखयो कारणम् ॥ ४९ ॥

पुरे सुदाम्न किल पोरबन्दरे नृपातिथि शंकरमन्त्रिणा स्वयम्।
निलिख्यमाने विदुषा स विश्रुते श्रुतौ निबन्धे सहकारितां ययौ ॥५०॥

पुरे सुदाम्न इति। तत स्वामी सुदाम्न पुरे 'पोरबन्दर'नामके नगरे गत तत्र च नृपस्य अतिथिरूपेण स्थित। तत्र शङ्करनाम्ना मन्त्रिणा विदुषा निलिख्यमाने विश्रुते प्रसिद्धे श्रुतौ निबन्धे वेदविषयकग्रन्थे तस्मिन् ग्रन्थलेखने सहकारितां सहायकत्वेन कारित्व ययौ प्राप्त ॥ ५० ॥

यति सताऽवादि 'मतिस्तवेयती प्रतीयते नेह जनैः स्वनीवृति।
भवान् प्रतीचीं प्रतियाति चेद्ध्रुवत्यहो! परं सा त्वनुभावभाविता' ॥५१॥

यतिरिति। यति स्वामी सता विदुषा 'शंकर'पण्डितेन अवादि उक्त—स्वामिन्! तव मति बुद्धि इयती विशाला विद्यते यत् इह नीवृति जनै अस्मिन् भारतीये जनै सा न सम्यक्तया प्रतीयते ज्ञायते। चेद्भवान् यदि प्रतीचीं पश्चिमां दिश प्रति याति गच्छति सा प्रतीची दिक् भवत प्रभावेण परमतिशय प्रभाविता भविष्यति ॥ ५१ ॥

'मयापि विद्वन्! भुवमन्वभूयतार्णवोर्मिमालानिहितेक्षणेन यत्।
विधेयमास्ते जननीहितं स्वयं समेत्य पारेऽम्बुनिधि' ब्रवीति सः ॥ ५२ ॥

मयापीति। स स्वामी ब्रवीति वक्ते—हे विद्वन्! भवत्सूचनानुसार मयापि ध्रुवम् इयमेवान्वभूयत अनुभूतम् 'यत्' अर्णवोर्मिमालाविहितेक्षणेन समुद्रतरङ्गविनिहितदृष्टिना यदा पारेऽम्बुनिधि समुद्रस्य पार समेत्य गत्वा मया स्वय जननीहित निजमातृभूमिश्रेयाण कर्तव्य भविष्यति ॥ ५२ ॥

'अतीन्द्रियज्ञानसमुद्भवश्चिरात् स्थिरान्तरङ्गाऽखिलदर्शनप्रसूः।
इदं पदं न किल बन्धुभावदं स्थितं तदेतस्य हिते जगद्धितम्' ॥ ५३ ॥

अतीन्द्रियेत्यादि। इद न पदम् अस्मद्भारत चिरात् चिरकालत अतिन्द्रियज्ञानस्य इन्द्रियातीतज्ञानस्य समुद्भव उत्पत्तिस्थान स्थिरम् अचञ्चलम् अन्तरङ्ग मानस यस्य तदा अखिलाना दर्शनानां प्रसूः प्रभवस्थानम्। बन्धुभावद अपरानि विश्वासभ्रातृत्व शिक्षयद् विद्यते तथैव अस्य भारतस्य हिते कल्याणे एव सर्वस्य जगत कल्याण विद्यते' ॥ ५३ ॥

अभून्न भूमौ यवनीयसभ्यताप्रवृत्तिरासीन्न च रोमसंस्कृतेः।
असभ्यतामन्वभवन् परे यदा तदास्म नूनं शिखरे समुन्नते ॥ ५४ ॥

अभून्नेति। भूमौ भूतले यवनीयसभ्यता ग्रीकदेशीयाना सभ्यता न अभूत् तथैव रोमसंस्कृतेरपि यदा प्रवृत्तिर्वार्ता न आसीत्। यदा च परे भारतेतरजना असभ्यतामन्वभवन्च सभ्या आसन् तदा तस्मिन् समये वयम् समुन्नते शिखरे उच्चतमपदे स्थिता आस्म ॥ ५४ ॥

सुधामयज्ञानसुधाम भारतं रतं हितार्थं वसुधातलेऽखिले।
इत सदादर्शपरम्परा पुराऽनिशं भृशं सद्भिरितस्ततस्तता ॥ ५५ ॥

सुधामयेति। सुधामयम् अमृतमयं यज्ज्ञानम् तस्य सुष्ठु धाम निवासस्थानम् इदमस्माकं भारतम् अखिले वसुधातले भूमण्डले हितार्थं लोककल्याणार्थं रतमासक्तमासीत्। सतां सर्वोत्तमानाम् आदर्शानां विश्वबन्धुत्ववादीनां परम्परा पुरा काले अत्रत्यैः सद्भिः विद्वद्भिः अनिशं निरन्तरम् इतः अस्माद्भारतादेव इतस्ततः सर्वस्मिञ्जगति तता विस्तृता। भारतेनैव प्राचीनकाले सर्वस्मै जगते ज्ञानदानं कृतमासीदित्यर्थः ॥ ५५ ॥

अनादिकालान्मणयो यथाकरात् समानता-सख्य-दयादयो गुणाः।
इतो धरायां प्रसृता अनारतं मतं जगच्छान्तिकृते हि भारतम् ॥ ५६ ॥

अनादिकालादिति। अनादिकालादतिप्राचीनकालतः इतः भारतादेव धरायां पृथिव्याम् अनारतम् अनवरतं समानता साम्यम्, सख्यं मैत्री, दया करुणा इत्यादयः गुणाः सर्वत्र तथा प्रसृता यथा आकरात् खनितः मणयः रत्नानि उत्पद्यन्ते। अत्रार्थान्तरन्यासेनाह हि यस्मात् कारणात् भारतं जगच्छान्तिकृते विश्वस्मिन् शान्तिस्थापनार्थमेव मतं विचारितम् ॥ ५६ ॥

पदं निवासस्य निजात्मजापतेरितीव संश्लिष्टतमामुदन्वता।
स शारदापीठपरिष्कृतां ततो गतोऽसमां कृष्णपुरीं पुरातनीम् ॥ ५७ ॥

पदं निवासस्येति। निजस्य स्वस्य (समुद्रस्येत्यर्थः) आत्मजा लक्ष्मीः तस्य पत्युः श्रीकृष्णस्य इयं 'द्वारका' नगरी निवासस्थानम् इति हेतोरित्युत्प्रेक्षा उदन्वता समुद्रेण संश्लिष्टतमां प्रेमभरादालिङ्गितां 'शारदापीठ'परिष्कृतां शंकराचार्यपीठेन परिष्कृतां भूषितां पुरातनीम् अतिप्राचीनां असमाम् अद्वितीयां कृष्णपुरीं द्वारकां गतः प्रयातः ॥ ५७ ॥

भ्रमन् स तीर्थेष्ववलोकयन् पुनः स्वयं प्रसन्नः प्रकृतेः प्रसन्नताम्।
यथा 'बडोदा'नगरस्य खाण्डवापुरं ययौ मण्डलमण्डनायिताम् ॥ ५८ ॥

भ्रमन्निति। स स्वामी तीर्थेषु भ्रमन् मार्गस्थिततीर्थस्थानानां दर्शनं कुर्वन् स्वयं प्रसन्नः आनन्दितः प्रकृतेः प्रसन्नताम् सौन्दर्यं विलोकयन् ईक्षमाणः 'बडोदा'नगरस्य यथा मार्गेण मण्डलमण्डनायितां 'खाण्डवाजिला' इति ख्यातस्य मण्डलस्य मण्डनायिताम् अलंकारस्वरूपां पुरं नगरीं ययौ अयात् ॥ ५८ ॥

परार्थवादी हरिदासलक्षणः पुरि स्थितो यद्भवनेऽतिथीभवन्।
'बुधैः सभां धर्मसभां स भाविनीं' पुरो 'शिकागोः' श्रुतवाञ्छ्रुतज्ञतः ॥ ५९ ॥

परार्थवादीति। हरिदासलक्षणः हरिदासनामकः परार्थवादी 'वकील' इति प्रसिद्धः अस्यां पुरि कश्चित् स्थितः आसीत्। यद्भवने अतिथीभवन् अतिथिः भूत्वा निवसन् श्रुतज्ञतः श्रुतं जानन्ति जगद्वार्तां बोधन्ति ये तादृशेभ्यः केभ्यश्चित् 'शिकागो'नगरे अमेरिकायां कांचित् बुधैः पण्डितैः सभां कान्तियुक्तां प्रसिद्धां धर्मसभां भाविनीं भविष्यत्काले संपत्स्यमानां श्रुतवान् ॥ ५९ ॥

नवं नवं स्वात्मनुभवं विवर्धयन् समुद्धरल्लोकमगाधकर्दमात्।
विभावयन् भाविकृतेश्च पद्धतिं पुरः प्रयातः प्रति पुण्यपत्तनम् ॥ ६० ॥

नवं नवमिति। भ्रमणरतः नित्यं नवं नवं नूतनं स्वानुभवं विवर्धयन्, लोकं लोकानित्यर्थः। अगाधकर्दमात् अतिगभीरादज्ञानकर्दमात् समुद्धरन् उद्धारं कुर्वन्। भाविकृतेः

भाविकार्यस्य पद्धतिं परिपाटीं विभावयन् निश्चितां कुर्वन् पुरं अग्रे पुण्यपत्तन नाम नगरं प्रयातः प्राप्तः ॥ ६० ॥

विलोक्य मार्गेऽग्निरथोच्चवर्गगं समं भ्रमद्भिस्तिलकेन चैरपि ।
अवाच्यहो ! छद्मिभिरीदृशैः कथं जगद् वृथैवं यतिभिः प्रतार्यते ॥ ६१ ॥

विलोक्येति । मार्गे अग्निरथोच्चवर्गेण वाष्पयानस्य उच्चवर्गे प्रवासं कुर्वन्तं स्वामिनमव लोक्य तिलकेन बालगङ्गाधरतिलकेन सह भ्रमद्भिः प्रवासं कुर्वद्भिः कैश्चित् तिलकसहचरैः अवाचि उक्तम् अहो ! आश्चर्यम् ईदृशैः स्वामिसदृशैः छद्मिभिः दाम्भिकैः यतिभिः जगत् वृथैव प्रतार्यते वञ्च्यते । एतादृशाः छद्मवेषधारिणः सन्न्यासिनः केवलं वञ्चका धूर्ता इत्यर्थः ॥ ६१ ॥

यमी निशम्येदमजातसम्भ्रमः शनैर्जगादास्खलिताग्लभाषया ।
अखण्डितज्ञानप्रवाहहेतवो न शंकराद्या किमु ते यतीश्वराः ॥ ६२ ॥

यमीति । इदं तिलकसहचराणां वचनं निशम्य यमी अजातसम्भ्रमः अव्याकुलचेताः अस्खलिताङ्ग्लभाषया धारावाहिक-शुद्धाङ्ग्लगिरा जगाद अखण्डितज्ञानप्रवाहहेतवः यत्तो ज्ञानस्य प्रवाहः अद्यावध्यपि न त्रुटिमापन्नः एतादृशाः शङ्कराचार्यादयः यतयः नासन् किमु । तेऽपि सन्न्यासिनः धूर्ताः वञ्चकाः आसन् किमु ॥ ६२ ॥

सुपर्ववाग्दर्शन-सर्वधर्म वित् समाज विज्ञान मुख्यप्रसंगतः ।
न तत्क्षणं केवलमात्मनिन्दकान् स लोकमान्यानपि विस्मितान् व्यधात् ॥६३॥

सुपर्ववागिति । सुपर्ववाक् संस्कृतगीः, दर्शनं दर्शनशास्त्रं सर्वधर्मवित् सर्वेषां धर्माणां ज्ञानं, समाजशास्त्रं विज्ञानं भौतिकशास्त्रं मुख्यं प्रधानं येषाम् एतादृशभिन्नविषयप्रसङ्गे परस्परालापेन, स यतिः न केवलम् आत्मनिन्दकान् सन्न्यासिनः 'दाम्भिकाः' इति निन्दा-परान् तिलकेतरान् लोकमान्यानपि आश्चर्ययुक्तान् व्यधात् अकरोत् ॥ ६३ ॥

वसन्निवासे तिलकस्य कानिचिद् दिनानि दीनोद्धृतिलीनमानसः ।
स्वमातृभूप्रेमसमाजसेवनोपदेशतोऽभूदखिलादरस्य भूः ॥ ६४ ॥

वसन्निति । लोकमान्यतिलकस्य निवासे कानिचिद्दिनानि वसन् दीनानां दरिद्राणाम् उद्धृतौ उद्धारकर्मणि लीनमासक्तं मनः यस्य सः स्वामी स्वमातृभूप्रेम जन्मभूमिविषयकं प्रेम, समाजसेवा, इत्यादिमहत्त्वपूर्णविषयाणामुपदेशेन स तत्र पुण्यपत्तने अखिलानां नराणाम् आदरस्य सम्मानस्य भूः आस्पदम् अभूत् ॥ ६४ ॥

ततोऽनु'कोल्हापुर'वर्त्मना प्रयान् महा'महीशूर'पुरीं समागतः ।
अमात्यशेषाद्रिरिहास्य धीद्युते सचामराजेन्द्रनृपो विमोहितः ॥ ६५ ॥

ततोऽन्विति । अनन्तरं 'कोल्हापुर'वर्त्मना मार्गेण प्रयान् गच्छन् महतीं महीशूरपुरीं 'मैसूर'नगरं समागतः । इह च अस्य यतेः धीद्युतेः बुद्धिप्रकाशकारणात् नृपस्य सचिवः श्रीशेषाद्रिः नृपतिना चामराजेन्द्रेण सह उभावपीत्यर्थः विमोहितः विमुग्धो जातः ॥ ६५ ॥

रहस्यमद्वैतदृशो नृपातिथिः स्फुटीचकाराधिसभं विपश्चिताम् ।
यतिः प्रसद्येन क्षितिक्षितार्पिता पदं निरास्यद्धिनयेन सम्पदम् ॥ ६६ ॥

अत्र 'मैसूर'नगरे नृपातिथिः राजसदनप्राघुणिकः सन् विपश्चितां पण्डितानामधिसर्भ सभ्येसभम् अद्वैतदृशः अद्वैतवेदान्तस्य रहस्यं गूढतत्त्वं स्फुटीचकार स्पष्टमकरोत्। न केवलं स्वानुभव एव वेदान्तरहस्यमपि तु सर्वत्रैवेश्वरभावः विश्वबन्धुत्वभावनापि तादृशानुभवेन सह प्रधानं वेदान्तरहस्यमित्यादिकं स्फुटम् अकरोत्। यतिः प्रसन्नेन सन्तुष्टेन चितिचिता भूपतिना समर्पितां परां महतीं संपदं विनयेन सविनयं निरास्यत्। संन्यासिनाम् अस्माकं धनेन किं प्रयोजनम् इत्युक्त्वा त्यक्तवान्॥ ६६॥

समृद्धराज्ये परमास्तिकाः प्रजा दरिद्रता-कृच्छ्र-विमुक्त-मानसाः।
समानमानाः प्रसमीक्ष्य शिक्षिताः स्वमेव मन्ये नृप! सम्पदन्वितम्॥ ६७॥

समृद्धराज्य इति। यतिरुवाच राजन्! तव धनधान्यसमृद्धिपूर्णराज्ये आस्तिकाः प्रजाः ईश्वरास्तित्वे सश्रद्धा जना दरिद्रतया निर्धनत्वेन कृच्छ्रेण दुःखेन च विमुक्तानि मानसानि यादृशाः समानः वैषम्यरहितः मानः अधिकारः यासां, शिक्षिताश्च साक्षराश्च प्रसमीक्ष्य अवलोक्यैव अहमात्मानं सम्पदन्वितम् ऐश्वर्यसम्पन्नं मन्ये विचारयामि। भारतदारिद्र्यनाशेनैवाहमात्मानं धनिनं चिन्तयामीत्यर्थः॥ ६७॥

पुरा जिगीषुं किल दक्षिणां दिशं घटोद्भवं भूभृदभूत्रतानन:।
गते पुनः स्वामिनि तत्र सर्वतो नतोत्तमाङ्गं बत भूभृतां कुलम्॥ ६८॥

पुरेति। पुरा प्राचीनकाले दक्षिणां दिशं जिगीषुं जेतुमिच्छुं घटोद्भवमगस्त्यमुनिम् एक एव भूभृत् विन्ध्याचलः तं स्वामिनं प्रति नतं नम्रं मस्तकं यस्यैतादृशः अभूत्। परं स्वामिनि तत्र दक्षिणस्यां दिशि गते सति तत्र सर्वतः सर्वमपि भूभृतां नृपाणां कुलं समुदायः नतोत्तमाङ्गः अभूत् सर्वेऽपि राजानः तस्य पुरतः नतमस्तका जाता इत्यर्थः॥६८॥

त्रिवेन्द्रपल्लीं त्रिदिवेन्द्रपत्तनोपमां समासाद्य मतेर्विशालता।
प्रदर्शिता तेन महार्यसंस्कृतिश्रुतीतिहासाखिलशास्त्रसंविदा॥ ६९॥

त्रिवेन्द्रपल्लीमिति। त्रिदिवेन्द्रपत्तनोपमाम् इन्द्रपुरीसदृशीम् अमरावतीसदृशीं त्रिवेन्द्रपल्लीं तन्नामकनगरीं समासाद्य तेन स्वामिना महत्या आर्यसंस्कृत्याः श्रुतेः वेदस्य, इतिहासाद्यखिलशास्त्राणां च संविदा ज्ञानेन स्वमतेः बुद्धेर्विशालता अमर्यादत्वम् सर्वज्ञत्वमित्यर्थः, प्रदर्शिता प्रकटीकृता॥ ६९॥

ततः स 'रामेश्वर'वर्त्मना मुनिः कुमारिकामन्दिरमेत्य सन्नतः।
ब्रवीति मातस्तृषितो न मुक्तये त्वदेकसेवात्मकमस्ति मद्व्रतम्॥ ७०॥

ततः स इति। ततः अनन्तरं स मुनिः रामेश्वरवर्त्मना 'रामेश्वर'मार्गेण कुमारिकामन्दिरमेत्य सन्नतः कृतसाष्टाङ्गनमस्कारः अभूत्। देव्याः पुरतः ब्रवीति च हे मातः! अहं मुक्तये स्वमुक्तिलाभाय न तृषितः पिपासुः अस्मि अपि तु मम जीवनव्रतम् तवैकसेवामात्रं विद्यते केवलं मातृभूमिसेवायै स्पृहयामि न तु स्वस्य मुक्तये इति सशपथमुक्तवान्॥ ७०॥

प्रतीच्यलोकायतवादरावणापहारतो जर्जरितापि जन्मभूः।
स्वबोधरामामृतसेतुबन्धनाद् ध्रुवं विमुच्येत मतं यतेरभूत्॥ ७१॥

प्रतीच्येत्यादि। प्रतीच्यलोकायतवादरावणात्, प्रतीच्यां दिशि यः लोकायतवादः नास्तिकवादः 'यावज्जीवेत् सुखं जीवेदि'त्याकारकः चार्वाकमतवादः एव रावणः तेन

वृतात् अपहारतः अपहरणात् अजर्जरिता पीडितापि जन्मभूः मातृभूमिः भारतमित्यर्थः । स्वबोधः आत्मज्ञानमेव रामेण कृतम् अमृतमेतो बन्धनहेतोः ध्रुवं निश्चयेन विमुच्येव विमुक्ता भवत् इति यतेरभिमतमासीत् ॥ ७१ ॥

शिलां विशालां चलदर्णवोर्मिभिर्वृतां समारूढः पुरःस्थितामसौ ।
अदृक्षदस्राकुलितस्तदाननं मनः समाधाय च भावि भारतम् ॥ ७२ ॥

शिलामिति । तत्र चलदर्णवस्योर्मिभिः चलन्तीभिः वायुवशादस्थिराभिः ऊर्मिभिस्तरङ्गैः वृतां परिवृतां पुरःस्थितां विशालां शिलां समारूढः तदारूढः सः तस्मात् स्थानात् तदानीं दारिद्र्यपीडितं भारतम् अस्राकुलितः साश्रुनयनः सन् अदृक्षत् दृष्टवान् । भविष्यति काले मम जन्मभूः मानवजागरणवशात् अवश्यमेवोन्नत समृद्धिशालि भविष्यति इति विचारेण मनः मानसं समाधाय च भविष्यद्भारतमपि अदृक्षत् ॥ ७२ ॥

प्रसूं प्रसुप्तां प्रतिबोधयिष्यतः प्रति स्वदेशं विचिकृक्षतो जगत् ।
नवं च वेदान्तपथं दिदिक्षतो दिशो प्रतीचीं मुमुदेऽस्य मानसम् ॥ ७३ ॥

प्रसूमिति । प्रसुप्तां निद्रामापन्नां प्रसूं भारतमातरं प्रतिबोधयिष्यतः जागरयिष्यतः जगत् विश्वं स्वदेशं प्रति विचिकृक्षतः आक्रष्टुमिच्छतः तथा प्रतीचीं दिशं पश्चिमामाशां प्रति नवं नूतनं वेदान्तपथं श्रुतिविहितसनातनधर्मापरपर्यायं वेदान्तमार्गं दिदिक्षतः उपदेक्ष्यतः अस्य मानसं मुमुदे सन्तुष्टमभूत् । प्रतिबोधयिष्यतः, विचिकृक्षतः दिदिक्षतः इत्यत्र णिजन्ताद्बुधधातोः भविष्यति, कृषधातोः दिशश्च सन्नन्ताभ्यां शतृप्रत्ययाः ॥ ७३ ॥

समुद्रयात्राकरणादमेरिकां वियासुमेनं नवधर्मशिक्षकम् ।
निशम्य पाण्डेचरिपण्डितब्रुवो रुषारुणः कश्चन वाचमुक्तवान् ॥ ७४ ॥

समुद्रयात्रेति । नवधर्मशिक्षकम् गुरूपदेशतः आगतिः वेदान्तधर्मप्रचारं कुर्वन्तं समुद्रयात्राकरणेन अनेकसमुद्रोल्लङ्घनपूर्वकम् अमेरिकां प्रयातुमिच्छुमेनं निशम्य कश्चन कोऽपि पाण्डेचरिनगरस्थः आत्मानं पण्डितं मन्यमानः रुषा क्रोधेन अरुणः रक्तवदनः सन् 'समुद्रयात्रा हिन्दुधर्मीयाणां कृते शास्त्रनिषिद्धा' इति चिन्तयन्नुवाच ॥ ७४ ॥

विवेकिनो म्लेच्छनरोऽविवेकिनोऽधिगन्तुमर्हन्ति न धर्मशासनम् ।
धिगस्तु शास्त्रेषु निषिद्धमम्बुधेरतिक्रमं क्वापि विधातुमिच्छतः ॥ ७५ ॥

विवेकिन् इति । विवेकिन् सद्विवेकात् सदसद्विचारशक्तियुक्तात् विवेकानन्दसदशात् अविवेकिनः म्लेच्छनराः सारासारविचारशून्याः पाश्चात्त्या म्लेच्छाः धर्मशासनं धर्मोपदेशमधिगन्तुं नार्हन्ति कदापि योग्या न भवन्ति । अतः हिन्दुभिः समुद्रयात्रापि न कर्तव्या शास्त्रेषु निषिद्धं प्रतिषिद्धम् अम्बुधेः समुद्रस्य अतिक्रमम् उल्लङ्घनं क्वापि कुत्रापि विधातुमिच्छतः कर्तुमभिलषतः त्वाम् धिक् ॥ ७५ ॥

अधोगतिर्धर्ममहोदधेरहो ! समग्रमार्यं यत कुर्वतो जगत् ।
परान् प्रति 'म्लेच्छ' इतीरणादभूद्भुवो ध्रुवं नोऽवनतेरुपक्रमः ॥ ७६ ॥

अधोगतिरिति । अहो ! इत्याश्चर्यम् । आर्यधर्म एव महानुदधिः समुद्रः तस्य महासागरस्य इयमधोगतिः पतनमेव यत कीदृशस्य महोदधेः ? समग्रं सम्पूर्णं जगत् आर्यं कुर्वतः

विदधतः 'कुर्वन्तो विश्वमार्यम्' इति आर्यधर्मस्य महती प्रतिज्ञा तां परित्यज्य स महान् समुद्रः संकुचितदृष्टिर्जात इत्यहो आश्चर्यम्। परान् प्रति आर्यधर्मेतरान् प्रति 'म्लेच्छ'शब्दस्य प्रयोगेणैव नः अस्माकं भुवः भारतस्य अवनतेः अधोगतेरुपक्रमः अभूत् ध्रुवम् ॥ ७६ ॥

स चेन्नपुरमाययौ यतिरतीव तीव्रप्रभो
नमस्यचरणो नृभिर्विविधशिष्यशिक्षाप्रदैः ।
निशम्य सुधियां सभां जिगमिषुं 'शिकागो'पुरे
समग्रगमनव्ययः सपदि सञ्चितः सज्जनैः ॥ ७७ ॥

स चेन्नपुरमिति । स यतिः स्वामी विवेकानन्दः अतीव तीव्रा निशिता प्रभा बुद्धिविकासकान्तिर्यस्यैतादृशः चेन्नपुरं 'मद्रास'नगरमाययौ आगतः तत्र च विविधैः शिष्यैः विश्वविद्यालयीययुवकविद्यार्थिभिः तथा शिक्षाप्रदैः आचार्यैः प्राध्यापकैः नमस्ये पूजनीये चरणे यस्य तादृशो जातः। अमेरिकायां 'शिकागो' पुरे भाविनीं सुधियां धार्मिकविदुषां सभां धर्मपरिषदं जिगमिषुं गन्तुमिच्छुं यतिं निशम्य तैः 'मद्रास'नगरस्थितैः तस्य स्वामिनः समग्रगमनव्ययः समुद्रमुल्लंघ्य गमनार्थमावश्यकं सम्पूर्णं धनं सपदि सञ्चितः संकलीकृतः अभूत् ॥ ७७ ॥

आदेशं प्रतिपालयन् स्वगुरुतो नोत्साहवान् तत्स्वयं
स्वीकर्तुं, समुपादिशद्वितरितुं दीनेषु सर्वं धनम् ।
ध्यानेऽनेन ततो गुरुर्जलनिधिं दृष्टोऽग्रतः सारय-
न्नायाहीति वदंश्च येन मुदितेनाकारि गन्तुं मतिः ॥ ७८ ॥

आदेशमिति । स्वगुरुतः श्रीरामकृष्णपरमहंसात् आदेशं समुद्रोल्लङ्घनस्य आज्ञां प्रतिपालयन् प्रतीक्षमाणः स स्वामी तत् धनं मद्रासनगरस्थैः सज्जनैः सञ्चितं स्वीकर्तुमात्मसात्कर्तुं उत्साहवान् इच्छुकः न अभूत् । तत्सर्वं धनं दरिद्रजनेषु वितरितुं तेभ्यो दातुमित्यर्थः। तान् धनसंग्रहकारिणः सज्जनान् समुपादिशत्। अनन्तरं ध्याने आत्मचिन्तने जलनिधिं समुद्रम् अग्रतः पुरतः सारयन् स्वहस्ताभ्यां पुरश्चालयन् गुरुः श्रीरामकृष्णदेवः अवलोकितः किं ब्रुवन् वत्स ! आयाहि मामनुसर इति वदन् येन गुरुवचनानुसारं मुदितेन सता तेन गन्तुं मतिः अकारि गमनविचारः कृतः ॥ ७८ ॥

खिद्यन् खिन्नजनैर्विशालहृदयो बन्धून् समाश्वासयन्
कुर्वन् सात्मज'खेतडी'नरपतिस्वान्तं च शान्त्यास्पदम् ।
वाणी त्वद्रसनासनास्त्विति वरं मातुः समासाद्य-
न्नाचार्यो नवविश्वधर्मवचने मुम्बापुरीमागतः ॥७९॥

खिद्यन्निति । खिन्नजनैः सह दुःखितमनुष्यैः सार्धम् एतादृशमनुष्यानवलोक्य स्वयमेव दुःखपूर्णान्तःकरणो भवन् कृतः विशालहृदयः उदारान्तःकरणः 'परदुःखेन दुःखितः' इति न्यायेनेत्यर्थः; बन्धून् स्वगुरुबन्धून् तद्वियोगचिन्तितान् समाश्वासयन् शान्तचित्तान् कुर्वन्; सात्मज'खेतडी'नरपतिस्वान्तं तत्रत्यससुतमहाराजमानसं शान्त्यास्पदं शान्तिसुखपरिपूर्णं कुर्वन्; 'पुत्र वाणी सरस्वती तव रसना जिह्वा एव आसनं उपवेशनस्थानं यस्याः सा भवतु' इति मातुः शारदाजनन्या वरम् आशिषं समासादयन् प्राप्नुवन् अयं

नवविश्वधर्मप्रचारे आचार्यस्वरूप विवेकानन्द स्वामी मुम्बापुरी मोहमयीनगरीमाययौ अमेरिकां प्रति गन्तुमिच्छन् ॥ ७९ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
याणाम्भोधिमितान्दशिक्षणविधिव्यग्रेण साग्रे महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽष्टमोऽन्तं गत ॥ ८० ॥

इति त्र्यम्बकसूरिविरचिते श्रीविवेकानन्दचरिते महाकाव्ये
भारतभ्रमणं नामाष्टम सर्ग ॥ ८ ॥

लोकमिति। 'लोकमि त्यादि 'प्रधानाश्रये'इत्यन्त पूर्ववत। याणाम्भोधिमितान्दशिक्षणविधिव्यग्रेण पञ्चचत्वारिंशद्वर्षपर्यन्तं शिक्षाकार्यव्यापृतेन त्र्यम्बकसूरिणा विरचिते विवेकचरिते नाम महाकाव्येऽष्टम सर्गः समाप्त ॥ ८ ॥

इति विवेकदीपाभिधायां 'विवेकानन्दचरित'महाकाव्यटीकायां
भारतभ्रमण नामाष्टम सर्ग ॥ ८ ॥



## अथ नवमः सर्गः

चलत्युदूढाक्षयविश्वधर्मगुरौ तटान्मन्दगतेन पोते ।
जनास्तमूचुर्विजयान्वितः सन्नायाहि पन्थाः कुशलस्तवास्तु ॥ १ ॥

चलतीति । उदूढः स्वपृष्ठोपरि धृतः अक्षयविश्वधर्मस्य सनातनवैदिकधर्ममार्गस्य गुरुः आचार्यः येन एतादृशे पोते समुद्रयाने तटात् 'मुम्बापुरी'समुद्रतटात् मन्दगतेन शनैः शनैः चलति सति प्रस्थिते सति तत्रत्यजनाः तं स्वामिनमूचुरुक्तवन्तः-किमुक्तवन्तः 'स्वामिन् ! पाश्चात्यदेशं गत्वा विजयान्वितः सन् सफलपरिश्रमः सन् आयाहि आगच्छ । तव पन्थाः मार्गः कुशलः अस्तु' इत्युक्तवन्तः । अस्मिन्सर्गे इन्द्रवज्रोपेन्द्रवज्रालक्षणम् उपजातिवृत्तम् ॥ १ ॥

मुनिस्तदा भारतभूप्रसक्तेक्षणः क्षणं वक्षसि दत्तहस्तः ।
अवोचदुच्चैरयि मातृभूमे ! दास्यं प्रपन्नासि चिरं परेषाम् ॥ २ ॥

मुनिस्तदेति । मुनिः स्वामी तदा भारतभूप्रसक्तेक्षणः समुद्रयानस्य पृष्ठतः मातृभूमिप्रसक्तनयनः क्षणं क्षणकालं वक्षसि निजोरसि दत्तहस्तः विनिहितकरः उच्चैः तारस्वरेण अवोचत् अब्रवीत्—अयि मातृभूमे ! भारतमातः, त्वं चिरं चिरकालपर्यन्तं परेषामन्येषां दास्यं निगडबन्धनं गतासि प्रपन्नासि ॥ २ ॥

मातः ! सुपुत्रापहृतार्गलाया अह्नाय नश्येत्तव निघ्नतेयम् ।
ज्ञानप्रभोद्भासि जगच्चिकीर्षोः सत्ता न ते केवलजीवनार्थम् ॥ ३ ॥

मातरिति । हे मातः ! तव सुपुत्रैः योग्यसन्तानैः अपहृता छिन्ना अर्गला निगडं यस्याः एतादृश्याः तव इयं निघ्नता पराधीनता अह्नाय सत्वरं नश्येत् विनष्टा भवेदित्याशासे । ज्ञानस्य प्रभया ज्ञानदीप्त्या उद्भासते प्रकाशते एतादृशं जगत् विश्वं कर्तुमिच्छोः तव सत्ता अस्तित्वं केवलं जीवनार्थं किमपि सत्कार्यं विना आलस्यपूर्णं जीवनं यापयितुं न अपि तु संसारं ज्ञानप्रभालोकितं कर्तुं विद्यते ॥ ३ ॥

कल्लोलमालाकुलितं स विद्यारत्नानि सिन्धुं नु पुनर्विमथ्य ।
विभक्तुमेतानि जगत्यशेषं प्रचक्रमे शैलबृहत्प्लवस्थः ॥ ४ ॥

कल्लोलमालेति । कल्लोलानां बृहत्तरङ्गाणां मालाभिः ततिभिः आकुलितं क्षुब्धं सिन्धुं समुद्रं पुनः द्वितीयवारं विद्याः चतुर्दशविद्या एव रत्नानि विमथ्य मथित्वा यथा पुरा देवासुरैः समुद्रमथनाच्चतुर्दशरत्नानि लक्ष्मीकौस्तुभादीनि प्राप्तानि तथैवायं नूतनधर्माचार्योऽपि 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश' इति विद्यारूपचतुर्दशरत्नानि निर्मथ्य अशेषं सर्वाणि अस्मिन् जगति विभक्तुं विभज्य दातुं शैलबृहत्प्लवस्थः पर्वत इवोन्नतनौकारूढः सन् प्रचक्रमे आरेभे । अत्र शैलबृहत्प्लवस्थः इत्यनेन समुद्रमन्थनसाधनभूतस्य पर्वतस्यापि ध्वनिः । उत्प्रेक्षालङ्कारः ॥ ४ ॥

अथागतोऽवाच्यदिशा स लङ्कामङ्कस्थकन्यामिव भारतस्य ।
विभीषणस्याभ्ययुगादिहार्यप्रभावमालोक्य भृशं प्रसन्नः ॥ ५ ॥

अथागत इति । अथ अनन्तरं स अवाच्यदिशा दक्षिणमार्गेण भारतस्य अङ्कस्यामुत्सङ्गतां धन्यामिव स्थितां लङ्कामागतः सन् विभीषणराज्ययुगादारभ्य रावणभ्रातुर्विभीषणस्य राज्याभिषेकसमयादारभ्य इह लङ्काद्वीपे आर्यप्रभावमाहात्म्यं श्रुतवान् यधिकं प्रसन्न । अभूदिति शेषः ॥ ५ ॥

सिङ्गापुरादीनि च पूर्वदेशपुराणि बुद्धार्चनतत्पराणि ।
तुतोष पश्यन् सह भारतेन विचिन्त्य तद्धर्मसहोदरत्वम् ॥ ६ ॥

सिङ्गापुरादीनीति । सिंगापुरम् आदि प्रथमं येषां तानि पूर्वदेशपुराणि प्राच्यदेशनगराणि बुद्धार्चनतत्पराणि बौद्धधर्ममनानुवर्तीनि पश्यन् तथा तेषां नगराणां देशानां च भारतेन सह धर्मसहोदरत्वं धर्मबान्धवत्वं च विचिन्त्य स तुतोष ॥ ६ ॥

धर्मं पुनर्भारतदेशतो यो बहिष्कृतः पूर्वमभूदनीशः ।
सोऽद्यापि पूर्वां दिशमाश्रितोऽसौ मन्तुर्मतस्यास्त्युत भारतस्य ? ॥ ७ ॥

पूर्वं पुराकाले च बौद्धधर्मं भारतदेशात् भारतवर्षादनीशः असमर्थः दुर्बल इति मत्वा सन् बहिष्कृतः अभूत् निष्कासितो जातः । पश्चान्निष्कासनानन्तरं च स धर्मः पूर्वां दिशमाश्रितः, इदमस्य धर्मस्य भारतान्निष्कासनं पूर्वीयदेशाश्रयणं च किमु मतस्य बौद्धधर्मस्य मन्तुरपराधः अथवा भारतस्यायमपराधः इति प्रश्नः ॥ ७ ॥

तस्योत्तरमाह—

न केवलं शाक्यमुनावतीव श्रद्धालवो भारतवासिनः स्म. ।
इशावतारं नवमं नवं तं मन्यामहे त्यागविरागमूर्तिम् ॥ ८ ।

न केवलमिति । भारतवासिनः भारतीयजना वयं न केवलं शाक्यमुनौ गौतमबुद्धे अतीव श्रद्धालवः समभवन्त करुणाः स्म । अपि तु वयं तं बौद्धमतस्य मूर्धन्यमीशावतारमपि त्यागः राज्यादित्यागः विरागो वैराग्यं च तयोरुभयोः मूर्तिं नवमं नवम् इशावतारमपि मन्यामहे । अतः नायं भारतस्यापराधः यत्स धर्मः अस्माद्देशाद्बहिर्निष्कासितः ॥ ८ ॥

तर्हि कस्यायमपराध इति प्रश्ने आह—

तथागतप्रत्तयथार्थदीक्षादीक्षाविपर्याससरैस्तु शिष्यैः ।
आस्तिक्यवाग्भित्तिविनाशहेतुर्मूले कुठारो विहितोऽहितैस्तैः ॥ ९ ॥

तथागतेत्यादि । तथागतेन बुद्धेन प्रत्ता वितीर्णा या यथार्था शिक्षाया योग्योपदेशरूपिणी दीक्षा तस्या विपर्यासे एव परं मुख्यं कार्यं यथा तैः बुद्धानुयायिभिः शिष्यैः अहितैः सद्भिः बुद्धस्योपदेशविरोधिभिः मूले बौद्धधर्मस्य आधारे एव मूले कुठारः कीदृशः आस्तिक्यधी आस्तिक्यबुद्धिः ईश्वरः अस्ति आत्मा अस्ति इत्याकारिका श्रद्धाबुद्धिः तस्याः विनाशहेतुः नाशकारणम्, अनीश्वरवादः अनात्मवादश्च बौद्धधर्मस्य भारताद्बहिर्गमनस्य कारणं न तु भारतीयानां बुद्धोपरि श्रद्धाभाव इत्यर्थः ॥ ९ ॥

तथापि जम्बूस्थलवृत्तिवर्त्मन्याध्यात्मिकालोकविशिष्टमैक्यम् ।
विलोक्य को नाम समग्रविश्वश्रेयोविधौ क्वापि हतोत्सवः स्यात् ॥ १० ॥

तथापीति । तथापि पूर्वीयदेशेषु बौद्धधर्मप्रचारेऽपि जम्बूस्थलस्य जम्बुद्वीपस्य वृत्तिवर्त्मनि जीवनयापनविषये आध्यात्मिकालोकेन विशिष्टम् अध्यात्मज्ञानप्रकाशयुक्तम् ऐक्यमे

कर्ता विलोक्य समग्रविश्वस्य सम्पूर्णसंसारस्य श्रेयोविधौ कल्याणविषये कापि कुत्रापि को नाम हतोत्सवः स्यात्। धर्ममार्गभेदेऽपि एशियाखण्डे आन्तरिकैकतामवलोक्य तन्मानसं समाहितमभूत्॥ १०॥

जापानदेशेऽभ्युदयस्य धीमान् सीमानमालोक्यतरामियेष।
समुन्नतिं हिन्दभुवोऽपि, सार्धं निःश्रेयसेनाभ्युदयो हि धर्मः॥ ११॥

जापानदेश इति। धीमान् स्वामी जापानदेशे 'टोकियो'राजधानीके 'नीयोना'परनाम्नि नीवृति अभ्युदयस्य सीमानमालोक्यतरां तद्देशीयात्यधिकसमृद्धिं विलोक्य हिन्दभुवोऽपि भारतस्यापि समृद्धिमभ्युन्नतिमियेष अभिलषितवान्। अत्रार्थान्तरन्यासेनाह-हि यस्मात् कारणात् निःश्रेयसेन सह आध्यात्मिकोन्नत्या सार्धम् अभ्युदयः भौतिकसमुन्नतिरेव यथार्थं धर्मलक्षणम्। उक्तं च—'अभ्युदयनिःश्रेयसात्मको धर्मः' इति॥ ११॥

विज्ञानशिल्पोद्यमसंख्यशिक्षाक्षेत्रेषु जापानजनैः समृद्धिम्।
अल्पावधावप्यचलामनल्पां प्राप्याभिभूतः प्रतिवेशिचीनः॥ १२॥

विज्ञानशिल्पेत्यादि। विज्ञानं भौतिकविज्ञानम्, शिल्पं वास्तुकलादिकम्, उद्यमः लोहवस्तुयानादिनिर्माणम्, संख्यं युद्धविद्या, शिक्षाध्ययनम्, इत्यादिक्षेत्रेषु जापानजनैः जापानदेशीयैः अल्पावधावपि अत्यल्पावसरेऽपि अनल्पाम् अत्यधिकाम् अचलां चिरस्थायिनीं समृद्धिम् अभ्युन्नतिं प्राप्य लब्ध्वा प्रतिवेशि'चीनः' समीपस्थचीनदेशोऽपि अभिभूतः पराभूतः॥ १२॥

चीनोऽपि पीनो बलतः समृद्धेर्भावी जगत्याशुतरं धुरीणः।
येनान्तराशान्तिमहान्धकारहानात् प्रकाशोऽतितरामिह स्यात्॥ १३॥

चीनोऽपीति। चीनोऽपि चीनदेशोऽपि बलतः मनुष्यबलतः समृद्धेः भौतिकसमृद्धेश्च जगति विश्वस्मिन् आशुतरं सत्वरं पीनः महत्त्वयुक्तः धुरीणः राष्ट्रेषु अग्रणीश्च स्यात् भावी भविता। येन समृद्धिकारणेन आन्तरिकी या अशान्तिः सा एव महान् अन्धकारः तस्य हानादिह अतितराम् अत्यधिकः प्रकाशः ज्ञानप्रकाशः स्यात्॥ १३॥

सन्दिष्टमेतेन च भारतीयजनान् समुद्दिश्य मनाग्युवानः।
गिरं सखायः शृणुतास्मदीयां प्रयात जापानभुवं नवीनाम्॥ १४॥

सन्दिष्टमिति। एतेन स्वामिना भारतीयजनान् समुद्दिश्य स्वयमुक्त्वा भारतवासिनः सम्बोध्य सन्दिष्टम्—'हे युवानः सखायः! अस्मदीयां गिरं मदीयमुपदेशवाक्यं मनाक् किञ्चिच्छृणुत 'यूयं नवीनां नूतनां समृद्धिशालिनीं' जापानभुवं प्रयात गच्छत। तस्माद्देशात् स्वाभ्युदयस्य शिक्षां ग्रहीतुमित्यर्थः॥ १४॥

आदर्शभूता खलु भारतीभूरस्माकमेतैर्न विभाव्यते किम्।
वयं तु वैधेयतयाऽलसानामग्रेसरा हन्त विधेर्विधेयाः॥ १५॥

आदर्शभूता इति। अस्माकं मातृभूमिः भारतीभूः एतैः जापानदेशीयैः अन्यैश्च पूर्वीयदेशैः आदर्शभूता सर्वतः अनुकरणीया इति न विभाव्यते किम् न ज्ञायते किम्। अपि तु ज्ञायत एव। 'अस्माभिः भारतं निरन्तरमनुकरणीयमिति' ते नित्यमेव वदन्ति। परं वयं

किं कुर्मः ? वैधेयतया मूर्खतया अलसानां जगति आलस्ययुक्तानामग्रेसराः नेतृत्वशीला भवन्त विधे विधेया दैवाधीना दैववादिन जाता न तु उद्योगवादिन ॥ १५ ॥

परस्परं हा कलहायमानैर्वृथायुष किं क्रियते क्षयोऽयम् ।
विशीर्णजीर्णा जननी त्वधीरा वीरायितं क्षिप्रमपेक्षते व॰ ॥ १६ ॥

परस्परमिति । हा ! इति खेदे परस्परम् अन्योऽन्य कलहायमानै कलहं कुर्वाणै अयम् वर्तमानकालीन आयुष जीवनस्य क्षय नाश किमर्थं क्रियते । यूय न जानीथ किं यत् अस्माकं विशीर्णा खण्डश कृता जीर्णा वार्धक्यमिवाधिगता जननी भारतमाता अधीरा सती चिरकालपर्यन्त मया पारतन्त्र्यमलावद्धया भवितव्यमिति चिन्तयन्ती भवतां सुपुत्राणां क्षिप्रमतिशीघ्र वीरायित पराक्रमम् अपेक्षते प्रतिपालयति ॥ १६ ॥

मा या कदाप्यात्ममुवं विहाय पारं परं वारिनिधेर्यतो यत् ।
तत् केवलं बालिशभाषितेन समं निरर्थं परिहासयोग्यम् ॥ १७ ॥

मा या इति । आत्मभुव स्वजन्मभूमिं विहाय वारिनिधे समुद्रस्य परं पारं कदापि मा या 'न माङ्योगे' इति अडागमाभाव ऐोदयंद्य, न गच्छ इति यदुच्यते कश्चिच्छास्त्र- ग्रन्थे तत्केवल बालिशभाषितेन सम मूर्खवच सदृश निरर्थ प्रयोजनशून्य परिहासयोग्यम् च हास्यास्पद च ॥ १७ ॥

आर्या ! समुत्थाय भवामधीध्वं विद्यां परा प्रत्नतया वदाना ।
आदानदानाभिधवर्त्मनीत्थं परस्परानन्तहिताय नित्यम् ॥ १८ ॥

आर्या इति । हे आर्या भारतवर्षीया यूय प्रत्नतरामतिप्राचीना परां विद्याम् अध्या- त्मविद्या जगति सर्वदेशेभ्य ददाना तेभ्य नवीनाम् अपरां विज्ञानविद्याम् अधीध्वम् शिक्षध्वम् । इत्थम् अनेन प्रकारेण आदानदानाभिधवर्त्मनि ग्रहणप्रदानात्मक मार्गद्वय परस्परानन्तहिताय परस्परात्यन्तिककल्याणे निदान मूलकारण भवेत ॥ १८ ॥

निरस्य नीचैस्त्वरितं स्व'कूपमण्डूक'-वृत्तिं भवतात्युदारा ।
कल्याणकामा यदि मातृभूमे स्निग्धास्तथा मानवजातिवृन्दे ॥ १९ ॥

निरस्येति । त्वरित सत्वरं नीचै निन्दनीयस्वरूपां स्वस्यात्मन कूपमण्डूकवृत्ति निरस्य परित्यज्य अति उदारा भवत विशालहृदया भवत । यदि यूय सर्वे यथार्थत मातृभूमे कल्याणकामा समृद्धिकाङ्क्षिण तथैव यदि यूय मानवजातिवृन्दे स्निग्धा प्रेमपूर्णहृदया स्थ तर्हि युष्माभि उदारहृदयैर्भवितव्यम् ॥ १९ ॥

सहस्रश सोद्यमधीरधीरसुतानियं भारतजन्मभूमि ।
प्रतीक्षते स्वात्मबलि विधित्सून् समुज्झितानन्तसुषुप्तिदोषम् ॥ २० ॥

सहस्रश इति । इयमस्माकं भारतमातृभूमि प्रियजन्मभू सहस्रश सख्यातिगान् सोद्यमान् उद्योगिन धीरान् धैर्यशालिन वीरान् पराक्रमिणश्च सुतान सुपुत्रान् स्वात्मबलिं विधित्सून् आत्मबलिदानाभिलाषुकान् समुज्झित परित्यक्त अनन्त चिरस्थायी सुषुप्तिदोष निद्रादुर्गुण यस्मिन्कर्मणीति क्रियाविशेषणम् । एतादृशान् पुत्रानपेक्षते ॥ २० ॥

शिक्षाप्रसारेण निजार्थशून्यान् नरान् विधातुं पशुतुल्यबन्धून् ।
दीनेषु नित्यं समवेदनाढ्या॰ क्षुत्पीडिता भोजयितुं यतध्वम् ॥ २१ ॥

शिक्षाप्रसारेणेति। यूयं सर्वे निजार्थशून्याः सन्तः परित्यक्तस्वार्थविचाराः निजान् दरिद्रदलितदीनान् पशुतुल्यबान्धवान् नरान् मनुष्यान् विधातुं यतध्वम्। तथैव नित्यं दीनेषु समवेदना एव अङ्कः परदुःखदुःखितत्वमेव लक्षणं येषामेतादृशाः सन्तः क्षुधया बुभुक्षया पीडितान् दरिद्रान् भोजयितुं यतध्वम् सप्रयत्नाः भवत ॥ २१ ॥

देशैककल्याणपरः स्वबन्धून् जापानभूमेरिति संदिदेश।
प्रशान्तरत्नाकरमुत्तरिष्यञ्छान्तः स वाष्पप्लवमारुरोह ॥ २२ ॥

देशैककल्याणेति। देशैककल्याणपरः स्वमातृभूमिकल्याणमेव परः उत्तरः विचारः यस्यैतादृशः स्वामी जापानभुवः जापानदेशात् स्वबन्धून् इत्थम् उपरिनिर्दिष्टवचोभिः संदिदेश संदिष्टवान्। अनन्तरं शान्तः सन् प्रशान्तरत्नाकरमुत्तरिष्यन् प्रशान्तमहासागर-मुत्तितीर्षुः पुनः वाष्पप्लवं समुद्रयानमारुरोह ॥ २२ ॥

असंस्तुतो यानजनस्य दीर्घमभावतो वस्त्रपरिच्छदानाम्।
शीतेन मार्गे परिपीडितोऽसौ चिराच्छिकागोनगरीमयासीत् ॥ २३ ॥

असंस्तुत इति। दीर्घं दीर्घकालपर्यन्तं यानजनस्य यानस्थितयात्रिकैरधिकारिभिश्च सह असंस्तुतः अपरिचितः, वस्त्रपरिच्छदानां पर्याप्तवस्त्रप्रावरणादीनामभावतश्च तथा मार्गे शीतेन परिपीडितश्च चिरात् दीर्घकालानन्तरम् अमेरिकास्थ'शिकागो'नगरीम् अयासीत् प्राप्तः। याधातोर्लुङि रूपम् ॥ २३ ॥

यत्रोच्चहर्म्याग्रतलोपविष्टाः शिष्टाः स्थलीं यान्ति परामभीष्टाम्।
अधोऽवरोहं परिहर्तुकामा व्योमाध्वनारुह्य विमानमुच्चैः ॥ २४ ॥

यत्रोच्चहर्म्येत्यादि। यत्र 'शिकागो'नगरे उच्चहर्म्याग्रतलोपविष्टाः अत्युन्नतप्रासादाग्र-सुपरितले स्थिताः शिष्टजनाः तत्रत्यशिक्षिता नराः पराम् अन्याम् अभीष्टां स्थलीम् इष्ट-स्थानं अधः प्रासादस्य उपरितलादधोऽवरोहं परिहर्तुकामाः उच्चैः विमानमधिरुह्य गृहोप-रितलादेव विमानमारुह्य व्योमाध्वना आकाशमार्गेण अभीष्टस्थलं यान्ति गच्छन्ति ॥ २४ ॥

सौदामिनीनामनिशं निशायामिह प्रकाशाद्दिवसोऽवशिष्टः।
अमुं दिवाभीतगणो विहायोद्देशं विवेशाथ सुदूरदेशम् ॥ २५ ॥

सौदामिनीनामिति। इह 'शिकागो'नगरे निशायां रात्रौ अनिशं निरन्तरं सौदामिनीनां विद्युतां प्रकाशात् दीप्तेः केवलं दिवसः दिनमेव अवशिष्टः इयान् तत्र विद्युत्प्रकाशः यत् सर्वदा दिनमेव प्रतिभाति। अत एव अमुम् उद्देशं दिवाभीतगणः उलूकानां समूहः मूर्खसमूहः ('उल्लू'गणः) परित्यज्य सुदूरदेशं विवेश ॥ २५ ॥

जनान् कुबेरोपमवित्तवित्तान् यस्मिन् समुद्योगितमान्विलोक्य।
इतः कुहाप्यात्मनिगूहनार्थं निराश्रया निर्धनता प्रयाता ॥ २६ ॥

जनानिति। यस्मिन् नगरे कुबेरोपमाः कुबेरसदृशाश्च ते वित्तेन धनेन वित्ताः विश्रुता-स्तान् 'वित्तविज्ञातविश्रुताः' इत्यमरः, समुद्योगितमान् अतिशयेन उद्यमिनः विलोक्य अव-लोक्य निर्धनता दारिद्र्यं निराश्रया अनालम्बा सती; सर्वेऽप्यत्र धनिनः आसन् अतः दारिद्र्यं तत्स्थानं परित्यज्य अन्यत्र गतमिवेत्युत्प्रेक्षा। आत्मनिगूहनार्थं स्वापह्नुतये कुहापि कुत्राप्यन्यत्र प्रयाता अपगता पलायिता इति यावत् ॥ २६ ॥

'कोलम्बसोपज्ञममेरिकाया संयुक्तसंस्थानकदम्बकं यत् ।
जगत्यनेकाद्भुतशिल्पविद्याविज्ञानतः प्राप यशःसमृद्धी ॥ २७ ॥

कोलम्बसोपज्ञमिति । 'कोलम्बस'नामकसाहसिकपुरुषेण उपज्ञा अन्वेषणात्मकमाद्यज्ञानं यस्यैतादृशं यत् अमेरिकाया संयुक्तसंस्थानकदम्बकं 'युनाइटेड स्टेट्स् आफ अमेरिका' इति नाम्ना प्रसिद्धं तत् जगति अनेकानि अद्भुतमयानि शिल्पविद्याविज्ञानकार्याणि तत यशः कीर्तिं समृद्धिम् अर्थसम्पदामिका च प्राप ॥ २७ ॥

देशेषु सर्वेष्वपि जीवनस्य स्वात्मोन्नतिं दर्शयितुं प्रवृत्ता ।
पातालवासा किल नव्यविश्वसम्मेलनायोजनमत्र चक्रुः ॥ २८ ॥

देशेष्विति । जीवनस्य पार्थिवजीवनस्य सर्वेष्वपि देशेषु कार्यक्षेत्रेषु स्वात्मोन्नतिं स्वसमृद्धिं प्रदर्शयितुं प्रवृत्ता उद्यता एते पातालवासिनः अमेरिकास्था जना अत्र 'शिकागो'नगरे विश्वसम्मेलनाभिधपरिषद आयोजन व्यवस्थां चक्रुः कृतवन्त । एतादृशेन सम्मेलनेन जगति सर्वेष्वपि देशेषु धार्मिकविचारकलाविज्ञानादिविषयेषु अमेरिका एव अधिकसमृद्धिशालिनी इति प्रदर्शयितुम् ईदृशसम्मेलनस्य व्यवस्थां विदधुरिति भावः ॥ २८ ॥

एतद्विभागात्मकधिष्ण्यधर्मसदः सदस्योऽयमनर्थितोऽपि ।
धन्वन्यमाणश्चिरमाश्रयार्थं प्रवासिना वासगृहं विवेश ॥ २९ ॥

एतद्विभागेति । एतस्यातिमहतो विश्वसम्मेलनस्य विश्वधर्मसभाभिध यः धार्मिकविभाग आसीत् तस्या धार्मिकसभाया अयं स्वामिवर अनर्थित अनाहूत सदस्य सभ्य, परिचयाभावात् आश्रयार्थं निवासार्थमितस्तत धन्वन्यमान कुत्रापि स्थानलाभाभावात् अन्ते प्रवासिना वासगृहं 'हाटेल नामकम् आश्रयस्थानं प्रविश्य प्रविष्ट ॥ २९ ॥

दिदृक्षुरेको बहुचित्रवस्तुप्रदर्शनं दार्शनिकः प्रयातः ।
समीक्ष्य सोऽकल्प्यकलाविलासं यथाद्भुतं साद्भुतमानसोऽभूत् ॥ ३० ॥

दिदृक्षुरिति । एकः एकाकी स दार्शनिक यति बहुचित्रवस्तुप्रदर्शनम् अनेकविचित्रवस्तूनां प्रदर्शनं दिदृक्षुः द्रष्टुमिच्छु सन् । केनापि सह परिचयाभावात् असहाय एव प्रदर्शनदर्शनार्थं गत तत्र च प्रदर्शने अकल्पनीय विचित्र च कलाविलास विविधकलासमृद्धिं विलोक्य अदृष्टपूर्वाणि अचिन्तितपूर्वाणि च विविधकलात्मकवस्तुदर्शनेन अद्भुतेन साश्चर्येण सह मानस यस्यैतादृश अभूत् जात ॥ ३० ॥

तद्वैभवं ! सोऽप्यसमो जनौघो ! विज्ञानकलाभिर्मनसाऽप्यचिन्त्या ।
सद्धर्जितं कर्ममयं नवं क्व क्व भारतं दीनतयाऽऽवृतं न ॥ ३१ ॥

तद्वैभवमिति । तत्र अमेरिकाया तदलौकिक वैभव समृद्धिं कुत्राप्यन्यत्र न दृष्टो अत एव असम जनौघ [illegible]
प्यचिन्तनीया
न अस्माक [illegible]

शरव्यता गैरिकवर्णवासा गतश्चलंस्तत्र स बालकानाम् ।
अकस्मदेको वसनं परेण संकेतितं वर्त्मनि बालिकाभिः ॥ ३२ ॥

शरव्यतामिति। गैरिकवर्णं वासः वस्त्रं यस्यैतादृशः स स्वामी चलन् मार्गे गच्छन् बालकानां विचित्रवेशदर्शनचमत्कृतानाम् अल्पवयसां बालकानां शरव्यतां सहास्यदर्शनलक्ष्यतां गतः प्राप्तः। तदेवाह—एकः कश्चिद् बालकः तस्य स्वामिनः वसनं गैरिकवस्त्रम् अकृत्तत् कृष्टवान् कृपेर्लुङि रूपम्। परेण अपरेण केनचिद् बालकेन वर्त्मनि तालिकाभिः करतालिकाभिः अंगुल्या संकेतितं 'पश्यत कीदृशोऽयं मनुष्यः' इति ॥ ३२ ॥

यत्कालतो धर्मसभातिदूरमन्तं गतोर्थः सुमहाननर्थः।
कर्तव्यमूढस्य जगत् समन्तात् तमोमयं जातमजातभीतेः ॥ ३३ ॥

यत्कालत इति। यद्यस्मात् तद् भावि धर्मसभाधिवेशनं कालतः अतिदूरम् आसीत्। अद्यापि धर्मसभाधिवेशनस्य समयः नायातः इति कृत्वा स सचिन्तोऽभवत् कुतः? अर्थः समीपस्थं द्रव्यं सर्वमपि व्ययीभूतम्। अयं तु 'अमेरिका'सदृशपरदेशेः महान् अनर्थः महती आपद् एवं किं कर्तव्यविमूढस्य स्वामिनः समन्तात् सर्वमपि जगत् तमोमयमन्धकारमयमेवासीत् तथापि कीदृशस्य अजातभीतेः न जाता यस्य भीतिर्यस्य निर्भयस्येत्यर्थः ॥ ३३ ॥

वासोऽस्थिरश्चाद्भुतमेव वासोऽप्यान्ध्यं विनान्धोऽहितमेव शीतम्।
सह्या न कानर्थपरम्परा चेदर्थो निदेशेन गुरोः शिवेन ॥३४॥

वासोऽस्थिर इति। वासः अस्थिरः निश्चयात्मकं किमपि निवासस्थानमपि नाभूत्। वासः गैरिकवस्त्रमपि अद्भुतमेव अमेरिकास्थजनानां हास्योत्पादकमेव। अन्धः विना योग्यार्थलाभेन विना अक्ष्णोः पुरतः आन्ध्यमिव स्थितम्। शीतमपि पर्याप्तवस्त्राभावेन अहितमिव शत्रुवत् दुःखदम् एवं गुरोः परमहंसस्य शिवेन कल्याणहेतुना निदेशेन आदेशेन अर्थः प्रयोजनं चेत् का अनर्थपरम्परा आपद्रावलिर्न सह्या सहनीया सर्वापि सहनीया एवेति भावः ॥ ३४ ॥

व्ययातिभारं परिहर्तुकामः स बोस्तनाख्यां पुरमाजगाम।
विश्वप्रियो यत्र कयापि भद्रनार्याऽतिथित्वेन च पूजितोऽभूत् ॥ ३५ ॥

व्ययातिभारमिति। धर्ममहासभाधिवेशनस्य समयः अद्यापि दूर एव अत्र च तावत्कालं जीवनम् अधिकतरव्ययकारणम् तादृशव्ययातिभारं परिहर्तुकामः परिहारेच्छुः 'बोस्तना'ख्यमपरं नगरमाजगाम आगतः। तत्र च अयं विश्वप्रियः स्वामी विवेकानन्दः कयापि भद्रनार्या 'बोस्तन'वासिन्या अतिथिसत्कारेण पूजितः अभूत्। स्वामी विश्वधर्मसम्मेलनार्थमागतः इति तस्मादेव ज्ञात्वा सा तं सादरं स्वगृहं नीतवती ॥ ३५ ॥

सैवातिथेयी यमिनं निनाय 'राइट्'सदध्यापकमुक्तकीर्तिम्।
यः प्रत्यजानाद्यतये सहायं तदुक्तिपीयूषरसप्रसन्नः ॥ ३६ ॥

सैवातिथेयीति। सा एव आतिथेयी अतिथिषु साधुः स्त्री तं यमिनं स्वामिनं 'राइट्'-नामकम् उक्तकीर्तेः प्राध्यापकस्य समीपं निनाय नीतवती, [illegible] च प्राध्यापकः तदुक्तिपीयूषरसप्रसन्नः तस्य स्वामिनः उक्तिपीयूषरसेन वचनामृतास्वादेन प्रसन्नः सन् यतये तस्मै सहायं धर्मसभाप्रवेशार्थं सहयत्तां प्रत्यजानात् प्रतिज्ञातवान् ॥ ३६ ॥

अभ्यर्थितस्तेन यतिः सभायां भवार्यधर्मप्रतिभूः समर्थः।
परं परश्चिन्तितमानसोऽभूदभावतः प्रत्ययपत्रिकायाः ॥ ३७ ॥

अभ्यर्थित इति। तेन 'राइट्'सुधिया यतिः स्वामी 'त्वमेव समर्थः योग्यः धर्ममहासभायां भारतदेशस्य आर्यधर्मप्रतिनिधिः प्रतिनिधिर्भव' इति अभ्यर्थितः प्रार्थितः। परं परं स्वामी प्रत्ययपत्रिकायाः अभावात् तस्य पार्श्वे यत् परिचयपत्रमासीत् तदपि नष्टमिति श्रुत्वा चिन्तितमानसः साश्चर्यचित्तः अभूत्। परिचयपत्राभावात् सभायां कथं तस्य प्रवेशो भविष्यति इति चिन्तितोऽभूत् ॥ ३७ ॥

प्राध्यापकः सस्मितमाह विद्वन्! सर्वज्ञरूपेण न वाच्यमित्थम्।
प्रकाशदानेऽधिकृतोऽस्ति भास्वान्न वेति कोऽत्र कुरुते समीक्षाम् ॥३८॥

प्राध्यापक इति। प्राध्यापकः 'राइट्'महोदयः स्वामिनं सस्मितमाह—हे विद्वन्! स्वामिन्! सर्वज्ञरूपेण ज्ञानमहाकोशेनेव स्थितेन त्वया इत्थम् 'परिचयपत्राभाव'इत्यादिकं न वाच्यं न वक्तव्यम्। यतः भास्वान् सूर्यः प्रकाशदाने अधिकृतः अस्ति न वा इति कः सूर्यं समीक्षां परीक्षां कुरुते। यदि सूर्यः स्वयमेव प्रकाशस्वरूपः विद्यते तर्हि 'स दीप्तिप्रदानेऽधिकारी भविष्यति न वा' इति विचारः बालिशतापूर्ण एव ॥ ३८ ॥

स्वयं च निर्वाचनसङ्घमुख्यो निवेदितं प्रेषयता मुनीन्द्रम्।
एकः सुधीरेष समग्रविद्यालयस्थिताचार्यसमानसंवित् ॥ ३९ ॥

स्वयं चेति। मुनीन्द्रं स्वामिनं प्रेषयता राइट्महोदयेन निर्वाचनसङ्घस्य निर्वाचनसभायाः मुख्यः प्रधानः स्वयं निवेदितः कथितः 'एष सुधीः स्वामी समग्रे सम्पूर्णे विश्वविद्यालये स्थितानाम् आचार्याणां प्राध्यापकानां मिलितैः समानं तुल्यं संवित् ज्ञानं यस्यैतादृशः विद्यते। सर्वेषामाचार्याणां यत् मिलितं ज्ञानं तेन ज्ञानेन तुल्यमस्य विदुषः ज्ञानं विद्यते एतादृशसन्देशपूर्वकं स यतिः प्रेषितः ॥ ३९ ॥

प्रत्यूहसंहत्यवकीर्णवर्त्मन्येवं सरन् धर्मसदः पदं सः।
गन्तुं प्रवृत्तोऽग्निरथाधिरूढः क्षपाघनध्वान्तसमावृतोऽन्तः ॥ ४० ॥

प्रत्यूह इति। प्रत्यूहानां विघ्नानां संहतिः समूहः तेन अवकीर्णं विकीर्णं परिपूर्णमित्यर्थः। एतादृशे वर्त्मनि मार्गे एव सरन् अग्रतो गच्छन् सः यतिः धर्मसदः पदं धर्ममहासभास्थानं गन्तुं प्रवृत्तः। कथम्—अग्निरथाधिरूढः बाष्पयानमारूढः तथा अन्तः मनसि क्षपायाः निशायाः घनध्वान्तेन निबिडान्धकारेण समावृतः सन् गन्तुं प्रवृत्तः ॥ ४० ॥

श्रीरामकृष्णैकमतिर्यतीन्द्रः श्यामामयः कृष्णधराधिवासः।
निशापि कृष्णेव च कृष्णवर्णो ज्ञेयः कुतोऽन्तर्मलिनैः सिताङ्गैः ॥४१॥

श्रीरामकृष्णेति। स यतीन्द्रः यतिश्रेष्ठः श्रीरामकृष्णैकमतिः तदासक्तमनाः। श्यामामयः निरन्तरं भवतारिणीध्यानतत्परः कृष्णस्य या धरा भारतं तत्र अधिवासः निवासः यस्य भारतवासीत्यर्थः। रात्रिरपि अन्धकारेण पूरिता सती कृष्णैव सोऽपि यतिरपि कृष्णवर्णः 'काला आदमी' इति तिरस्कारार्हः अस्यामवस्थायाम् अन्तर्मलिनैः मलिनचित्तैः सिताङ्गैः श्वेतवर्णैः कुतः कथं ज्ञेयः ज्ञातो भवतु न कोऽपि तमजानादित्यर्थः ॥ ४१ ॥

'अथाग्नियानादवरुह्य शीतादतीव भीतोऽल्पपरिच्छदोऽयम्।
विश्राममूमिस्थितपेटिकायां कृताश्रयः क्वापि निशामनैषीत् ॥ ४२ ॥

अथेति। अथ अग्निरथयाने आगते सः यानादवरुह्य गन्तुं प्रवृत्तः परं शीतादतीव भीतः शैत्यपरिपीडितः अल्पः अपर्याप्तः परिच्छदः प्रावरणवस्त्राणि यस्यैतादृशः तत्रैव

यानाश्रयस्थाने स्थितायां कस्यांचित्पेटिकायां कृतः विहितः आश्रयः अवलम्बः येन तादृशः क्वापि आश्रयस्थानप्रांगणे निशां अनैषीदत्यवाहयत् ॥ ४२ ॥

अथ प्रभाते चिरमाश्रयार्थं भ्रमंस्तिरोऽकारि मुहुः प्रमुग्धैः ।
प्रतारितोऽसौ गलहस्तितोऽभूद् धनाढ्यभृत्यैरपसारितोऽपि ॥ ४३ ॥

अथेति । अथ रात्रिसमाप्त्यनन्तरं प्रभाते चिरं दीर्घसमयपर्यन्तम् आश्रयार्थमितस्ततो भ्रमन् मुहुः बहुवारं प्रमुग्धैः मूढैः जनैः तिरोऽकारि तिरस्कृतः । कैश्चित् प्रतारितः अपि वञ्चितः अपि । 'त्वमाश्रयस्थानान्वेषणं करोषि किम् ?' तेन आम् इत्युक्ते आश्रयायोग्यमपि स्थानं दर्शयित्वा प्रतारितः । कुत्रचित् गले हस्तं स्थापयित्वा बहिष्कृतः अपि । धनाढ्यानां भृत्यैः सेवकैः 'कोऽयं भिक्षायाचकः' इति कृत्वा अपसारितः अपि । एवं बहुत्र सोऽपमानितः आसीत् ॥ ४३ ॥

द्वारं गृहस्यावृतमाशु केनाप्यन्येन 'निम्रोजन'इत्यवोचि ।
भाविस्वमानोन्नतिसंग्रहार्थं नूनं महन्मूल्यमदायि तेन ॥ ४४ ॥

द्वारमिति । केनापि 'अयं कोऽपि विचित्रः मनुष्यः गृहं प्रवेष्टुमिच्छति' इति गृहस्य द्वारमेव पिहितं कृतम् । अन्येन केनापि अयं निम्रोजातीयः नार्हति अस्मद्गृहप्रवेशमिति अवोचि उक्तम् वचेः कर्मणि लुङ् । भाविनी भविष्यन्ती या मानोन्नतिः आदरातिशयः तस्य संग्रहार्थं तत्प्राप्त्यर्थं तेन महत् मूल्यं अदायि प्रदत्तं नूनमित्युत्प्रेक्षा ॥ ४४ ॥

श्रान्तो भ्रमन्नेवमितस्ततोऽन्नं विना कथंचिद् धृतदेहबन्धः ।
पार्श्वेऽध्वनोऽयं सहसोपविष्टः प्रस्विन्नगात्रोऽप्रभुरात्मनोऽपि ॥ ४५ ॥

श्रान्त इति । एवम् इतस्ततः भ्रमन् अन्नं विना क्षुधुत्तापीडितः कथंचित् महता कष्टेन धृतदेहबन्धः जीवितशरीरः अध्वनः पार्श्वे समीपे सहसाऽकस्मात् उपविष्टः प्रस्विन्नं स्वेदजलपूर्णं गात्रं शरीरं यस्य तथा आत्मनः अप्रभुः आत्मरक्षार्थम् असमर्थः ॥ ४५ ॥

'हेला'भिधैका महिला कयापि प्रोत्साहितेवान्तरदिव्यशक्त्या ।
समीपमेत्यानुयुयोज साधोः किमागतो धर्मसदःसदस्यः ॥ ४६ ॥

अस्मिन्नवसरे 'हेल'इतिनाम्नी काचिन्महिला कयाचित् आन्तरया अन्तःस्थितया दिव्यशक्त्या अलौकिकबलेन प्रोत्साहितेव प्रेरितेव समीपं स्वामिनः पार्श्वमागत्य अनुयुयोज पृष्टवती साधो ! किं भवान् धर्मसभायाः सदस्यः सन् अत्रागतोऽसि ? ॥ ४६ ॥

ओमुक्तवन्तं वनिताऽऽदरेण संन्यासिनं नीतवती स्वगेहम् ।
कुटुम्बिभिश्चैतमियं सिषेवे तन्मन्दिरं मातृगृहं स मेने ॥ ४७ ॥

ओमिति । 'ओम्' इत्युक्तवन्तं तम् 'आम्, मातः अहं धर्मसभायां प्रविष्टो भवितुमागतोऽस्मि'इति ब्रुवन्तं तं स्वामिनं सा 'हेल'नाम्नी महिला स्वगेहम् निवासस्थानं नीतवती । तत्र च स्वकुटुम्बिभिः सार्धमियं एतं सिषेवे अन्नपानादिव्यवस्थां कर्तुमारेभे । सोऽपि तन्मन्दिरं हेलमहिलागृहं मातृगृहं स्वजननीगृहमिव अमन्यत ॥ ४७ ॥

तया सहैषोऽनुपदं समायाः सेवालयं धैर्यधनः प्रयातः ।
वृतश्च तैर्भारतधर्मसभ्यः प्राच्यैः सदस्यैः सह वस्तुमुक्तः ॥ ४८ ॥

तया सहेति । धर्मपाल एव स्वामी तया 'हेल'महिलया सहैव सभायाः धर्मसभायाः सेवाख्ये कार्यालय प्रयान् गतः । तं सेवाख्यसर्थ अथ यति भारतधर्मसद्रूपरत्नेन धृतः स्वीकृतः तथा प्राच्यदृशीयसदस्य सह वरं निवासं कर्तुमुक्तः प्रार्थितश्च ॥ ४८ ॥

अथेतिहासे जगतः पवित्रं दिनं दिनेशोज्ज्वलकान्तिकान्तम् ।
गुणाङ्कवस्विन्दुमिते श्रुतेऽब्दे समागतं भारतकीर्तिहेतुः ॥ ४९ ॥

अथेति । अथ अनन्तरं जगतः इतिहासे पवित्रम् निर्मलं दिनेशोज्ज्वलकान्तिकान्तम् । दिनेशस्य सूर्यस्य उज्ज्वलकान्त्या उज्ज्वलप्रकाशेन कान्तं सुन्दरं गुणाङ्कवस्विन्दुमिते १८९३ श्रुते प्रसिद्धे अब्दे वर्षे भारतस्य यशसः हेतु कारणं दिनं दिवसः समागतम् ॥ ४९ ॥

अहो ! अहोऽदः स्मरणीयमासीत् प्राच्या प्रतीची मिलिताऽद्य नूनम् ।
वेदान्त उद्भासनसन्निविष्टो निरर्थको धर्मविवादशब्दः ॥ ५० ॥

अहो इति । अहो इत्याश्चर्यम् । अदः इदं अह्नः दिनं इतिहासे जगदितिहासे स्मरणीयं स्मरणयोग्यमासीत् । प्राच्या दिशया प्रतीची दिशा पश्चिमा अद्य मिलिता संगता नूनमित्युत्प्रेक्षा । अस्मिन्दिने वेदान्तधर्म उद्भासने सन्निविष्ट स्थापित । अद्य धर्मविवादशब्दः धर्मकलह इति शब्दः निरर्थकः निष्प्रयोजनः ॥ ५० ॥

बहुविपदनुभूतेर्लब्धसर्वोच्चतेजाः कनकमिव नितान्तं तप्तमग्नौ यतीशः ।
श्रुतिपथहितहेतोर्धर्मसम्मेलनेऽयात् स्थिरतरभववान्तेः सूत्रपातं विधातुम् ॥

बहुविपदिति । यतीशः स्वामी बहुविपदनुभूतेः अनेकविधानामापदामनुभवानन्तरं लब्धम् अधिगतं सर्वोच्चं सर्वोत्कृष्टं तेजः कान्तिः यशो वा येन । कथम् अग्नौ नितान्तम् अत्यधिकम् अग्नौ अनले तप्तमिव । यथा अनले तप्तं सुवर्णम् अधिकतरं तेजस्वि भवति तथा अयमपि विपदनुभवेन अधिकतरयशाः समुज्ज्वलतरकीर्तिः अभूत् । तादृशः स्वामी स्थिरतरायाः दृढतरायाः भवशान्तेः प्रपञ्चशमस्य संसारे शान्तिस्थापनस्य, सूत्रपातम् आरम्भम्, विधातुं कर्तुम्, श्रुतिपथस्य वेदमार्गस्य हितहेतोः कल्याणार्थम्, 'धर्मसम्मेलने' धर्मात्मकसदसि, अयात् अगच्छत् ॥ ५१ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
बाल्ये लब्धयतीन्द्रदर्शनसुखेनादर्शसान्द्रे महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गो नवाङ्को गतः ॥ ५२ ॥

इति त्र्यम्बकसूरिविरचिते 'विवेकानन्दचरिते' नाम महाकाव्ये
शिकागोगमनं नाम नवमोऽध्यायः ॥ ९ ॥

लोकमिति । लोकमित्यादि प्रधानाश्रये इत्यन्तं पूर्ववत् । बाल्ये लब्धं प्राप्तं यतीन्द्रदर्शनसुखं येन तादृशेन त्र्यम्बकसूरिणा विरचितेऽस्मिन्महाकाव्ये 'शिकागो'गमनं नाम नवमः सर्गो गतः ॥ ५२ ॥

इति विवेकानन्दचरिते टीकायां विवेकदीपाख्यायां 'शिकागो'गमन
नाम नवमः सर्गः समाप्तः ॥ ९ ॥

## अथ विविधवृत्तमयः दशमः सर्गः

रिक्थानुरूपसमलङ्कृतभव्यवेश्म-
न्यायोजिते निखिलधर्मसभाविभागे ।
उद्धर्षिणी निजमतप्रथिमाभिमाना
नानापथप्रथितपण्डितमण्डलीयम् ॥ १ ॥

अथ 'शिकागोवर्णन'नाम विविधवृत्तमयं दशमं सर्गमारिरिप्सुः कविः तत्तच्छ्लोकगतवृत्तनामापि प्रदर्शयन् अमेरिकायां 'शिकागो'नगरे सभां वर्णयति—

रिक्थानुरूपेति । रिक्थानुरूपं धनानुकूलं 'रिक्थमृक्थं धनं वसु' इत्यमरः, समलंकृतं सुसज्जितं यत् भव्यं वेश्म महत् सभागृहम् तत्र आयोजिते विधातुं निश्चिते 'निखिलधर्मसभा' विभागे 'सर्वधर्मसभा'नाम्नि महासभांशभूते तत्र 'विज्ञानविभागः' 'कलाविभागः' इत्यादयोऽनेके विभागा अपि आसन् तेषु धर्मविभागे इयम् नानापथेषु विविधधर्ममार्गेषु प्रथिता प्रसिद्धा पण्डितानां धार्मिकविदुषां मण्डली समूहः उद्धर्षिणी हर्षान्विता अहं स्वधर्मश्रेष्ठत्वं प्रतिपादयिष्यामि इत्यानन्दिता; तथा निजस्य स्वकीयस्य मतस्य पथ प्रथिमा महत्त्वं तस्य अभिमानः अहंकारः यस्या एतादृशी सतीत्युत्तरेण सम्बन्धः । अत्र श्लोके वसन्ततिलकापरनामधेयम् उद्धर्षिणीवृत्तम् सैतवमुनेर्मतानुसारं उद्धर्षिणीति वसन्ततिलकस्य अपरं नाम । तल्लक्षणं 'उक्ता वसन्ततिलका तभजाजगौ गः' 'उद्धर्षिणीयमुदिता मुनिसैतवेन' इति छन्दःशास्त्रे । यस्मिन् श्लोके वृत्तनामापि विद्यते तत्र मुद्रालंकारो ज्ञेयः ॥ १ ॥

सम्मेलिता भवदिहाश्रुतभूतपूर्वा
देशप्रथासमुचिता हितवेशभूषा ।
सिंहोन्नतासनलसत्तनुसभ्यवृन्दा
सौदामिनीव्यजनवातनिरस्तखेदा ॥ २ ॥

सम्मेलितेति । सा पण्डितमण्डलीति पूर्वेण सम्बन्धः । सम्मेलिता एकस्थानागता अभवत् अजनि । कीदृशी—अश्रुतभूतपूर्वा पूर्वं कदापि अश्रुता अभूता अश्रुतपूर्वा अभूतपूर्वा चेत्यर्थः । देशप्रथानुसारं तत्तद्देशनियमानुसारं समुचितः योग्यः आहितः धृतवेषभूषादिकं यया धृतस्वस्वदेशयोग्यवस्त्राभरणेत्यर्थः । सिंह इव उन्नतानि उच्चानि आसमानि वेत्रादिनिर्मितानि तेषु लसन्त्यः तनवः शरीराणि येषां तादृशानि सभ्यवृन्दानि सदस्यसमूहा यस्या एतादृशी तथा सौदामिनीव्यजनैर्विद्युत्तालवृन्तानां वातेन अंगानुकूलवायुना निरस्तः अपसारितः खेदः यस्या एतादृशी पण्डितमण्डली सम्मेलिता । मिल्धातोर्णिजन्तात् कर्मणि क्तः । 'सिंहोन्नता' इत्यपि वसन्ततिलकस्यापरं नाम लक्षणं तु तदेव ॥ २ ॥

मध्येसभं च सकलर्तुकदम्बकोद्य-
द्भासा वसन्ततिलकेन समो बभासे ।
अध्यक्ष'कार्डिनल'पूज्य'गिवन्स'नामा
कामं समेधितसमग्रसमाजधामा ॥ ३ ॥

मध्येसभमिति। सभाया मध्ये सदोमध्यभागे 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः। सकलानां सर्वेषाम् ऋतूनां वत्सरदण्डकसमूहः तत्र उद्यन्ती या कान्तिः यस्यैतादृशेन वसन्ततिलकेन समः तुल्यः यथा षड्ऋतुषु वसन्ततिलकः मुख्यतया विराजते तथा पृथ्वीजगति विद्यमानानां धर्माणां सदस्येषु समायाः अध्यक्ष 'कार्डिनलगिबन्स' इति नाम यस्य एतादृश अध्यक्षस्थानापन्नो य समेधितं वृद्धिं प्रापितं समप्रसभाजनस्य सम्पूर्णधार्मिकसभायाः धाम तेजः शोभा इति यावत् येन एतादृश आसीत्। कार्डिनल 'रोमनकैथॉलिक'धर्ममतानुयायिनां धर्माधिकारी 'कार्डिनल'इत्युच्यते। (१) हिन्दुधर्म, (२) जैनधर्म, (३) जरोअस्टर अथवा पारसीकधर्म, (४) ख्रिष्टधर्म, (५) बौद्धधर्म (ताओ शिन्टो-कान्फ्यूशिअनधर्मशाखोपबृंहित), (६) मोहम्मदीयधर्म इति मुख्यतया धर्माः प्रचलिताः सन्ति। यथा ऋतुषु वसन्तः सर्वश्रेष्ठः तथा धर्मसभाध्यक्षः 'श्रीगिबन्सो'ऽपि अध्यक्षपदाधिकृत आसीत्। अत्र वसन्ततिलकं वृत्तम्, लक्षणं तूक्तमेव। उपमालङ्कारश्च ॥३॥

केषां विविधधर्माणां सदस्यास्तत्र धर्मसभायां मिलिता इत्याह—

ख्रिस्ता बौद्धा जिनमतपराः कान्फ्युसीयानमार्गा
ज्यूधर्मीयाः स्वपथनिपुणा मुस्लिमा हिन्दवोऽपि।
शिन्तोधर्मप्रतिनिधिजना जारथुष्ट्रानुगा ये
मन्दाक्रान्ताः सदसि मुदिताः पार्श्वयोश्चोपविष्टाः ॥४॥

ख्रिस्ताः ख्रिस्तमतानुसारिणः 'न्यूटेस्टामेन्ट'-बायबलस्य नवीननियमविश्वासिनः, बौद्धाः-बुद्धमतानुयायिनः, जिनमतपराः तीर्थंकरमतानुगाः, कान्फ्यूसीयानमार्गाः चीनदेशे कुंग फ्यू त्से नामकः कश्चित् बुद्धस्य पश्चात् (शतवर्षानन्तरं) दार्शनिको नृपतिरभूत् पाश्चात्त्याः तस्य नाम्न उच्चारणासमर्थाः सन्तः 'कॉन्फ्यूसिअस' (लातिनभाषायां) इत्येव अवदन्। अथ महान् नीतिशास्त्रज्ञ आसीत्, ज्यूधर्मीयाः 'ओल्डटेस्टामेंट'-बायबलस्य पुराणनियमानुसारिणः यहोवापूजकाः, स्वपथनिपुणाः स्वस्य मार्गे अतिकुशलाः इति उभयतो विशेषणम्, ज्यूधर्मीयाः मुस्लिमाश्च इत्यनयोः, मुस्लिमाः कुराणमतीयाः, हिन्दवः भारतवर्षीयाः, 'शिन्तो' धर्मप्रतिनिधिजनाः जापानदेशीयाः 'शिन्तो'मतानुयायिनः ते सर्वव्यापिनि परमात्मनि विश्वसन्ति अयमेव तेषां 'शिन्तो' भवति। जारथुष्ट्रानुगाः पारसीकाः 'जन्द आवेस्ता' ग्रन्थकर्ता जरोस्टर नामकः अभूत् यत्र 'अहुरमज्दा' 'महान् ईश्वर' एव पूजनीयः इति प्रतिपादितम्। एते विविधमतानुगाः धर्मानुगाश्च सदसि तस्याः धर्ममहासभायाः मन्दाक्रान्ताः शनैः शनैः आगच्छन्तः पार्श्वयोः अध्यक्ष-'कार्डिनलगिबन्स' नाम्नः पार्श्वयोः उभयतः उपविष्टाः आसनस्थाः अजायन्त। अत्र मन्दाक्रान्तावृत्तम् लक्षणं तु 'मन्दाक्रान्ता जलधिषडगम्भौ नतौ ताद्गुरू चेत्' इति। हिन्दुधर्मस्य प्रतिनिधित्वे एनीबेजन्टमहोदयाऽऽहूता आसीत्, जैनधर्मस्य च गान्धिर्नाम कश्चिद् महात्मागान्धेर्भिन्नः ॥४॥

मंचं पूर्णं प्रतिनिधिगणैरागतैः सर्वतोऽभू-
द्दारब्धोऽयं निरुपममहो मङ्गलैः स्वस्तिगानैः।
क्रान्तिं धर्मे जगति महतीं मानिनो मेनिरे ते
त्वामाधारं सकलसुतिषु ख्रिस्तमार्गोन्नतेश्च ॥ ५ ॥

मञ्चं पूर्णं इति। मञ्चः महासभायाः प्रतिनिधिगणैः तत्तद्धर्मप्रतिपुरुषैः आगतैः उपस्थितैः

सर्वतः सर्वदिक्षु पूर्णः संकुलः अभूत्। अयं निरुपमसदः उपमाशून्यः विश्वधर्मसभामहोत्सवः मङ्गलैः पवित्रैः स्वस्तिगानैः महोत्सवादौ पठितैः मङ्गलवाद्यगानादिभिः आरब्धः प्रक्रान्तः। ते विशेषतः ख्रिस्तधर्मानुयायिनः अनया धर्ममहासभया जगति महती क्रान्ति परिवर्तनं भाविनीं भविष्यन्तीं मेनिरे विचारयामासुः। वस्तुतः अस्या विश्वधर्मपरिषदः इदमेव लक्ष्यमासीद् यत्सर्वस्मिञ्जगति 'ख्रिस्तधर्म एव श्रेष्ठः' इति। तां महतीं क्रान्ति च सकलसृतिषु विश्वस्मिन् प्रचलितेषु सर्वेष्वपि मतेषु ख्रिस्तमार्गस्य उन्नतेः श्रेष्ठत्वस्य आधारभूतां मेनिरे च। अत्रापि मन्दाक्रान्तावृत्तम्, तत्तु प्रतिपंक्तेः प्रथमाक्षरैः सूचितम् ॥ ५॥

यतिस्तु **पृथ्वी**तलप्रथितसम्प्रदायातिगः
स 'हेल'महिलासमर्पितधृतोत्तरीयाम्बरः।
सदः प्रति समासदच्छ्रुतिनिवेदितस्याध्वनः
'सनातन'सुलक्ष्मणः प्रतिनिधिर्निधिः संविदः ॥ ६ ॥

यतिस्त्विति। यतिस्तु विवेकानन्दस्वामी संविदः ज्ञानस्य निधिः पृथिवीतले भूतले प्रथिताः ये अनेके सम्प्रदायाः तान् सर्वानतिगच्छति अतिशेते एतादृशः कस्यापि सम्प्रदायविशेषस्य प्रतिनिधि-स्वरूपेण स तत्र नागतः, अपितु श्रुतिनिवेदितस्य वेदप्रतिपादितस्य 'सनातनः' इति सुलक्ष्म सुन्दरचिह्नं यस्य एतादृशस्य अध्वनः मार्गस्य सनातनवैदिकधर्मस्य वेदान्तधर्मस्य वा प्रतिनिधिः प्रतिपुरुषरूपेण सभायामुपस्थित आसीत्। कीदृशः 'हेल'नाम्नी या महिला यस्या गृहे सः अमेरिकायां अतिथिः आसीत् तया स्वामिनः विवेकानन्दस्य कृते एको धर्मगुरुपवेशः कारित आसीत्। तया समर्पितं यदम्बरं वेशविशेषः परिहितसाधुवेशः सन् सदः धर्मसभागृहं प्रति समासदत् उपस्थितः। अस्मिन् पद्ये 'पृथिवी' 'पृथ्वी' वा वृत्तम्। लक्षणं तु 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति ॥ ६ ॥

विद्वद्भिरत्र **ललिता**क्षरं पुनः पूर्वेहितानुसृतिलक्षणं वचः।
स्वस्वायनस्तुतिपरं स्म भण्यते येनाजनि स्थिरमिवात्मगौरवम् ॥ ७ ॥

विद्वद्भिरिति। अत्र सभायां विद्वद्भिः विविधधर्मावलम्बिभिः विपश्चिद्भिः पूर्वं भाषणात् पूर्वं यदीहितम् 'एतादृशं भाषणमहं दास्यामि' इति-टिप्पण्यादिभिः पत्रे अङ्कितं तल्लक्षणं तादृशं वचः वचनं स्वस्वायनस्तुतिपरं निजनिजमार्गप्रशंसापरं 'अस्माकमेव मार्गः धर्मो वा सर्वश्रेष्ठः' इत्यादिस्वरूपं भण्यते स्म प्रतिपादितमासीत्। येन स्वधर्मप्रशंसाकरणेन वक्तुः यः पन्थास्तस्य गौरवं श्रेष्ठत्वं निश्चितमेव अजनि। मम भाषणं ॥ एतादृशं सर्वोत्कृष्टमभूत् मन्ये तेन सर्वे श्रोतारः ममैव धर्मस्य उत्कृष्टतया सहमता भवेयुः इति सगर्वास्ते जाता इति भावः। अत्र श्लोके ललिताछन्दः तल्लक्षणम्—'धीरैरभाणि ललिता तभौ जरौ' इति ॥ ७ ॥

**प्रमिताक्षरा**पि मुनिना गदिता वचनावलिः सुमतिभिः सदसि।
अभिनन्दिताभवदतीव मुहुः करतालिकाभिरमिताभिरियम् ॥८॥

प्रमिताक्षरेति। मुनिना विवेकानन्देन गदिता उक्ता प्रमितानि कतिपयान्येव अक्षराणि शब्दा इत्यर्थः यस्या एतादृश्यपि वचनानाम् उक्तीनाम् आवलिः पंक्तिः तस्मिन् सदसि धर्मसभायां सुमतिभिः सुधीभिः मुहुः पुनः पुनः अमिताभिः संख्यातीताभिः करतालिकाभिः हस्ततालैः अतीव अतितराम् अभिनन्दिता प्रशंसिता अभवत्। यद्यपि स्वामिना अत्यल्प-

मेव भाषणं कृतम् तथापि सभ्यै करतालिकाप्रदानपूर्वकं सोत्कण्ठमभिनन्दितम्। अत्र प्रमिताक्षरावृत्तं तल्लक्षणं 'प्रमिताक्षरा सजससैरुदिता' इति ॥ ८ ॥

किं स उक्तवान् इत्याह—

हंहो ! सौभाग्यवन्तः प्रियतरभगिनीभ्रातरोऽमेरिकायां
दूरादभ्यागतो च प्रथितपृथुयशःस्रग्धरायां धरायाम्।
संदेशं वेदनादि श्रुतिषु निगदितं श्रावयिष्यन् कृतार्थो
मन्येऽस्मज्जन्मधाम प्रभवति विलसद्गौरवा भारती भूः ॥ ९ ॥

हंहो इति। हंहो अहो अमेरिकाया सौभाग्यवन्तः पुण्यवन्तः प्रियतराः भगिन्यः भ्रातरश्च शृणुत। प्रथितं चतुर्दिक्षु प्रख्यातं यत् पृथु विपुलं यशः कीर्तिः तदेव स्रक् पुष्पमाला तां धारयतीति तच्छीलाया च युष्माकं धरायां भूमौ अतिप्रभूतयशसोऽस्माकमभिख्यधर्य दूरात् इतः द्वादशसहस्रक्रोशाधिकदूरस्थितभारतात् अभ्यागतः अतिथिरूपेण प्राप्तः। श्रुतिषु उपनिषत्सु निगदितं प्रतिपादितम् अनादि सदृशं वेदान्तधर्मसार्वत्रिकं भवतां पुरतः श्राव यिष्यन् श्रवणविषयीकरिष्यन् चेदहं कृतार्थः सम्पादितप्रयोजनः स्याम् इति शेषः, तर्हि अस्माकं जन्मधामस्थलं भारती भूः भारतवर्षं विलसत् चतुर्दिक्षु प्रसरत्सत् प्रभवति उत्कर्षयुक्तं स्यादिति मन्ये। अत्र स्रग्धरावृत्तम् लक्षणं 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'। श्रावयिष्यन्नित्यत्र णिजन्तात् शृधातोर्भविष्यति शतृप्रत्ययः ॥ ९ ॥

पावित्र्यं निर्मलत्वं सुकृतिततिरति सर्वभूतानुकम्पा
धर्मस्यैकस्य सम्पन्न खलु समभवत् किन्तु सर्वत्र सन्त।
अन्ये लुप्यन्तु धर्मा मम भवतु पुनः सर्वधर्मप्रधानो
यद्येवं कोऽपि वाञ्छत्यखिलजनदयापात्रमेतं धिगस्तु ॥१०॥

पावित्र्यमिति। पावित्र्यं मनोवाक्कायशुद्धिः, निर्मलत्वम् आचारविचारनैर्मल्यं, सुकृतिततिरति पुण्यकर्माभिलाषः, सर्वेषु भूतेषु प्राणिषु अनुकम्पा दया एते गुणाः कस्यचिदेकस्यैव धर्मस्य सम्पद् धनराशिः न, अपि तु सर्वेषामपि धर्माणां साधारणी। यतः एतादृशगुण-लाभोपदेष्टारः सन्तः सज्जनाः सर्वदेशेषु न अभवन् किम् ? सर्वत्रैवैतादृशाः साधवः समुत्पन्नाः 'अन्ये धर्माः लुप्यन्तु विनाशाभिमुखा भवन्तु तथा ममैव धर्मः सर्वेषामन्यधर्माणां प्रधानो भवतु' यदि कश्चित् ईदृशमभिलाषं प्रकटयति तर्हि स व्यक्तिः सर्वेषां जनानाम् अनुकम्पनीयः भवेत्। एतम् एतादृशं च निरर्थकजीवनयुक्तं नरं धिक्। अत्रापि पूर्वोक्त-श्लोकवत् स्रग्धरावृत्तम् ॥ १० ॥

ईश्वरः खलु जगत्पिता स्वयं प्रार्थनासु सततं प्रगीयते।
का पुनर्मतिरथोद्धता परो मन्यते व्यवहृतौ स्वबान्धवः ॥११॥

ईश्वर इति। युष्माभिः विशेषतः क्रिश्चियनमतानुयायिभिः प्रार्थनासु अभ्यर्थनासु निरन्तरं प्रगीयते वर्ण्यते यत् ईश्वरः स्वयं जगतः सृष्टेः पिता। यदि स सर्वेषां पिता तर्हि वयं तस्य सन्तानस्वरूपाः अत एव अन्योन्यभ्रातृतुल्याः। एवं सत्यपि अस्माकं एषा उद्धता कठोरताप्रधाना मतिः बुद्धिः यत् स्वबान्धवः आत्मनः भ्राताऽपि व्यवहृतौ परस्परव्यवहारे परः सम्बन्धशून्यः रिपुतुल्यो वा मन्यते। ईश्वरसन्तानैस्तु परस्परं भ्रातृसमैर्भाव्यम् तत्तु न

दृश्यते परं भ्रातरः परस्परकलहप्रसक्ता किमर्थमवलोक्यन्ते। अत्र रथोद्धतावृत्तम् लक्षणं तु 'रान्नराविह रथोद्धता लगौ'। प्रगीयते इत्यत्र प्रपूर्वात् गैधातोः कर्मणि लट्॥ ११॥

यतिवरस्य गां मनोरमामथ निशम्य तां सदोगतैः।
वलवती शिवाऽन्वभूयत स्वहृदि विश्वबन्धुता मतिः॥ १२॥

यतिवरस्येति। मनोरमां मनोहारिणीं यतिवरस्य विवेकानन्दस्य तां गां वाणीं निशम्य श्रुत्वा सदोगतैः धर्ममहासभासदस्यैः शिवा पवित्रा वलवती विश्वबन्धुता मतिः विश्वभ्रातृत्वबुद्धिः स्वहृदि स्वान्तःकरणे अन्वभूयत अनुभूता। तस्य वाणी एतादृशी प्रभावोत्पादिका आसीत् यत् सदस्याः तस्य विश्वबन्धुत्वोपदेशेन स्वयमेव तादृशीं भावनामनुभूतवन्तः। अत्र मनोरमावृत्तम् तल्लक्षणम्—'नरजगैर्भवेन्मनोरमा' इति॥ १२॥

असावहमुपस्थितः प्रतिनिधिः श्रुतेरध्वनः
पुराणतमभारतीययतिसम्प्रदायानुगः।
धरातलनिवासकृन्निखिलहिन्दुजातेर्मुखं
नवं किमपि वाचिकं श्रवसि कर्तुमभ्यर्थये॥ १३॥

असाविति। असौ अहं विवेकानन्दः श्रुतेः अध्वनः वेदप्रतिपादितमार्गस्य प्रतिनिधिः प्रतिपुरुषरूपेण अस्यां धर्मसभायां पुराणतमस्य अतिप्राचीनस्य भारतीययतिसम्प्रदायस्य हिन्दुदेशीयसंन्यासिमार्गस्य अनुगः अनुयायी, धरातले भूमण्डले निवासकृतः वासं कुर्वन्त्याः निखिलहिन्दुजातेर्मुखं प्रधानभूतः किमपि अश्रुतपूर्वं वाचिकं संदेशं श्रवसि कर्तुं श्रोतुमभ्यर्थये प्रार्थयामि। अत्र पूर्वोक्तपद्यश्लोकगतं पृथ्वीवृत्तम्॥ १३॥

धर्मो नः समदृष्टिरभ्वस्तु समेप्वास्तेऽनिशं सादरः
स्वस्थानाद्रिपुभीतिविद्रुतनृणां जातः शरण्यो महान्।
ग्रीकान् हूणशकान् प्रभावयशतः पूर्वं चकारात्मसात्
किं कर्तुं प्रभवेत् कदापि शशकः शार्दूलविक्रीडितम्॥

धर्मो न इति। नः अस्माकं वेदान्तधर्मः वैदिकधर्मो वा समेषु सर्वेषु अध्वसु समा तुल्या दृष्टिः अवलोकनं यस्यैतादृशः विद्यते। विभिन्नमार्गा एकमेवेश्वरं प्राप्तुं उपायस्वरूपाः केवलमिति दृष्ट्या वेदान्तधर्मः समदृष्टिः। तदुक्तम् एतन्महाकाव्यलेखकविरचितायाम् उपदेशसाहस्र्यां रामकृष्णदेवैः 'अनन्तलाभार्थमनन्तमार्गाः पन्था विभिन्नोऽस्ति मतानुसारम्। तलं गृहस्योपरि वंशरज्जुसोपाननिःश्रेणिभिरेति लोकः' इति। अयमस्माकं धर्मः स्वस्थानात् रिपुभ्यः शत्रुभ्यः भीतेः कारणात् विद्रुतानां पलायितानां शकहूणादिनृणां महान् श्रेष्ठः शरण्यो आश्रयस्थानदाता जातः। यः धर्मः पलाय्य अत्रागतान् ग्रीकान् हूणान्शकांश्च स्वप्रभावात् आत्मसात् चकार आर्यधर्मीयान् विहितवान्। एतादृशः उदारः अस्माकं वैदिकधर्मः सर्वैः स्वीकर्तुं योग्यतमः। अत्रार्थान्तरन्यासेनाह—किं कदापि शशकः शार्दूलविक्रीडितं सिंहपराक्रमं विधातुं समर्थः भवेत् न कदापीत्यर्थः। अत्र शार्दूलविक्रीडितं वृत्तम्। 'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' अर्थान्तरन्यासोऽलङ्कारः॥ १४॥

सर्वां नरजातिं सूत्रे मणिमालां प्रज्ञात्यपभेदां धर्मोऽयमुदारः।
तेनाहमजस्रं स्वीयं गरिमाणं मन्ये जगतीत्थं वृद्धिं लभमानम्॥१५॥

सर्वामिति। अयमभिनव उदार विशालहृदय वेदान्तधर्म सर्वां सम्पूर्णां नरजातिं मनुष्यजातिम् अपभेदाम् 'अयं खिस्तमतानुयायी, अयं बौद्ध, मोहम्मदो वा' इत्यादिभेदरहितां सूत्रे मणीनो विविधरत्नानां मालामिव प्रथ्नाति यथ्नातीव सर्वामपि मानवजातिं रत्नमालामिव प्रथितु यदि कश्चिद्धर्मोऽस्ति तर्हि स वेदान्तधर्म एव नापरः कोऽपि धर्म । तेन यस्मान्मया प्रतिपाद्यमानेन वेदान्तधर्मेण जगति अजस्रं निरन्तर स्वीयं स्वकीयं गरिमाणं गुरुत्व वृद्धिं समृद्धिं लभमानं प्राप्नुवन्तं मन्ये। अत्र मणिमालावृत्तम् लक्षणम्—'त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रै' इति ॥ १५ ॥

धर्मा अभिधानैर्भिन्ना प्रभवन्ति स्थानं गमनीयं तेषां परमेकम् ।
गम्यो मनुजानामेक खलु देवो यद्वत्तटिनीनां वारां निधिरेक ॥ १६ ॥

धर्मा इति। अभिधाने नामधेयै भिन्ना विविधा प्रभवन्ति स्वस्वमर्यादासु वर्तन्तो दृश्यन्ते पर तथापि तेषां गमनीय प्राप्य स्थानमीश्वरस्वरूपमेकमेव। मनुजानाम् एक एव देव गम्य प्राप्य, तत्र दृष्टान्त यद्वत् यथा तटिनीनां सरितां कृते एकमेव गम्य स्थान तच वारांनिधि समुद्र । अत्रापि मणिमालानाम वृत्तम् लक्षण पूर्वोक्तमेव ॥ १६ ॥

य इन्द्रवज्रातुल्यवीर्यतेजा महान् भवेत् सज्जनकर्मधर्म ।
स एव दूष्येन पुनर्विमूढै करे कपेऽलातमनर्थहेतु ॥ १७ ॥

य इति। य धर्म सज्जनानां साधूनां वर्म रक्षणसाधनं इन्द्रवज्रमिव अशनिरिव अतुल निरुपम वीर्य तेजश्च बल प्रकाशश्च यस्य एतादृश सन् महान् भवेत्, यथेन्द्रवज्रे महद्बल विद्यते तथैव धर्मेऽपि। य धर्म निर्बल स 'धर्म' इति अभिधानमेव नार्हति। स एव अतुलबलतेज सम्पन्न धर्मविमूढै मूर्खैर्दूष्येत दूषित भवेत्। तत्र दृष्टान्त कपे शाखामृगस्य करे अलातम् अग्निना प्रज्वलित काष्ठम् अनर्थहेतु महत्या आपद कारण भवति तद्वत्। अत्र इन्द्रवज्रावृत्तम् तल्लक्षण 'स्यादिन्द्रवज्रा यदि तौ जगौ ग' इति दृष्टान्तालङ्कार ॥ १७ ॥

विद्वेष सम्प्रदायेष्वतिमलिनमति कूपमण्डूकवृत्ति
धर्मान्ध्यं व्यर्थकर्माण्यनुचितविनयोऽन्योन्यसंघर्षतर्ष ।
श्रेयान् स्वार्थो नितान्तं विषविषमफल सर्वतश्चाविवेको
रक्षास्येतानि चक्रुर्धिरत्नमवनिं पङ्किला रक्तपातै ॥ १८ ॥

विद्वेष इति। एतानि वक्ष्यमाणानि रक्षांसि राक्षसा दुष्टभावना इत्यर्थ । अवनिं महीं रक्तपातै युद्धजनितरक्तप्रवाहै पङ्किलां दूषितां चक्रु कृतवन्त, विविधानि धर्मयुद्धानि केवलविश्वशान्तिविनाशार्थमेव प्रवृत्तानि। के ते राक्षसा इत्याह—सम्प्रदायेषु ईश्वरप्राप्तिसाधनभूतेषु विविधमार्गेषु विद्वेष अन्योन्यद्वेषभावना इत्येको राक्षस अतिमलिनमति कलुषितविचारपरम्परा, कूपमण्डूकवृत्ति सङ्कुचितदृष्टि, धर्मान्ध्य सर्वानखिलान्धर्मान्विनाश्य स्वधर्मस्यैव महत्त्वस्थापनप्रयत्न, व्यर्थकर्माणि निष्प्रयोजनानि कार्याणि; अनुचित विनय विशिष्टो नय विनय अनुचित अयोग्य राजनीत्यादिनियम वस्तुतस्तु 'वय जीवाम यूयमपि जीवत' अयमेव राजनीतिनियम श्रेयान् तन्तु न केऽप्यनुसरन्ति, अन्योन्यसंघर्षतर्ष परस्परकलहाभिलाष स्वार्थ स्वप्रयोजनमेव नितान्तम् अत्यन्त श्रेयान् वर तथा विषमिव विषम भयङ्कर फल परिणाम यस्य एतादृश अविवेक सदसद्विचार-

राद्वित्थम् इत्येते ते राक्षसा ये निखिलमपि भूमण्डलं नाशयितुं प्रवृत्ता भवन्ति। अत्रापि स्रग्धरावृत्तम् लक्षणं तूक्तम् ॥ १८ ॥

स्थिरसंस्कृतिराशु निपीडिता तदनु साध्वसतश्च चला स्थिरा।
हृदि शान्तिरदर्शनतामिता ननु कुतोऽप्यधुना हरिणप्लुता ॥

स्थिरसंस्कृतिरिति। अनेन उपर्युक्तसम्प्रदायविद्वेषादिदुर्गुणैः यदा रक्तपातोऽजनि तदा परिणामतः तात्कालपर्यन्तं स्थिरा संस्कृतिः आशु सत्वरमेव निपीडिता बहुविधान्तरायाक्रान्ता अभूत्। तदनु तदनन्तरं च साध्वसतः भयाद्धेतोः स्थिराऽचलापि पृथिवी चलेव जाता पृथिव्यां किमपि स्थिरतरं नावशिष्टम्। हृदि मनसि विद्यमाना शान्तिः अधुना सर्वस्वस्यास्थिरतया हरिणस्य प्लुतमिव प्लुतं पलायनं यस्या एतादृशी सती कुतोऽपि अज्ञातस्थाने अदर्शनतामिता। जगति सर्वत्र अशान्तिसाम्राज्यमेव प्रसृतम्। अत्र हरिणप्लुता नाम अर्धसमवृत्तम्। तल्लक्षणम् 'सयुगात् सलघू विषमे गुरुर्युजि नभौ भरकौ हरिणप्लुता' इति। उपमालङ्कारश्च ॥ १९ ॥

भृशमवनिरियं विपत्परीता रुचिरतराऽजनि धन्वतुल्यसंस्था।
प्रबलपवनतोऽतिशुष्कपत्रा हरितदला नु लतेव पुष्पिताग्रा ॥

भृशमवनिरियमिति। अस्मादेव धर्मतत्त्ववैपम्याद्धेतोः इयमवनिः भूमण्डलं विपद्भिः अनेकविधदुःखैः परीता आवृता अभूत् या पृथिवी पूर्वं रुचिरतरा सुन्दरतरा आसीत् सा अधुना धन्वतुल्यसंस्था मरुस्थलसमानावस्था जाता। तत्र दृष्टान्तमाह—यथा पूर्वं हरितानि हरितवर्णानि दलानि पत्राणि यस्याः पुष्पितं सुमनोभिरावृतम् अग्रं यस्याः विकसितकुसुमपरिवृता लता प्रबलपवनतः बलवता मरुता हेतुना शुष्काणि आर्द्रतारहितानि पत्राणि दलानि यस्या एतादृशी जायते। अत्र पुष्पिताग्रा नाम अर्धसमवृत्तम्। तल्लक्षणम्—'अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति। दृष्टान्तश्चालङ्कारः ॥ २० ॥

तदधिकमुदयं समीहमानै रजनिचरो मतवैरितास्वरूपः।
सपदि नरवरैर्विनाशनीयः फलति यतः समये कृतः प्रयासः ॥ २१ ॥

तदधिकमिति। तत् तस्मात् स्वस्वराष्ट्रस्य अधिकाधिकम् उदयं समृद्धिं समीहमानैः अभिलपद्भिः अयं मतवैरितास्वरूपः अन्योन्यधर्मद्वेषाख्यः रजनिचरः राक्षसः नरवरैः वीरपुरुषैः सपदि सत्वरं विनाशनीयः हन्तव्यः। धर्मविद्वेषः परित्यक्तव्यः। यतः यस्मात् कारणात्। समये योग्यसमये कृतः प्रयासः प्रयत्नः फलति सफलः भवति। अत्रापि पूर्वोक्तमेव पुष्पिताग्रा वृत्तम्। अर्थान्तरन्यासश्चालंकारः ॥ २१ ॥

न धर्मपरिवर्तनाच्च च निजेष्टहानादपी-
तरानुकरणाच्च वा न च परस्य दोषोक्तितः।
शिवं समधिगम्यतेऽन्यगुणसंग्रहारम्भतो
ह्ययं नरसमुन्नतेर्जगति पुण्यमार्गो महान् ॥ २२ ॥

न धर्मेत्यादि। धर्मपरिवर्तनेन हिन्दूनां क्रिश्चधर्मप्रवेशेन वैधर्मीत्वेन वा, निजं यदिष्टं यत्पूजनीयादिप्रतीकं तस्य परित्यागेन वा इतरेषामनुकरणेन तथा अन्यधर्मीयाणां

दोषोद्घाटनेन वा शिवं कल्याणं नाधिगम्यते। केनोपायेन तर्हि तदुपलभ्येत अन्येषां ये ग्राह्या गुणा मत्यार्हिमादय तेषां संग्रहात् स्वीकारादेव। अयमेव नरसमुदायः मानवसमूहे जगति संसारे महान् पुण्य सर्वोत्तम पवित्र मार्ग प्रसिद्ध नेतर। अत्र पृथ्वीवृत्तम् लक्षणमुक्तमेव ॥ २२ ॥

अन्याध्वस्य शुभगुणनिचयं संगृह्णंस्तद्वितरणचतुर।
कुर्याद्धर्मो भ्रमरविलसितं येनोर्वी स्यात् सुरभिपरिमला ॥

अन्याध्वस्य इति। धर्मं अन्याध्वस्य स्वधर्मादितरमार्गस्य शुभानामनुकरणीयानां गुणानां निचयं समूहं संगृह्णन् ग्रहणशीलो भवन् अनन्तरं च तेषां सद्गुणानाम् अन्यमार्गानुसारिभ्योऽपि वितरणे प्रदाने चतुरः कुशलश्च सन् (धर्मं) भ्रमरविलसितं भ्रमरकार्यं कुर्यात् यथा भ्रमरः विविधपुष्पेभ्यो रसं संगृह्य अन्येभ्यो वितरति तद्वत् येन परगुणसंग्रहपूर्वकं तेषां गुणानाम् अन्येभ्यो वितरणेन च सम्पूर्णा पृथ्वी सुरभिपरिमला सद्गुणपुष्पसुगन्धपरिपूरिता स्यात्। अत्र भ्रमरविलसितं वृत्तम्। 'म्भौ न्लौ ग स्याद् भ्रमरविलसितमि' ति ॥ २३ ॥

'यहोव' वंशस्थमिदं महत्तरं यतोऽस्म्यहं हिन्दुरतोऽन्यतो वरः।
ममैव कूपो जलधेर्बृहत्तरो विडम्बनं केवलमध्यसंतते ॥ २४ ॥

यहोवेत्यादि। इदं वस्तु 'यहोव'वंशस्य 'यहोवा' भिधा यहूदीनामुपास्यदेवता तस्य वंशे तिष्ठति 'यहोव'वंशस्थं यहोवदलीयमत एव अन्यस्मात् वस्तुनः महत्तरम् अधिकतरसम्मानपात्रम्, यतः यस्मात् कारणात् अहं हिन्दुधर्मीयः अस्मि तस्मादन्यधर्मीयाद्वर समीचीनतर। एव मम कूप जलधेरपि समुद्रादपि बृहत्तरः विस्तृततर इत्यादिवचनानि केवलं सङ्कुचितां दृष्टिं प्रदर्शयन्ति। अतः तानि अध्वसन्तते विविधधार्मिकमार्गाणां केवलं विडम्बनं कलुषीकरणमात्रम्। धर्ममार्गे सङ्कुचिता दृष्टिः कदापि नोचिता इत्यर्थः। अत्र वंशस्थं नाम वृत्तम्, लक्षणं तु 'जतौ तु वंशस्थमुदीरितं जरौ' इति ॥ २४ ॥

विहाय कार्पण्यमतो विहायसा समां समालम्ब्य परामुदारताम्।
विचार्यतां मानवजातिरेकिका नार्था जगत्यामुपजातिलक्ष्ये ॥

विहायेति। अतः अस्मात् कारणात् यत सङ्कुचितदृष्टिः हानिकारिका अतः युष्माभिः सम्पूर्णा मानवजातिः एकिका अभिन्ना विचार्यतां मन्यताम्। किं कृत्वा कार्पण्यं सङ्कुचितदृष्टिस्वरूपं विहाय परित्यज्य अथ विहायसा आकाशेन समां तुल्याम् उदारतां विस्तृतां मतिं समालम्ब्य आश्रित्य। जगत्याम् इदानीं पृथिव्याम् उपजातीनां विविधजातीनां भेदलक्षणे न कोऽपि अर्थः प्रयोजनम्। सम्पूर्णा मानवजातिरेकैव इति विचारणीयम्। अत्र इन्द्रवज्रोपेन्द्रवज्रोभयलक्षणयुक्तमुपजातिवृत्तम्। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति इन्द्रवज्रा तथा 'उपेन्द्रवज्रा जतजास्ततो गौ' एतद्लक्षणद्वयलक्षणान्वितमुपजातिनामकं षोडशप्रकारं वृत्तं भवति ॥ २५ ॥

प्रत्यक्षं शाश्वतं यत् प्रकटयति पुनर्जीवितं मानवानां
ज्ञानादज्ञानसान्द्रं पशुमपि मनुजं द्राक्करोति प्रभावात्।
तं साक्षादीश्वरेऽयं विपरिणमयति स्वेन्द्रजालादिवान्ते
धर्मः किं किं न कुर्याज्जगदुपकृतये कल्पवृक्षेण तुल्यः ॥ २६ ॥

प्रत्यक्षमिति । धर्मः कल्पवृक्षेण कल्पतरुलतया तुल्यः समानः जगदुपकृतये संसारस्योपकारार्थं किं किं न कुर्यात् जगत्कल्याणार्थं यद्यदावश्यकं तत्सर्वमपि कर्तुमलमित्यर्थः। किं किं करोतीत्याह—मानवानां मनुष्याणां यच्छाश्वतम् अनाद्यनन्तं जीवितं ननु केवलं पार्थिवं मर्यादितं च जीवितम् प्रत्यक्षं प्रकटयति। मनुष्यस्याध्यात्मिकमनाद्यनन्तत्वं यः प्रकटयितुं समर्थः स एव धर्म इत्यर्थः। स्वप्रभावात् अज्ञानसान्द्रं पशुवत् स्थितं मनुजमपि ज्ञानात् ज्ञानप्रकाशात् द्राक् सपदि मनुजं करोति ज्ञानशून्यः मानवः पशुतुल्य एव ज्ञानेनैव स मानवश्रेणीमारोहति। अनन्तरम् एतादृशं मानवम् इन्द्रजालादिव इन्द्रजालविद्ययेव तं ज्ञानिमानवं साक्षादीश्वरे विपरिणमयति ईश्वरेण सार्धं तस्य मानवस्य तादात्म्यमपि विधातुं समर्थः भवति। अत्र स्रग्धरावृत्तम्, लक्षणं तूक्तमेव। उपमालङ्कारश्च ॥ २६ ॥

धर्मैः सर्वैः स्तूयते देव एकः सर्वव्यापी यो विराण्णामधेयः।
मार्गैर्भिन्नैः शालिनी तस्य कीर्तिस्तत्पूजायाः सार्वभौमश्च पन्थाः ॥२७॥

धर्मैरिति। जगति विद्यमानैः सर्वैः अपि धर्मैः एक एव देवः स्तूयते प्रार्थ्यते वा सर्वव्यापी सर्वत्र विद्यमानः तथा 'विराट्' इति नामधेयं यस्यैतादृशः। भिन्नैर्मार्गैः धर्मापरपर्यायैः तस्यैव सर्वव्यापिनः विराण्णामकस्य कीर्तिः यशः शालिनी जगति शोभमाना विद्यते। एक एवेश्वरः विविधैर्मार्गैः पूज्यते इति तस्यैव माहात्म्यम्। तस्येश्वरस्य पूजायाः सार्वभौमः सार्वत्रिकः पन्थाः मार्गः भिन्नशब्दैः केवलमभिधीयते। शालिनीवृत्तम्। 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ २७ ॥

सच्चिज्जीवेशसेवा गुणि विगुणि पुनर्द्वैतमद्वैतमैशं
रूपं मार्गानुरूपं विविधमभिदधत्साकृता मानवानाम्।
सामञ्जस्यं समेषामनिशमिह पथां शान्तिसौख्यस्वरूपः
सत्याहिंसाप्रधानो जगति विजयते विश्ववेदान्तधर्मः ॥ २८ ॥

कः सः सार्वभौमः पन्था इत्याह—सच्चिदानन्दस्वरूपः यः जीवरूपी ईश्वरः तस्य सेवा शिवज्ञानपूर्वकम् ईश्वरज्ञानेन सार्धं मानवमात्रस्य सेवा, ऐशं रूपम् ईश्वरस्य स्वरूपं गुणि सगुणं, विगुणि निर्गुणं, द्वैतं पूज्य-पूजकभावविशिष्टम्, अद्वैतं निर्गुणोपासनाप्रधानम्, एवं विविधमार्गानुकूलं विविधप्रकारेण अभिदधत् प्रकटीकुर्वन्, मानवानां जगति विद्यमानानां सर्वेषामपि मनुष्याणां आकूतां बन्धुत्वं च अभिदधत्, तथा, इह समेषां सर्वेषां पथां धर्ममार्गाणां सामञ्जस्यं समन्वयमपि अभिदधत्, शान्तिस्वरूपः सौख्यस्वरूपः आनन्दस्वरूपश्च सत्यम् ऋतम् अहिंसा च प्रधाने यस्मिन् एतादृशः अयं मम संदेशस्वरूपः विश्ववेदान्तधर्म एव सर्वधर्मसाधारणः सार्वभौमः पन्थाः ॥ २८ ॥

द्वैतं जापानशिन्तोः सुगतमतमतो दुःखनाशः सशून्यो
जैनानां केवलित्वं गगनगतपिता खैस्तलोकस्य पूज्यः।
कौराणोऽल्ला दयार्द्रोऽप्यहुर इति महाब्जेन्दुगश्चीनताचो
सर्वं वेदान्तधर्मे यदि भवति पुनः कोऽन्यधर्मावकाशः ॥ २९ ॥

द्वैतं जापानेत्यादि। जापानदेशीयाः शिन्तोमतानुसारिणः 'शिन्तोशब्दार्थः ईश्वरप्राप्त्युपायः 'कामिनोमीची' इति शिन्तोशब्दस्य पर्यायः 'कामी'ति ईश्वरः तस्य मार्गः अस्मिन्

मार्गे प्राप्यप्रापकभावसत्त्वेन अयं द्वैतमार्ग इति कथ्यते, वेदान्तमार्गे च एतादृशद्वैतमार्गस्यान्तर्भावः भवति। सुगतमतमत सशून्य दुःखनाश बौद्धमतानुसार 'सर्वं दुःखमय जगत् संसारश्च अस्तित्वशून्य' इति यदुच्यते तदपि वेदान्तमते 'ब्रह्म सत्यं जगन्मिथ्या' संसार दुःखकारणम् इत्युक्तत्वात् बौद्धमतस्याप्यत्रान्तर्भावः भवत्येव। जैनानां केवलित्वम् जैनमते 'मति, श्रुति, अवधि, मनःपर्याय केवलित्वम्' इति ज्ञानस्य पञ्च सोपानानि अभिहितानि तत्र केवलित्वं नाम सर्वज्ञत्वं तत्सोपानारूढः केवली सर्वज्ञ इत्युच्यते वेदान्तमतानुसारम् आत्मा सर्वज्ञस्वरूप इति केवलित्वमपि वेदान्तेऽन्तर्हितम्, खिस्तानां पूज्य पूजनीयः गगनतलगत पिताऽपि सगुणद्वैतमतानुसार पूज्यपूजकभावसत्त्वेन उपासनापरपर्यायवेदान्तसोपाने विद्यते। एवं कुराणोक्त 'अल्लाह' दयालुरपि द्वैतप्रकार एव। पारसीकानां 'ज़ेन्द आवस्ता ग्रन्थे प्रतिपादित 'अहुरमज्दा' महानीश्वरोऽपि हिरण्यगर्भसदृश एव एवं यदि सर्वमपि वेदान्तधर्मे सनातनवैदिकधर्मे विद्यत चेत् तर्हि धर्मकलहनिवारणसमर्थे समन्वयस्वरूपे विश्ववेदान्तधर्मे अन्यधर्मावकाशः नास्त्येव। अतः अयं वेदान्तधर्म एव विश्वधर्मपदवीमारोढुं समर्थः। अस्मिञ्छ्लोके स्रग्धरावृत्तं तस्य लक्षणं पूर्वमेव ॥ २९ ॥

ध्रुवं धर्मस्येयं प्रसरति पुरोच्चैः **शिखरिणी**
द्रुतं कीर्तिर्मन्ये धवलयति पूर्णां च जगतीम्।
न वा हिन्दुः खिस्तो न च पुनरयं मुस्लिमपथो
न बौद्धो वा तेषां प्रभवति समष्टिः पुनरसौ ॥ ३० ॥

ध्रुवमिति। अस्य नवविश्ववेदान्तधर्मस्य शिखरिणी उन्नता कीर्तिः द्रुतं सत्वरमेव पुरा प्रसरति प्रसरिष्यति सा च सर्वत्र प्रसृता वेदान्तधर्मकीर्तिः पूर्णां सम्पूर्णां जगतीं विश्वं धवलयति धवलीकरिष्यतीत्यर्थः इति अहं मन्ये। अयं नववेदान्तधर्ममार्गः न हिन्दुमार्गः न वा खिस्तमार्गः न चापि मुस्लिममार्गः न वा पुनर्बौद्धमार्गः परमसौ पन्था सर्वेषां मार्गाणां समष्टिस्वरूपः सामञ्जस्यमयः। अतः सर्वैरपि स्वस्वमतमपरित्यज्यापि अनुसर्तव्यः भवति। अत्र शिखरिणी वृत्तम्। तल्लक्षणं 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' ॥ ३० ॥

अति **वेगवती** खलु वीचिः साम्यरसैर्नवधर्मपयोधेः।
अधुना न महीमखिलां किं प्लावयितुं परितो भवितालम् ॥ ३१ ॥

अतिवेगवतीति। अस्य नवधर्मपयोधेः नवीनवेदान्तधर्मरूपिणः महासागरस्य अतिवेगवती वीचिः महान् तरङ्गः साम्यरसैः समन्वयस्वरूपैः रसैः सर्वैरपि स्वीकार्यैः आस्वाद्यरसैः परितः सर्वतः अखिलामपि महीम् सर्वमपि भूमण्डलम् आप्लावयितुं यथा जलसमृद्ध्या सर्वं जगत् जलमयं जायते तद्वत् इयं बलवती वेदान्तधर्मवीचिः अधुना सर्वमपि जगत् स्वप्रभावेण पूरितं करिष्यति इत्यत्र नास्ति सन्देहः। अत्र वेगवती नाम अर्धसम-वृत्तम्। लक्षणं 'सयुगात् सगुरू विषमे चेदिह वेगवती युजि भाद्गौ' इति ॥ ३१ ॥

धर्मोऽयं प्रसृतयशा उदारवीनः सर्वेषामपि भविता नृणामभीष्टः।
जायेताखिलजगतां **प्रहर्षिणी**य वाण्येषाऽस्मविततथा भवेन्नितान्तम् ॥

धर्मोऽयमिति। अयं नवीनः सनातनधर्मापरपर्यायः वेदान्तधर्मः जवाद्‌तिवेगात् प्रसृतं विस्तीर्णं यशः एतादृशः सन् सर्वेषामपि नृणां विविधमार्गानुसारिणां कृते अभीष्टः अनुकरणीयः स्यात्। एतादृशनवधर्मानुसरणद्वारा धार्मिककलहाभावेन अखिलजगती सम्पूर्णः संसारः 'प्रहर्षिणी'आनन्दयुक्ता जायेत भविष्यति। एषा मम भविष्यद्‌वाणी अरं सत्वरमेव नितान्तमत्यन्तम् अवितथा सत्यस्वरूपा भवेत् भविष्यति। अत्र प्रहर्षिणीवृत्तम्। 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति तल्लक्षणम् ॥ ३२ ॥

इह हि मनुजस्यान्त्यं लक्ष्यं जगत्पतिरुच्यते
विषयपदवीमध्यारूढोऽमृतं न समश्नुते।
अनुमृगतृषं धावन्ती काऽऽप्नुते **हरिणी** जलं
प्रभवति महान् धर्मो नेतुं नरं परमं परम् ॥ ३३ ॥

इह हीति। इह अस्मिन् संसारे अन्त्यं लक्ष्यं प्रापणीयं स्थानं जगतां पतिर्विश्वपतिः केवलमीश्वर एव एकः विद्यते। परन्तु यः मानवः केवलं विषयपदवीं शब्दस्पर्शादिपाञ्च-भौतिकविषयाणां पदवीं मार्गमध्यारूढः स इदममृतरूपमीश्वरपरं न समश्नुते न प्राप्नोति। अत्र दृष्टान्तमाह—का हरिणी मृगतृषमनु धावन्ती मरीचिकामनुसरती जलमाप्नुते। एतत्समर्थनार्थमन्यं विशेषमाह—केवलं महान् धर्म एव नरं मनुष्यं परमम् उत्तमं पदं नेतुं प्रापयितुं प्रभवति समर्थो भवति। अत्र हरिणीवृत्तम्। विकस्वरोऽलङ्कारश्च। वृत्तस्य लक्षणम् 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति ॥ ३३ ॥

वैज्ञानिकाविष्कृतिमात्रमस्मिन् कथं जगत्यर्हति सभ्यताख्याम्।
मनुष्यजातौ कियतीश्वरस्य व्यक्तिः प्रमाणं किल सभ्यतायाः ॥ ३४ ॥

वैज्ञानिकेत्यादि। केवलं वैज्ञानिकाविष्कृतिमात्रम् विज्ञानस्य सहायेन विहिता या विविधा आविष्कृतिः विद्युद्‌आकाशवाणीसदृशी 'सभ्यता' इति आख्याम् अभिधानं कथम् अर्हति न कथमपीत्यर्थः। केवलमाविष्कारपरम्परया सभ्यतापरिमाणं ग्रहीतुं न शक्यते किं तर्हि? मनुष्यजातौ ईश्वरस्य कियती कियत्परिमाणा व्यक्तिः आविष्कृतिः सभ्यतायाः प्रमाणं भवितुमर्हति। समाजे यावती मनुष्ये ईश्वरस्य सत्ता व्यक्तीभविष्यति तावानेव ■ समाजः सभ्योऽसभ्यो वा गण्यते। तामीश्वरव्यक्तिं विना तु समाजः कियानप्याविष्कार-समृद्धः स्यात् सः असभ्य एव। अत्रोपजातिवृत्तं पूर्वोक्तम् ॥ ३४ ॥

धर्मं विना विश्वसमाजवर्गो भवेदरण्यं पशुभिर्विकीर्णम्।
भोगा विलासा न मनुष्यधर्मा ज्ञानं परं जीवनलक्ष्यमुच्चैः ॥ ३५ ॥

धर्मं विनेति। सर्वस्मिन् विश्वस्मिन् समाजवर्गः धर्मं विना पशुभिः मृगैः विकीर्णं परि-पूर्णम् अरण्यमिव गहनमिव भवेत् भविष्यति। केवलं भोगा विषयभोगाः विलासाश्च पशु-धर्मा न मनुष्यधर्माः परं ज्ञानमेव उच्चैः सर्वोत्तमं मनुष्यमात्रस्य जीवनस्य लक्ष्यं प्राप्तव्यं वस्तु अस्ति ॥ ३५ ॥

धर्मस्यालौकिकः **श्लोको** यः पशुर्येन नरायते।
नराश्चापीश्वरायन्ते विना धर्मं नरः पशुः ॥ ३६ ॥

धर्मस्येति। धर्मस्य श्लोकः कीर्तिः यशः अलौकिकः दिव्यः यतः येन धर्मेण पशुरपि

नरायते नरोभवति। तथा अनेनैव धर्मेण नरा ईश्वरस्वरूपिणो भवन्ति। अत सत्यमेवा-भ्यत धर्मं विना नर पशुसमान ॥ ३६ ॥

अधिनरं किल दिव्यरुचेर्बलं निहितमस्ति निरन्तरमव्ययम्।
द्रुतविलम्बितमस्य तु दर्शनं समधिगच्छति धर्मसमाह्वयम्॥

अधिनरमिति। अधिनर नरस्यान्तरे यत् दिव्यरुचे विश्वप्रकाशस्य बल शक्ति अव्ययम् अनन्त निरन्तर नित्य निहितमस्ति स्थापित विद्यत। अस्य दिव्यबलस्य दर्शनं साक्षात्कार स द्रुत भवतु योग्यतानुसारत विलम्बित चिरकालेन यथा तथा भवतु स आध्यात्मिकशक्तिसाक्षात्कार एव 'धर्म समाह्वयम् धर्म इति समधिगच्छति आख्यां लभते। उक्तं च 'मानवे मानवे माया दिव्यता यादिता स्थिता। प्रकटीकरणं तस्या धर्म इत्युच्यते बुधै'। इति ॥ ३७ ॥

नोच्चैर्वादा नापि सिद्धान्तधारा नाप्यस्माकं चारुनानामतानि।
धर्मं किन्तु स्वानुभूतेर्यथास्ति किञ्चतस्या कार्यजाते प्रकाश ॥ ३८ ॥

नोच्चैर्वादा इति। उच्चैर्वादा केवलमुच्चैर्वचनानि धर्मं न नापि विविधानां सिद्धान्तानां धारा प्रवाह धर्मसंज्ञां लभते नापि अस्माकं मनोहराणि चित्ताकर्षकाणि विविधमतानि धर्म इत्युच्यन्ते, अपि तु स्वात्मानुभूति आत्मसाक्षात्कार ईश्वरस्वरूपोऽहमित्याकारक प्रत्ययानुभव तथा एतादृशसाक्षात्कारस्य नित्यकार्येषु प्रकाश प्रकटीकरण धर्मसंज्ञां लभते। अत्र शालिनीवृत्तम् लक्षणमुक्तम् ॥ ३८ ॥

स्नेह सम्पूर्णसंसार स्थितप्राणिषु निर्मल।
उदारता तथा तेषु धर्मस्य निकष स्मृत ॥ ३९ ॥

स्नेह इति। सम्पूर्णसंसारस्थितप्राणिषु यावज्जीवेषु निर्मल निःस्वार्थ स्नेह प्रेम तथा तेषु प्राणिषु तै सहैश्वर्य। उदारतोया व्यवहार धर्मस्य निकष शुद्ध अशुद्धो वा इति ज्ञानार्थं कषपाषाण इव स्मृत बुधै। अत्र अनुष्टुप श्लोकवृत्तम् ॥ ३९ ॥

यूयं सर्वेऽमृतपुत्रा महान्तोऽवाप्तुं चार्हा अमृतत्वोर्मिं यथार्थाम्।
कोऽलं वक्तुं ध्रियते पापिनो व पूर्णान् दिव्यानतिशुद्धान् पवित्रान् ॥ ४० ॥

यूय सर्वे इति। सर्वेऽपि यूयम् अमृतस्य पुत्रा अनाद्यन्तस्वरूपा अत एव महान्त मर्यादाशून्या सर्वव्यापिन इत्यर्थ। अत एव यथार्थां सत्यस्वरूपाम् अमृतोर्मिम् अमरत्वस्य तरङ्गम् ईश्वरत्वमित्यर्थ। अवाप्तुम् अर्हा योग्या। व युष्मान् प्रति 'यूयम् पापिन अपवित्रा' इति वक्तुम् अलं समर्थ क अत्र ध्रियते न कोऽपीत्यर्थ। यदा यूय सर्वे दिव्या अतिशुद्धा अत्यन्तपवित्रा स्थ एतादृशान् युष्मान् कोपि पापिन वक्तु नालम्। अत्र वातोर्मिनाम वृत्तम् 'वातोर्मीयं कथिता म्भौ तगौ ग' इति ॥ ४० ॥

धर्मो बहुर्भारतवासिपार्श्वे वृथा समुद्धारकथाऽस्ति तेषाम्।
चर्चास्य निर्माणमुपेक्षितव्य चर्चाऽन्नदाने क्रियतां भवद्भि ॥ ४१ ॥

धर्मो बहुरिति। भारतवासिनां पार्श्व हिन्दूनां समीपे धर्मं बहु अत्यधिक वर्तते तस्याद्यावधिपर्यन्त वितरणे कृतेऽपि स अद्यापि परिपूर्ण एव भारते वर्तते। भारतम् अन्यजनेभ्यो धर्मदान कदापि नापेक्षते। अत भारतीयानां खिस्तधर्मे परिवर्तनस्य कथा

वार्ता वृथैव निरर्थिकैव। भारते गत्वा अत्रत्यमिशनरीजनैः तत्र चर्चस्य गिरिजामन्दिरस्य निर्माणमपि निरर्थकम् तर्हि पाश्चात्यैः किं कर्तव्यम्। भवद्भिः पाश्चात्यैः भारतीयेभ्यः दारिद्र्यपीडितेभ्यः केवलमन्नदानचर्चा कर्तव्या न कदापि धर्मदानविचारः। अत्र शालिनी वृत्तम् ॥ ४१ ॥

हिन्दूनां ब्रह्म साक्षा'दहुर' इति मतो जूरथुस्त्रीय'मज्दा'
बौद्धानां बुद्धदेवोऽप्यहतिमुपदिशन् मुस्लिमानां तथाऽल्ला।
खिस्तानां स्वर्गतातां जनवृजिनहरो याहुदो वा यहोवा
सर्वे वोऽस्याः सभाया ददतु बलममी साधुसाफल्यसिद्ध्यै ॥४२॥

हिन्दूनामिति। हिन्दूनां भारतीयानां साक्षात् प्रत्यक्षं ब्रह्म, जूरथुस्त्रीयेण पारसीकनायकेन जूरथुस्त्राख्येन पूजितः अहुरमज्दा अर्थान्महेश्वरः, अहतिं 'अहिंसा परमो धर्मः' इति उपदिशन् बौद्धमतावलम्बिनां बुद्धदेवः, मुस्लिमानां पैगम्बरानुयायिनाम् अल्लाह्, खिस्तानां स्वर्गतातः स्वर्गपिता यः जनवृजिनहरः मनुष्यकृतपापपरिहारकर्ता, याहुदः यहुदीधर्मावलम्बिभिः पूजितः यहोवा देवः एते सर्वेऽपि एतस्या महत्या धर्मसभायाः सम्यक्तया साफल्यसिद्ध्यै सफलताप्राप्तये वः युष्मभ्यं पर्याप्तं बलं शक्तिं ददतु वितरन्तु। अत्र स्रग्धरावृत्तम् लक्षणं तूक्तमेव ॥ ४२ ॥

ते प्रोचुः स्वुष्ठु कीर्तिः प्रसरति भुवने याब्दैर्यतिगुरोः
साऽस्मिन्नेवाह्नि प्रदीप्ताऽह्नि निखिलसदोदेशे तडिदिव।
यत्रायं दक्षवक्ताऽजनि मतकथकान् व्यर्थं प्रहिणुम-
स्तत्रैवा-नारतं चेत् स्वमतमदयुक्तातान् धिङ् नो जडधियः॥ ४३ ॥

ते प्रोचुरिति। ते अमेरिकावासिनः स्वामिनः वचांसि निशम्य प्रोचुः या कस्यचिद्गुणपद्वोः कीर्तिः भुवने अब्दैः कतिपयवर्षाभ्यन्तरे सुष्ठु प्रसरति सा कीर्तिः अस्य यतिगुरोः यतिशिक्षकस्य एकस्मिन्नेव दिने निखिलसदोदेशे सम्पूर्णेऽमेरिकाप्रदेशे अस्मिन्नेव एकस्मिन्नेवाहनि तडिदिव विद्युदिव प्रदीप्ता प्रकाशिता। यत्र देशे भारते एतादृशः दक्षः कुशलः वक्ता अजनि उत्पन्नः तत्र वयम् अनारतं निरन्तरं मतकथकान् खिस्तधर्मप्रचारकान् व्यर्थमेव निरर्थकमेव प्रहिणुमः प्रेषयामः तर्हि स्वमतमदयुतान् स्वधर्ममहत्तागर्वितान् जडधियः मूर्खान् अस्मान् धिक्। भारतेऽस्माकं धर्मप्रचारकप्रेषणं सर्वथाऽनुचितमित्यर्थः ॥ ४३ ॥

यत्सभाधिकारिणः स्वमानसे फलं न्यधुर्विरुद्धमेव
तस्य व्यत्ययमत्र वेदधर्मगौरवं तु साधितं बुधेन।
तद्विवेकभाषणं निशम्य पाश्चिमात्यकोविदा अतीव
साद्भुता बभूवुरांग्लवाक्प्रभुत्वमस्य चानुवीक्ष्य तत्र ॥ ४४ ॥

यत्सभाधिकारिण इति। अस्यां धर्ममहासभायां सभाधिकारिणः स्वमानसे यत्फलं न्यधुः स्थापयामासुः 'अनया सभया खिस्तधर्मस्यैव जगति प्रभुत्वं स्थापितं भविष्यति' इत्याकारकं परिणामं प्रतीक्षमाणा अतिष्ठन् तस्य विपरीतमेव फलं वृत्तमभूत्। किं तत् बुधेन महता पण्डितेन स्वामिना तु वेदधर्मगौरवं सनातनवैदिकधर्मगौरवमेव साधितं

प्रमाणीकृतमासीत्। तत् तादृशं धर्मविषयकं विवेकपूर्णं विवेकानन्दस्य भाषणं वक्तृतां निशम्य श्रुत्वा पाश्चिमात्यपण्डिता अतीव अत्यधिकं साद्भुता आश्चर्ययुक्ता जाता तथाऽस्य स्वामिनः आंग्लवाक्प्रभुत्वम् आंग्लभाषाकुशलत्वं चानुवीक्ष्य अवलोक्य साद्भुतान्तःकरणा जाता। अत्र 'वृत्तनामकमेव वृत्तम् यदुक्तम्' 'श्री रवौ गद्यौ भवेदिदेतेन लक्षणेन वृत्तनाम' इति ॥ ४४ ॥

स्वागताय सकला अधिमञ्चं स्वामिने स्मि बभूवुरभीक्ष्णम्।
उत्सुका कलकलैरथ हूतः सोऽपि तत्र समुपस्थित आसीत् ॥ ४५ ॥

स्वागतायेति। अधिमञ्चं धर्मसभामञ्चोपरि सकलाः सभासदः अभीक्ष्णं पुनः पुनः स्वामिने स्वागताय उत्सुकाः बभूवुः जाता आसन्। कलकलैः हस्ततालिकादिभिरुत्पादितैः कलकलैः उच्चशब्दैः आहूतः सोऽपि विवेकानन्दोऽपि मञ्चं परि उपस्थित आसीत्। एतावान् तेषां मनसि अमेरिकावासिनां समादरः अभूत् ॥ ४५ ॥

श्रुतयतिलघुवाक्छिकागोसभा प्रमुदितवदना यथाऽजायत।
तदितरवचनैस्तथाल्पामपि प्रमुदमुपगता न तैर्विस्तृतैः ॥ ४६ ॥

श्रुतयतिलघुवागिति। शिकागोसभा तस्याः सभायाः सदस्या इत्यर्थः। श्रुता आकर्णिता यतेः स्वामिनः लघ्वी अल्पा वाक् यया एतादृशी प्रमुदितम् आनन्दितं वदनं यस्याः एवम्भूता यथा अजायत तथा तादृशी विस्तृतैरपि अतिदीर्घैरपि इतरेषां वचनैः भाषणैः अल्पामपि स्तोकामपि प्रमुदमानन्दं नोपगता। अत्र प्रमुदितवदना नाम वृत्तम् 'प्रमुदितवदना भवेन्नौ जरौ' इति तल्लक्षणम् ॥ ४६ ॥

नासौ विलिख्य वचनानि परं स्वभावाद् धाराप्रवाहमधुरैर्वचनैर्बभाषे।
सन्मन्दिरेषु गिरिजासु सभासु चास्य व्यक्तित्वसंविदनुशासनमाविरासीत् ॥

नासाविति। असौ स्वामी पत्रोपरि टिप्पण्यादिभिर्वचनानि विलिख्य यथा इतरवक्तृभिः कृतमासीत् न बभाषे न व्याजहार परं स्वभावतः एव धाराप्रवाहिभिः मधुरैः वचनैर्भाषणानि दत्तवान्। तस्य व्यक्तित्वं वैयक्तिकयोग्यता, संविद् ज्ञानस्य अनुशासनम् उपदेशश्च सतां सज्जनानां मन्दिरेषु, गिरिजासु प्रार्थनास्थलेषु साधारणलोकसभासु च आविरासीत् प्रकटीबभूव। अत्र वसन्ततिलकं वृत्तम् ॥ ४७ ॥

विलोक्य तामतिरुचिरां यतेस्तनुं
सदोगता क्वचिदपि सभ्यसज्जना।
निजां मुदं प्रकटयितुं समुत्थिता
अयं ध्रुवं किमपि पुनर्वदेदिति ॥ ४८ ॥

विलोकयतामिति। मञ्चोपरि यतेः स्वामिनः ताम् अतिरुचिरां सुन्दरां तनुं शरीरं विलोक्य अवलोक्य सदोगता सदसि स्थिता सज्जना क्वचिदपि कुत्रापि सर्वत्रेत्यर्थः। निजां स्वकीयां मुदं हर्षं प्रकटयितुं प्रदर्शयितुं स्वस्थानात् समुत्थिता किमर्थम्—अयं ध्रुवं निश्चयेन पुनः किमपि वदिष्यति इति कृत्वा। अत्र 'अतिरुचिरा नाम वृत्तम्, 'चतुर्ग्रहैरतिरुचिरा जभस्जगाः'। अमेरिका-वार्तापत्रेषु स 'रक्तवर्णकञ्चुक' 'पीतवर्णशीर्षावरण', 'कृष्णवर्णनेत्र' 'रक्तोष्ठ', 'अतीवाकर्षक' 'वाक्प्रभावात' इति वर्णितः ॥ ४८ ॥

उद्वेजितं चेदितरोक्तिसंकटैः सदःप्रभुर्घोषयति स्म तत्क्षणम् ।
अन्ते यमी किञ्चन वक्तुकामनो जातं च तूष्णीं किल सभ्यवृन्दकम् ॥४९॥

उद्वेजितमिति । यदि सभ्यवृन्दकं सदस्यनिकुरम्बम् इतरेषां वक्तॄणाम् उक्तिसंकटैः अरुचिरोक्तिभिः उद्वेजितं तदा सदःप्रभुः सभासंचालकः तत्क्षणं घोषयामास यदुत सभासमाप्त्यनन्तरं स्वामी किञ्चन वक्तुकामः एकं लघुभाषणं दास्यति । श्रुतमात्र एतास्मिन् वचने सकलमपि सभ्यवृन्दं तूष्णीं मौनं जातम् । अत्र वंशस्थेन्द्रवंशामेलनात्मकमुपजातिवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' तथा 'स्यादिन्द्रवंशा ततजैरसंयुतैः' । तस्य भाषणानि अमेरिकायां 'धर्मविषयेऽस्माकं मतभेदः' 'भारतस्य समस्या अन्नं न धर्मः' 'हिन्दुधर्मः, वेदान्तश्च' 'बौद्धधर्मः' 'ज्ञानयोगः' 'कर्मयोगः' 'राजयोगः' इत्यादिविषयेषु जातानि ॥ ४९ ॥

उपनिषदां मतं नवभुवि प्रसारयत्
समजनि भारतं मुनिगिरा जगद्गुरुः ।
अतनु विधातुमद्य जगतः **प्रभद्रकं**
पददलिताऽपि नः खलु मही महीयसी ॥ ५० ॥

उपनिषदामिति । भारतं मुनिगिरा मुनेः स्वामिनः गिरा वाण्या उपनिषदां मतमद्वैतमतं नवभुवि अमेरिकायां प्रसारयत् प्रचारयत् सत् जगतः गुरुः आचार्य इव समजनि जातम् । नः अस्माकम् इयं मही भारतभूः अद्य जगतः विश्वस्य अतनु अतिमहत् प्रभद्रकं कल्याणं विधातुं पददलितापि पारतन्त्र्यनिगडसंदानिताऽपि महीयसी पूजनीया गुरुस्थानीया समजनि ॥ ५० ॥

अमेरिकातो निजहिन्दुबन्धून् प्रति स्वयं प्रेषितवान् प्रवृत्तिम् ।
प्रायोऽत्र लोका धनमानभोगाः सक्ता परं धर्मविचारशून्याः ॥ ५१ ॥

अमेरिकात इति । स यतिः अमेरिकातः तस्माद्देशात् निजहिन्दुबन्धून् प्रति स्वयं प्रवृत्तिम् सन्देशं प्रेषितवान् कीदृशीम् अत्र अमेरिकायां लोकाः जनाः प्रायः बहुशः धनासक्ता मानासक्ता भोगासक्ताश्च परं धर्मविचारशून्या धार्मिकजिज्ञासाशून्या मया दृष्टा इति अमेरिकातः स्वामिना आलासिङ्गानामकशिष्यं प्रति बहूनि पत्राणि प्रेषितानि आसन् । तेभ्यः पत्रेभ्यः तत्रत्यवार्ताधिगम्यते । उपजातिवृत्तम् ॥ ५१ ॥

देशे महान् डालर एव शक्तिस्तिरस्क्रियन्ते धनिभिर्दरिद्राः ।
हन्यः पशुर्वन्य इवादिवासी द्वेषेण नव्यैः करुणादरिद्रैः ॥ ५२ ॥

देश इति । अस्मिन् देशेऽमेरिकायां महान् महत्त्वपूर्णः डॉलर एव एतन्नामकमुद्रैव शक्तिर्विद्यते धनिभिः जनैः दरिद्राः निःस्वाः तिरस्क्रियन्ते । अत्र आदिवासी तत्रत्य 'रेड इण्डियन' इति विदितः जनः द्वेषेण नव्यैः उपनिवेशकर्तृभिः करुणादरिद्रैः निर्दयैः वन्यः पशुरिव हन्यः हननयोग्यः मन्यते । उपजातिः 'अत्रत्यख्रिस्तधर्मानुयायिनः केवलं धनलोलुपा न यथार्थतया ख्रिस्तमतावलम्बिनः' इति तेन भारते प्रेषितपत्रं लिखितमासीत् ॥५२॥

विचारशीलास्तु नवप्रकाशं प्राप्तुं स्थिता भारतदत्तनेत्राः ।
परं वयं संकुचितान्तराः स्मः परस्परं हा कलहायमानाः ॥ ५३ ॥

विचारशीला इति । इत्थं यतेऽपि येऽत्र विचारशीला ज्ञानपिपासवः सन्ति ते नवप्रकाशम् आध्यात्मिकोन्नतिसाधनं प्राप्तुं भारतदत्तनेत्रा भारते दत्ते नेत्रे यैः अस्मद्देशविनिहितहृदय स्थिता सन्ति । परं वयं कीदृशाः ? वयं सङ्कुचितम् आन्तरं येषां सङ्कुचितहृदय सन्तः, हा इति खेदे, केवलं परस्परं कलहायमानाः समयं यापयामः । अत्रापि उपजातिरेव वृत्तम् ॥ ५३ ॥

एषां चित्ते धर्मज्ञानं गाढं हृत्वा मन्ये वाढम् ।
विद्युन्माला तीव्रां दीप्तिं वेदोऽस्माकं कर्तुं शक्तः ॥ ५४ ॥

एषां चित्ते । एषाममेरिकावासिनां चित्ते मानसे विद्यमानं गाढं निबिडं धर्मज्ञानं धर्मविषयकमज्ञानमबोधं हृत्वा तत्र तेषां मनःसु अस्माकं वेदः विद्युन्मालामिव तीव्रां दीप्तिं ज्ञानप्रकाशं कर्तुम् उत्पादयितुं शक्तः समर्थः इति अहं वाढं निश्चितं मन्ये ॥ ५४ ॥

जगतोऽनयताऽघटनान्तरिकं परमं ध्रुवमीश्वररूपमयम् ।
श्रुतिरस्य समग्ररहस्यविधेः प्रकटीकरणेऽत्र समर्थतरा ॥ ५५ ॥

जगत इति । जगतः संसारस्य अनयता अनादित्वम् अयभावः अयता तस्या अभावः अनयता अनादिता तस्य जगतः अघटना अस्ति तदा आन्तरिकं परमं ध्रुवम् अत्यास्मतत्त्वं यदीश्वररूपमयं विद्यते । अस्य समग्रस्यापि रहस्यस्य गूढस्य प्रकटीकरणे श्रुतिः अस्माकं वेदः समर्थतरा अतिसमर्था आस्ते । वेदस्तु ज्ञानमयः तत्र तु सर्वासामपि समस्यानां यथोचितं समाधानं दृश्यते । अत्र तोटकं नाम वृत्तम् 'इह तोटकमम्बुधिसैः प्रथितम् ॥५५॥'

श्रुतश्रौततत्त्वा यथार्थं कृतार्था भुजंगप्रयातं विहाय स्वकीयम् ।
इमे सत्वरं सारसारल्यपूर्णं चरिष्यन्ति धर्मस्य पन्थानमित्थम् ॥ ५६ ॥

श्रुतश्रौततत्त्वा इति । श्रुतं श्रौतं श्रुतिविहितं तत्त्वं तथ्यं यैः एतादृशाः सन्तः अमेरिकावासिनः कृतार्था भविष्यन्ति स्वकीयम् आत्मीयं भुजङ्गप्रयातं वक्रमार्गेण गमनं विहाय परित्यज्य इमे सत्वरं सारपूर्णं सारल्यपूर्णं सरलतायुक्तं च धर्मस्य पन्थानं मार्गं चरिष्यन्ति अनुसरिष्यन्ति । श्रुतिविहितवेदान्तमार्गानुसरणेनैव सर्वे सुखिनः भविष्यन्ति । अत्र भुजङ्गप्रयातं वृत्तम् । "भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः" ॥ ५६ ॥

अभिनवपथकेतोरंशुकान्तेऽङ्किताऽस्ते
नरविहितसमीची मालिनी शानुशास्ति ।
सहकृतिरविरोधः स्वीकृतिर्नो विनाशो
मनसि चिरतरास्तां धर्मशान्तिर्न वादः ॥ ५७ ॥

अभिनवेत्यादि । अस्य अभिनवपथकेतोः नूतनवेदान्तधर्मपताकायाः अंशुकान्ते कर्पटोपरि नरैः अखिलैः मनुष्यैः विहिता कृता समीच्या पूजाया माला परम्परा यस्या एतादृशी ईशानुशास्ति परमेश्वरस्य आज्ञा सर्वलोकसम्मता ईश्वरस्याज्ञा पताकांशुके लिखिता दृश्यते का सा 'सहकृतिः परस्परसहकारः न तु विरोधः' 'स्वीकृतिः अन्यसत्तत्त्वाङ्गीकारः न तु तद्विनाशः परित्यागो वा' तथा 'मनसि चिरतरा धर्मशान्तिः धार्मिकी शान्तिः न तु धर्मविवादः' ॥ ५७ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
हिन्दीवाङ्नवनृत्यनाटककृता दिक्चन्द्रसर्गे महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गो दशाङ्को गतः ॥ ५८ ॥

इति त्र्यम्बकसूरिविरचिते विवेकानन्दचरिते नाम महाकाव्ये
शिकागोधर्मसभा नाम दशमः सर्गः ॥ १० ॥

लोकमिति । लोकमित्यादि धर्मप्रधानाश्रये इत्यन्तं पूर्ववत् । हिन्दी-भाषायां नवीनानि नृत्यनाटकानि करोतीति कृता त्र्यम्बकसूरिणा विरचिते महाकाव्ये दशमः सर्गः गतः समाप्तः ॥ ५८ ॥

इति विवेकानन्दचरितमहाकाव्यटीकायां विवेकदीपाख्यायां
दशमः सर्गः ॥ १० ॥



# अथैकादशः सर्गः

त्वम्बोधभासं विकिरन्तमन्त पूर्वीयसूर्यं हरिति प्रतीच्याम् ।
उद्यन्तमालोकयतामिदानीमालोकपूर्णानि मनांस्यभूवन् ॥ १ ॥

त्वम्बोधभासमिति । त स्वामिनम् अन्त लोकानां मनसि बोधभास ज्ञानप्रकाश विकिरन्त प्रसारयन्त पूर्वीयसूर्यं पूर्वस्यां दिशि विद्यमान सूर्यं प्रतीच्यां हरिति उद्यन्त उदय प्राप्नुवन्तम् आलोकयतामीक्षमाणाना मनांसि अन्तःकरणानि इदानीम् आलोकपूर्णानि अभूवन् । अमेरिकावासिनां मनस्सु स्वामिवचनप्रभावेण ज्ञानप्रकाशो जात । उपजातिवृत्तम् ॥ १ ॥

अस्मिन् सर्गे श्लोकानां क्रमश तृतीयाचरणे स्वामिकृतभारतवर्णनात्मक श्लोक सम्पद्यते । तद्यथा—

'धर्मस्याधारभूमि प्रभवपदमिद मित्यशो दर्शनानां
नानावीरै सुधीरैरविरतभवनात् स्वरितकालादनादे ।
विश्वप्रेमप्रकर्षे प्रकृतिमधुरिमा मार्दवं भावनानां
मेमिर्लोकस्य कर्तुं प्रभवति सतत मेऽतु भारत न ॥" इति

सत्कर्मणा यतेरेते मेनिरे तत्त्वसंविदि ।
'भारत गुरुरस्माकं न कदापि घृणास्पदम्' ॥ २ ॥

सत्कर्मणेति । एते अमेरिकावासिन 'तत्त्वसंविदि तत्त्वज्ञानविषये भारतमस्माकं गुरुराचार्यं न कदापि घृणास्पद तिरस्कारविषय ' इति मेनिरे विचारयामासु ॥ २ ॥

न कस्याप्यान्तरमानन्दपदं सञ्जायते जयात् ।
स्वबन्धोर्दलितस्यापि दूरदेशे प्रवासिन ॥ ३ ॥

न कस्येति । कस्य भारतीयस्य आन्तरमन्तःकरण दलितस्यापि पराधीनस्यापि स्वबन्धो स्वदेशीयस्य स्वामिन दूरदेशे अमेरिकायां प्रवासिन प्रवास कुर्वाणस्य जयात् विजयेन आनन्दपद सुखास्पद न सञ्जायते । सर्वेऽपि भारतीया स्वामिन विजयेन सानन्दा जाता ॥ ३ ॥

श्रुतवार्ता स्म मन्यन्ते भारतीया स्वगौरवम् ।
निद्रामुद्रा निरस्यात्मविश्वासमवलम्बिता ॥ ४ ॥

श्रुतवार्ता इति । श्रुत्वा स्वामिन विवेकानन्दस्य विजयवार्ता वै एतादृशा भारतीया अस्मिन् विषये स्वगौरव मन्यन्ते स्म ततश्च भारतीया ये अद्य यावत् निद्रावस्थायामासन् ते स्वकीयां निद्राया कृतां मुद्राम् अक्षिनिमीलन निरस्य आत्मविश्वासमवलम्बिता आश्रितवन्त ॥ ४ ॥

विश्वासरहिता 'मूढा' असभ्या मूर्तिपूजका ।
हिन्दव समजायन्त विश्वे सभ्यतमा क्षमा ॥ ५ ॥

विश्वासरहिता इति । ये हिन्दवः पूर्वं विश्वासशून्याः मूढाः मूर्खाः असभ्याः सभ्यतारहिताः, मूर्तिपूजकाः प्रस्तरमूर्तिसपर्यारताः आसन् त एव अधुना विश्व संसारे अतिसभ्याः समर्थाश्चाभवन् ॥ ५ ॥

योऽत्राभूदस्य सम्मानो भारतस्यैव स ध्रुवम् ।
स्वयमासीत् परं खिन्नो मातृभूमेर्दशावशात् ॥ ६ ॥

योऽत्राभूदिति । स्वामिनः अत्र अमेरिकायां यः सम्मानः अभूत् न खलु स स्वामिनः सम्मानः अपि तु ध्रुवम् निश्चयेन भारतस्यैव सम्मानो जातः । परं स्वामी स्वमातृभूमेर्वर्तमानामवस्थामवलोक्य खिन्नः आसीत् ॥ ६ ॥

क्व भूमिः सम्पदामस्मि भूजनन्याः क्व दुर्दशा ।
सोऽब्रवीद्धनिभिर्दानमानाभ्यामत्र पूजितः ॥ ७ ॥

क्व भूमिरिति । सोऽब्रवीत् अत्रामेरिकायां सम्पदाम् आस्पदम् अत्रत्यलोकेभ्यो धनसंग्रहणपरः क्व, क्व च मम मातृभूमेः दुर्दशा ? यतः अहमत्रत्यैर्धनिभिः दानेन धनदानेन संमानेन च पूजितः ॥ ७ ॥

इह प्रभूतमर्थं यल्लब्धवान् सर्वतो भ्रमन् ।
निरीहः प्रेषयामास विभक्तुं तत्तदर्थिषु ॥ ८ ॥

इहेति । इह स्वामी अत्र देशे सर्वतः सर्वत्र भ्रमन् यत्प्रभूतम् अर्थं धनं लब्धवान् लेभे निरीहः वित्तैषणाशून्यः तत् तदर्थिषु धनप्रार्थिषु विभक्तुं विभागं कर्तुं वितरितुमित्यर्थः । भारते प्रेषयामास प्रेषितवान् ॥ ८ ॥

केचिद् भक्तास्तु संन्याससदीक्षाग्रहणतत्पराः ।
केचित्तेन सहायातुं भारतं प्रतिजज्ञिरे ॥ ९ ॥

केचिदिति । केचित् पाश्चात्यभक्ताः स्वामिनः ज्ञानोपदेशैः हृदयाकृष्टा अभूवन् एते संन्यासदीक्षाग्रहणतत्परा जाताः, अपरे तु स्वामिना सह भारतमागन्तुमपि वचनं दत्तवन्तः गृहीतसंन्यासदीक्षा अमेरिकावासिनः 'अभयानन्द' 'कृपानन्द' इत्यादिनामभिः प्रसिद्धाः ॥

धर्मवक्ताऽयमासादि सुदैवादिति भारतम् ।
प्रति प्रकटयामासुर्मनसा ते कृतज्ञताम् ॥ १० ॥

धर्मवक्तेति । अस्माभिः अयं धर्मवक्ता धर्मोपदेशकः सुदैवादेवासादितः प्राप्त इति ब्रुवन्तः ते भारतं प्रति स्वमनसा कृतज्ञताम् उपकारं प्रकटयामासुः ॥ १० ॥

परस्परं कलेरेतैर्वैयर्थ्यमवधारितम् ।
स्वामिनो धर्मवाक्सारैः सर्वाशङ्कानिवारकैः ॥ ११ ॥

परस्परमिति । एतैरमेरिकावासिभिः परस्परम् अन्योन्यं कलेः कलहस्य वैयर्थ्यं निरर्थकत्वमवधारितम् निश्चयेन ज्ञातम् । केन सर्वासामाशङ्कानां सन्देहानां निवारकैः परिहारकर्तृभिः स्वामिनः धर्मवाक्सारैः धार्मिकवचनतत्त्वैः ॥ ११ ॥

ते पत्न्यां प्रयान्तश्चेद् दृष्टवन्तः कञ्चिदविम् ।
अवतार्य शिरोभूषां तेषां भक्तिमदर्शयन् ॥ १२ ॥

ते पदव्यामिति । ते नवजगद्विवासिनः गच्छन्त यदि पदव्यां मार्गे क्वचित् यतिं दृष्टवन्त अवालोकयन् स्वशिरोभूषां हैटनामिकामवतार्य हस्तेन अधो विधाय स्वभक्तिं श्रद्धाम् अदर्शयन् प्रकटयामासुः ॥ १२ ॥

सुधामिष्टं वचस्तस्य मुखचन्द्राद्विनिःसृतम् ।
पातुं प्रहरपर्यन्त तूष्णीमासन् समाहिताः ॥ १३ ॥

सुधामिष्टमिति । तस्य यते मुखचन्द्रात् वदनसुधांशो निःसृत सुधामिष्ट सुधामधुर वचन पातु सादर श्रोतु समाहिता शान्तिपूर्वक प्रहरपर्यन्तमपि तूर्णी मौनमासन् स्थिताः ॥ १३ ॥

समक्षं केचनाज्ञत्या विरोध कर्तुमुद्यताः ।
परं स्वयमेवैरेव तर्जिता परुषाक्षरैः ॥ १४ ॥

समक्षमिति । केचन अज्ञतया पाताळवासिन स्वामिन विरोधं तत्प्रतिपादितमतविरुद्ध मत प्रदर्शितुम् उद्यता अपि तेषामेव बान्धवै परुषाक्षरैस्तर्जिता अभवन् ॥ १४ ॥

नाध्वन्येन श्रुतिधर्मस्य स्वामिनस्तस्य केवलम् ।
पुरावृत्त-समाजादिशास्त्रेषु प्रतिभा बभौ ॥ १५ ॥

नाध्वनीति । तस्य स्वामिन प्रतिभा केवल श्रुतिधर्मस्य श्रुतिप्रतिपादितवेदान्तधर्मस्य अध्वनि मार्गे, न बभौ दीप्ता अभूत् अपि तु सर्वेष्वपि पुरावृत्तसमाजादिशास्त्रेषु सैव प्रतिभा प्रकटीबभूव ॥ १५ ॥

यावत्सम्मेलने दृष्टा शक्तिर्हिन्दुधर्मस्य तावती ।
सर्वेषामपि धर्माणां नेति तैरुररीकृतम् ॥ १६ ॥

यावतीति । अत्र धर्मसम्मेलने हिन्दुधर्मस्य यावती शक्ति प्रभाव स्वामिवचनपरिणामस्वरूप ईक्षिता अवलोकिता तावती शक्ति सर्वेषां धर्माणां मिलितानामपि न दृष्टा इति तै सर्वै उररीकृतम् स्वीकृतम् ॥ १६ ॥

परं शोच्या दशा जाताऽधुना धर्मस्य भारते ।
अध्यात्मं शुद्धिशक्तिर्नस्त्यक्त्वा दूरमितो गते ॥ १७ ॥

परमिति । परमधुना भारते धर्मस्य शोच्या शोचनीया दशाऽवस्था जाताऽजनि । अस्य अध्यात्मज्ञान शुद्धिशक्ति इतरान् शुद्धाञ्ज्ञानयुक्तान् कर्तुं या हिन्दुधर्मस्य शक्ति रासीत् तदुभयमपि न अस्मान् त्यक्त्वा विहाय इत अस्मात् स्थानाद् दूर गते ॥ १७ ॥

महोदधिं परित्यज्य गर्तेऽल्पे सजले वयम् ।
नित्यं नाशोन्मुखा नित्य वृथैव विवदामहे ॥ १८ ॥

महोदधिमिति । वय महोदधि महासमुद्र परित्यज्य विहाय अल्प स्तोक जल यस्मिंस्तादृशे गर्ते एव नित्य निरन्तरं नाशोन्मुखा नाशप्रवणाः सन्त वृथैव निरर्थकमेव विवदामहे कलहप्रवृत्ता स्म ॥ १८ ॥

आदर्शज्ञानमुत्सृज्य प्राप्यास्थि कापि नीरसम् ।
विस्मृतात्मस्वरूपाः स्मः कुक्कुराः कलहप्रियाः ॥ १९ ॥

आदर्शेत्यादि । आदर्शज्ञानं सर्वैरप्यनुकरणीयमाध्यात्मिकज्ञानमुत्सृज्य विहाय कापि नीरसम् निरर्थकम् अस्थिखण्डमुपलभ्य 'के वयम्' इति न जानन्तः विस्मृतात्मस्वरूपाः केवले तुच्छवस्तुप्राप्तिपूर्वकं कुक्कुराः श्वान इव विवदामहे ॥ १९ ॥

वयं नार्या न चाचार्या न च वेदान्तनिर्मलाः ।
नापि पौराणिकाः सर्वे केवलं 'स्पृश मा' वयम् ॥ २० ॥

वयमिति । आधुनिकभारतीया वयं न आर्याः, 'कृण्वन्तो विश्वमार्यमि'ति तत्त्वं विस्मृतवन्तः कथं वयमार्याः ? न च विश्वं प्रति धर्मज्ञानप्रचारं कुर्वन्तः आचार्या अपि न, वेदान्तविचारेण निर्मलान्तःकरणा ज्ञानिनोऽपि न, किं तर्हि केवलं 'मां मा स्पृश' इत्येव लक्षणयुक्ता वयम् एतादृशानस्मान् धिक् इति भावः । आधुनिकहिन्दूधर्मः न यथार्थतया ज्ञानमार्गः । परं 'मां मा स्पृश' इत्याकारक एव । एतादृशः धर्मस्तु केवलं 'चौकागृहे' एव वर्तते ॥ २० ॥

बन्धूनां तेन सन्दिष्टमतो भारतवासिनाम् ।
उत्तिष्ठतालमस्माकं निद्रया कलहेन वा ॥ २१ ॥

बन्धूनामिति । अतः वयमतीव संकुचितदृष्टयः संजाता अतो हेतोः तेन स्वामिना बन्धूनां स्वदेशबान्धवानां सन्दिष्टम् पश्चिमविश्वतः उपदिष्टम् किमुपदिष्टम् 'हे भारतीयाः उत्तिष्ठत अस्माकं भारतीयानां निद्रया स्वापेन कलहेन परस्परकलिना वा अलं कृतमि'ति ॥

रुग्णानां निःस्वमूर्खाणां सेवा सेवेशितुः परा ।
भवतोद्यमिनो नित्यं भारतोद्धारकारणात् ॥ २२ ॥

रुग्णानामिति । रुग्णानां रोगाक्रान्तानां निःस्वानां निर्धनानां मूर्खाणां निरक्षराणां सेवैव ईशितुः परमेश्वरस्य सेवा । युष्माभिरपि एतादृशी सेवा कर्तव्या । तथा यूयं भारतोद्धारकारणात् भारतस्योद्धारार्थं नित्यमुद्यमिनः उद्योगशीला भवतेति ॥ २२ ॥

प्राप्तानां गौरवं पूर्वमपूर्वमयि बान्धवाः ।
विश्वं प्रतीक्षतेऽदो वः सहायं कलिनाशनम् ॥ २३ ॥

प्राप्तानामिति । अयि भारतीयबान्धवाः सुहृदः पूर्वं पुरा काले अपूर्वम् अभूतपूर्वं गौरवं गुरुत्वं प्राप्तानामधिगतानां वः युष्माकं सहायम् अदः इदम् विश्वं प्रतीक्षते प्रतीक्षमाणं तिष्ठति ॥ २३ ॥

कांश्चिद् वीक्ष्य द्विषद्भावान् मुनेर्नोत्कण्ठितं मनः ।
गजो धीरगतिर्गच्छेत् पार्श्वयोर्भषतां शुनाम् ॥ २४ ॥

कांश्चिदिति । अत्र पाताले कांश्चित् तत्रत्यजनान् द्विषद्भावान् द्वेषपूर्णमनसः वीक्ष्य पुनस्तस्य स्वामिनः मनः मानसं नोत्कण्ठितं न विचलितम् । तत्रार्थान्तरन्यासमाह—गजः धीरा भयरहिता गतिः गमनं यस्यैतादृशः गच्छेत् पार्श्वयोः उभयतः भषतां शब्दायमानानां शुनां सतामपि । अनादरे षष्ठी ॥ २४ ॥

सत्कारैरपि तैरेषोऽखिलैरासीत् प्रपूजितः ।
राजयोगाभिधे ग्रन्थेऽमेरिकायां प्रकाशिते ॥ २५ ॥

सत्कारैरिति । अमेरिकायां तस्य स्वामिन 'राजयोग' इत्याख्य ग्रन्थे प्रकाशिते सति तत्र अखिलै योगसत्कारै आदरै पूजित सम्मानित आसीत् ॥ २५ ॥

मनस्तु सर्वतो नृणा वृद्धि यात समादर ।
यत सस्करणान्यस्य मुद्रितानि पुन पुन ॥ २६ ॥

मनस्तु इति । तादृश स्वामिनि अमेरिकावासिना मनस्तु समादर वृद्धि यात अधिकाधिक ववृधे कस्मात् यत अस्य राजयोग नाम्न ग्रन्थस्य पुन पुन अनेकानि सस्करणानि मुद्रितान्यभूवन् ॥ २६ ॥

महान् धीतत्त्वतत्त्वज्ञो भारतेऽभूत् पतञ्जलि ।
योगशास्त्रं प्रणीतं यत् तेन केनोपमीयते ॥ २७ ॥

महानिति । भारते पतञ्जलिर्नाम महान् धीतत्त्वतत्त्वज्ञ मानसशास्त्रप्रणेता अभूत्, तेन प्रणीत लिखित योगशास्त्र केनोपमीयते न केनापि अद्वितीयं तन्मानसशास्त्रमित्यर्थ । पाश्चात्यमानसशास्त्रानुसार मन एव आत्मा मनस अतिरिक्तम् आत्मा नाम न किमपि पृथक्तत्त्व विद्यते, पर भारतीयमानसशास्त्रानुसार मन पाञ्चभौतिकम् । मनस अपवादेनैव आत्मसाक्षात्कारसम्भव इति वेदान्तसिद्धान्त ॥ २७ ॥

तदेवाह—

यच्चैः प्रत्यगुद्भूतैरात्मसाधारणं मतम् ।
तन्मनो योगशास्त्रेऽस्मिन् केवलं पाञ्चभौतिकम् ॥ २८ ॥

यच्चैरिति । यत् मन प्रत्यगुद्भूतै पाश्चात्यविद्वद्भि आत्मसाधारणमात्मस्वरूपं मत उच्यते तन्मन अस्मिन् पातञ्जलयोगशास्त्रे केवल पाञ्चभौतिक मतम् ॥ २८ ॥

यत्परं तत्त्वमाख्यातं तदात्मेऽभौतिकं परम् ।
तेनेश्वरस्य सयोगो योगस्योद्देश्यमुत्तमम् ॥ २९ ॥

यत्परमिति । य परम् आत्माख्य तत्त्व तदभौतिक तेनात्मतत्त्वेन सह ईश्वरस्य संयोग एव योगशास्त्रस्य उत्तमम् उद्देश्य कथ्यम् ॥ २९ ॥

मनो विचलितं यावन्नैकाग्र्यं तत् समश्नुते ।
असाध्यं तावदद्वैतं जीवात्मपरमात्मनो ॥ ३० ॥

मन इति । यावत् कालपर्यन्त मन मानस विचलित चञ्चलमस्थिर तथा ऐकाग्र्यम् एकाग्रतां न समश्नुते, तावत् वेदान्तसाध्य जीवात्मपरमात्मनोरैक्यम् असाध्यमेव साधितु अशक्यमेव ॥ ३० ॥

वृत्तिरस्य निरोद्धव्या प्राणायामादिसाधनै ।
चित्तशुद्धि विनाऽत्यन्त कार्यं किमपि दुष्करम् ॥ ३१ ॥

वृत्तिरस्यति । अस्य मनस वृत्ति विषयचिन्तनात्मक व्यापार प्राणायामादिसाधनै

अष्टाङ्गयोगसोपानैः निरोद्धव्या अवरोधविषयीकर्तव्या। यतः चित्तशुद्धिं विना किमपि कार्यम् अत्यन्तं दुष्करम् अतः मनसः निर्मलत्वं विषयवृत्तिराहित्यमावश्यकम् ॥ ३१ ॥

प्राणस्तथा शरीरेऽस्मिन् विचारबलरूपवान्।
बहिर्या महती शक्तिः सूर्यश्चन्द्रादि चालयेत् ॥ ३२ ॥

प्राणस्तथेति। तथा अस्मिञ्शरीरे आन्तरिकः प्राण इत्यर्थः। विचारबलरूपवान् सदसद्विचारशक्तिस्वरूपः चैतन्यमयः। स एव प्राणः शरीराद् बहिर्विद्यमानः सूर्यचन्द्रादिकं चालयेत् स्वस्वकक्षासु भ्रामयेत्। 'अत एव प्राणः' इत्यस्मिन् ब्रह्मसूत्रे प्राण एव ब्रह्म इति प्रतिपादितम्। शरीराभ्यन्तरे स एव चैतन्यमयः कूटस्थस्वरूपः बहिश्च सर्वव्यापी। एक एव उपाधिभेदाद्भिन्न इव भाति ॥ ३२ ॥

अयमन्तःस्थितो नाडीमाध्यमेनास्ति कारकः।
विभज्य पञ्चधाऽऽत्मानमेकः सन् बहुधा भवेत् ॥ ३३ ॥

अयमन्तरिति। अयं प्राणः शरीरान्तःस्थितः सन् नाडीमाध्यमेन इडापिङ्गलोभयनाडीसहायतः कर्तृस्वरूपं लभते आत्मानं च पञ्चधा विभज्य प्राणापानोदानव्यानसमानसंज्ञाः लभमानः एकः सन्नपि बहुधेव भवति ॥ ३३ ॥

सुमेर्वन्तः स्थिता नाड्यस्तिस्रो मध्ये सुषुम्णिका।
इडापिङ्गलयोः प्राणायामेन नियतिर्द्वयोः ॥ ३४ ॥

सुमेर्वन्तरिति। शरीराभ्यन्तरे यः मेरुदण्डः शरीराधारभूतः तस्य मेरुदण्डस्याभ्यन्तरे तिस्रः नाड्यः सन्ति। पार्श्वयोः इडा पिङ्गला तयोश्च मध्ये सुषुम्णिका सुषुम्णानाम्नी मध्यनाडी, प्राणायामद्वारा पूरककुम्भकरेचकात्मना प्राणायामप्रक्रियया द्वयोः पार्श्वस्थयो नाड्योः नियतिः नियन्त्रणं कर्तुं शक्यते ॥ ३४ ॥

यमनात् पार्श्वयोरन्तर्भौतिकं सन्नियम्यते।
उपाध्यभावतः प्राणः समर्थः सर्वशक्तिमान् ॥ ३५ ॥

यमनादिति। पार्श्वयोः पार्श्वस्थितयोः इडापिङ्गलानाड्योर्नियमनात् अन्तर्विद्यमानं यत्किमपि भौतिकं पाञ्चभौतिकं विषयविचारादिकं विद्यते तत्सर्वं सम्यक्तया नियम्यतेऽवरुध्यते। एतद्विषयविचारस्वरूपोपाधेरभावात् अन्तःस्थितचैतन्यमयः प्राणः समर्थः दुष्करमपि कार्यं विधातुं समर्थः सर्वशक्तिमांश्च सम्पद्यते ॥ ३५ ॥

एष स्ववपुषा सार्धं प्राणस्त्वष्टाङ्गयोगतः।
अन्येषामपि देहानां नियन्तुं प्रभवेद् ध्रुवम् ॥ ३६ ॥

एष इति। एष प्राणः अष्टाङ्गयोगतः प्राणायामादिसाधनैः न केवलं स्ववपुः स्वशरीरमेव नियच्छति अपि [redacted] स्वशरीरेण सार्धम् अन्येषाम् इतरव्यक्तीनां देहानां ध्रुवं निश्चयेन नियन्ता भवति नियमनं कर्तुं समर्थः भवति ॥ ३६ ॥

प्राणोऽस्ति ब्रह्मणो रूपं चैतन्यापरनामकः।
नरोऽनन्तगुणं कृत्वा यं स्वयं गच्छतीशताम् ॥ ३७ ॥

प्राणोऽस्तीति । अय प्राण' चैतन्यापरनामक' चैतन्यस्वरूप सर्वव्यापिन' ब्रह्मण एव रूपम् विद्यते य नर अनन्तगुण सर्वशक्तिमन्त निधाय ॥ ( नर ) स्वयमेव ईशतो नियन्तृत्व गच्छति रमते ॥ ३७ ॥

एवं क्रमाद्यगत' प्राणो मुक्तो भौतिकबन्धनात् ।
वाह्यप्राणेन तादात्म्यं प्राप्याद्वैतं समश्नुते ॥ ३८ ॥

एवमिति । एवम् अष्टाङ्गयोगरूपनियमनविधिना आन्तरिक प्राण' उपाधिरूपभौतिकविषयचिन्तनबन्धनात् मुक्त बाह्यप्राणेन सर्वव्यापिना तादात्म्यमेकतां प्राप्य अधिगम्य अद्वैत समश्नुते । एतदेव राजयोगस्य प्रधान लक्ष्यम् ॥ ३८ ॥

तदेवाह—

ऐक्यलाभो द्वयोर्ज्ञानयोग इत्युच्यते बुधै ।
यस्मिञ्ज्ञाते जीवनेऽस्मिन् ज्ञातव्यं नावशिष्यते ॥ ३९ ॥

ऐक्यलाभ इति । द्वयो एतयो आन्तरिकबाह्ययो प्राणयो ऐक्यलाभो बुधै 'योग' इत्युच्यते । यस्मिन्नुभययोगात्मके कार्ये सिद्धे न किमपि अन्यज्ज्ञातव्यम् अवशिष्यते ॥३९॥

प्राणादस्ति परं नान्यत्तज्ज्ञाने ज्ञायतेऽखिलम् ।
मृत्पिण्डेन यथा ज्ञातं सर्वं भवति मृन्मयम् ॥ ४० ॥

प्राणादस्तीति । प्राणात् किमपि परम अन्यत् वस्तु न विद्यते 'सर्वं खलु इदं ब्रह्म' यथोच्यते तथैव 'सर्वं खल्विदं प्राण एव' इत्यपि वक्तु शक्यम् । तस्मिन् प्राणे चैतन्ये ज्ञाते विज्ञाते अखिल वस्तुजात बुध्यते यथा एकस्मिन् मृत्पिण्डे ज्ञाते सर्वमपि ज्ञात भवति ॥ ४०॥

स्वज्ञानाध्वन्युपाधेर्योऽन्तराय कायनामवान् ।
तस्मिन् परिहृते द्वैतं भीतभीतं पलायते ॥ ४१ ॥

स्वज्ञानाध्वनि । स्वज्ञानाध्वनि आत्मज्ञानमार्गे कायनामवान् पाञ्चभौतिकशरीरात्मक उपाधेर्य अन्तराय विद्यते तस्मिन्नन्तराये परिहृते त्यक्ते सति द्वैत भीतभीतम् अतिशयभीतियुक्त सत् पलायते अदृश्य भवति ॥ ४१ ॥

देहाद्देः सत्तया जीवो यात्यवच्छिन्नतापदम् ।
केन्द्रं तस्य नु देहेऽस्मिन् परितो यत्क्रमेदयम् ॥ ४२ ॥

देहादेरिति । देहादे देहेन्द्रियमनसां सत्तया जीव जीवात्मा अवच्छिन्नतापदम् मर्यादायुक्तत्वम् याति प्राप्नोति । तस्य जीवस्य अस्मिन् पाञ्चभौतिके देहे शरीरे विद्यते यच्छरीरं परित अय जीवो भ्रमेत् यत्र देह तत्रैवायमपि ॥ ४२ ॥

केन्द्रं विश्वममुष्येदं परिधिर्न परात्मन ।
जीवोऽपि जायते व्यापी नश्वरे विस्मृते चिरात् ॥ ४३ ॥

केन्द्रमिति । अमुष्य सर्वव्यापिन' परात्मन परमेश्वरस्य परब्रह्मण सर्वं विश्वमेव केन्द्र वर्तुलमध्यबिन्दुस्थानम् पर तस्य परिधि मर्यादा न क्वापि वर्तते । यदि सर्वं विश्वमेव

केन्द्रं तर्हि परिधेः अवकाश एव नास्ति। जीवोऽपि ईश्वर इव व्यापी सर्वव्यापी जायते कदा नश्वरे क्षणिके भौतिकप्रपञ्चे चिरात् दीर्घकालानन्तरं विस्मृते सति ॥ ४३ ॥

स्वशाश्वतस्वरूपस्य लाभार्थं प्रयतामहे।
न कोऽप्यधःपथं याति नित्यमूर्ध्वगतिर्नरः ॥ ४४ ॥

स्वशाश्वतेत्यादि। स्वस्य यत् शाश्वतम् अनाद्यनन्तं स्वरूपम् अस्ति वयं सर्वे तस्यैव लाभार्थं प्रयतामहे प्रयत्नं कुर्महे। कस्यामपि अवस्थायां किं न भवेत् न कोऽपि मानवः अधःपथं अधोमार्गं याति यातुमर्हति किं तर्हि नरः नित्यं निरन्तरमूर्ध्वगतिः उन्नतिशीलः न कदाप्यवनतिस्वभावः ॥ ४४ ॥

यतिप्रेरितचित्तास्ते योगसाधनतत्पराः।
यमादिनिरता जाता आत्मदर्शनकाङ्क्षिणः ॥ ४५ ॥

यतिप्रेरितेत्यादि। तेऽमेरिकास्थाः सज्जनाः यतिना स्वामिना प्रेरितानि चित्तानि येषान्ते प्रोत्साहिताः प्राणायामादियोगसाधने तत्परा बभूवुः। यमादिनिरता अहिंसासत्यादियोगशास्त्रोक्तनियमपालनतत्परा अभूवन् यतः ते आत्मदर्शनकाङ्क्षिणः आत्मसाक्षात्काराभिलाषिणः ॥ ४५ ॥

एवं महात्मना लोकान् पाययामास वाक्सुधाम्।
स्त्रीसभाशिक्षणागारप्रार्थनामन्दिरान्तरे ॥ ४६ ॥

एवमिति। एवमित्थं महात्मनाः उदारहृदयः स्वामी स्ववाक्सुधाम् तत्रत्यलोकान् पाययामास श्रावयामास। क इत्याकाङ्क्षायामाह स्त्रीसभासु, शिक्षणागारेषु विद्यालयेषु तथा प्रार्थनामन्दिरेषु च ॥ ४६ ॥

नार्तः प्रतिदिनं दानाद् भाषणानामनेकशः।
समुत्सुकनृणामेष पुरतोऽत्र सहस्रशः ॥ ४७ ॥

नार्त इति। प्रतिदिनं प्रत्यहम् अनेकशः अनेकेषां भाषणानां दानादपि एकस्मिन् दिने एव विविधस्थानेषु उपदेशकार्यं कुर्वन्नपि नार्तः न क्लान्तो जातः कुत्र सहस्रशः समुत्सुकनृणाम् उपदेशं श्रद्धापूर्णां पुरतः न तु एकस्य द्वयोर्वा पुरतः ॥ ४७ ॥

विवेकस्य जयोद्घोषादुल्लासो भारते नृणाम्।
अवाप महतीं वृद्धिं सिन्धुश्चन्द्रोदयादिव ॥ ४८ ॥

विवेकस्येति। अमेरिकायां विवेकस्य स्वामिनः जयोद्घोषात् जयोत्कर्षाद्धेतोः भारते नृणां भारतीयानाम् उल्लासः आनन्दः महतीं वृद्धिम् अवाप प्राप्तः कथम् यथा चन्द्रोदयात् सिन्धुः वृद्धिं प्राप्नोति ॥ ४८ ॥

सहर्षः प्रकटो जातः सभास्विह पुरे पुरे।
इतरेतरसल्लापे वार्तापत्रेषु सर्वशः ॥ ४९ ॥

स हर्ष इति। स भारतीयनृणामुल्लासः पुरे पुरे प्रतिनगरं सभासु, लोकानां परस्परसम्भाषणे तथा वार्तापत्रेषु सर्वशः सर्वत्र प्रकटो जातः दृग्गोचरोऽभवत् ॥ ४९ ॥

सर्वै प्रस्तावमाध्याभिनन्दनपरं जनै ।
प्रेषित सविधे तस्य भारतोत्कर्षलक्षणम् ॥ ५० ॥

सर्वैरिति । सर्वै भारतीयजनै भारतोत्कर्षचिह्नस्वरूपम् अभिनन्दनप्रस्तावमाध्य सर्वानुमतेन पारित कृत्वा स्वामिन समीपे प्रेषित ॥ ५० ॥

समाकृष्टं जगन्नव्यं पुराणं चाधुनाऽमुना ।
अयस्कान्तो ह्यय खण्डान् कर्षत्युभयतो दिशम् ॥ ५१ ॥

समाकृष्टमिति । अमुना स्वामिना नव्यम् अमरिकारूप नवीन जगत् तथा यूरोपिया भिध पुराण च जगत् समाकृष्ट आकर्षणविषयीकृतम् । अत्रार्थान्तरन्यासमाह अयस्कान्त चुम्बकमणि अय खण्डान् लोहशकलान् उभयतोदिश उभयत अपि कर्षति ॥ ५१ ॥

सुप्रीतिं भारते तेऽपि पातालीया अदर्शयन् ।
पूर्वं घृणास्पदादेशाद् ग्राह्य तैरधुना बहु ॥ ५२ ॥

सुप्रीतिरिति । ते पातालीया अमेरिकास्था सज्जना अपि भारते भारतवासिन प्रति सुप्रीतिम् अधिकां प्रेमभावनाम् अदर्शयन् प्रकटयामासु । यत पूर्वं स्वामिगमनात् पूर्वं घृणास्पदात् तिरस्कारास्पदात् भारतात् तै अधुना बहु उपदेशात्मक वस्तु ग्राह्यमासीत् ॥ ५२ ॥

नूनं महात्मभिर्विश्वं विवेकस्वरूपैर्यदि ।
आप्लाव्यते चिरादेव तद्भवेद्भारते रतम् ॥ ५३ ॥

नूनमिति । यदि विवेकानन्दसदृशैर्महात्मभि उपदेशकै आप्लाव्यते व्याप्त भवति चेत् नूनं सर्वमपि विश्वं अचिरादल्पसमयादेव भारते रत आदरयुक्त भवेत् ॥ ५३ ॥

परं च्युतस्वराष्ट्रार्थैर्निजार्थैकपरै कथम् ।
सम्पद्यते जगत्कार्यं यदार्यैऋषिभि कृतम् ॥ ५४ ॥

परमिति । च्युत परित्यक्त स्वराष्ट्रकार्यं जगदुपदेशरूपं यै केवल निजार्थपरै स्वार्थासक्तै अतिमहज्जगत्कार्यं यदतिप्राचीनकाले आर्यैऋषिभि कृतमासीत् तत्कथ सम्पद्यते कर्तुं शक्यते ॥ ५४ ॥

लोकैरित्थं धृतालस्यैरनल्पैर्दयवादिभि ।
न केवलं निजध्वंसो राष्ट्रध्वंसोऽपि साध्यते ॥ ५५ ॥

लोकैरित्थमिति । इत्थ धृतालस्यै निरुद्यमिभि अत्र यै भारतीयै दैववादिभि केवल दैवावलम्बनपरै न केवल निजध्वंस आत्मनाश अपि तु राष्ट्रस्यापि नाश साध्यते ॥ ५५ ॥

महात्मा विजयोत्फुल्लो मातर किमु विस्मरेत् ।
आजुहाव ततो बन्धूञ्जनतोद्बोधनाय्ते ॥ ५६ ॥

महात्मा इति । अथ महात्मा विजयेन उत्फुल्ल अत्यानन्दित स मातर स्वमातृभूमि विस्मरेत् किम् । कदापि न । तत जनतोद्बोधनाय्ते लोकजागरणार्थं स्वबन्धून् भारतमातृ पुत्रान् आजुहाव आमन्त्रयामास ॥ ५६ ॥

पितृमातृगुरुष्वास्तां युष्माकं देवभावना ।
इति श्रुतिश्रुतं तत्र परं योजयतापरम् ॥ ५७ ॥

पितृमात्रिति । पितृमातृगुरुषु युष्माकं सर्वेषां देवभावना देवबुद्धिरस्तु इति 'मातृदेवो भव' 'पितृदेवो भव' इत्यादिना श्रुतिषु श्रूयते परं तत्र युष्माभिः अपरमपि योजनीयम् ॥५७॥

जनार्दनो जनः सेव्यो मूर्खो निःस्वः प्रपीडितः ।
अन्यो यः पूजनं नार्हेद्दीदृग्जनजनार्दनात् ॥ ५८ ॥

जनार्दन इति । जनः नर एव जनार्दनः ईश्वरः सेव्यः सेवितुं योग्यः यः जनः मूर्खः निरक्षरः, निःस्वः दरिद्रः, प्रपीडितः रोगादिपीडितः पददलितो वा । एतादृशजनजनार्दनादन्यः कश्चिदपि भवद्भिः पूजनीयः न विद्यते ॥ ५८ ॥

आर्यवंशो महत्कार्यं कर्तुं जीवति नान्यथा ।
चिरं चेन्निद्रिते तस्मिन् का गतिर्जगतो भवेत् ॥ ५९ ॥

आर्यवंश इति । आर्यवंशः भारतवासिसनातनवैदिकधर्मानुयायी आर्यवंशः जगति महत्कार्यं कर्तुं विधातुं जीवति । तस्मिन् चिरं चिरकालपर्यन्तं निद्रिते सति जगतः का गतिः कीदृशी अवस्था भवेन्न ज्ञायते अतः अत्र यैरार्यवंशीयैर्निरन्तरं जागरूकैर्भाव्यम् ॥५९॥

यथा भारतवासोऽहं तथा संसारसेवकः ।
संदेहकल्पनाजालप्रसरोऽत्र निरर्थकः ॥ ६० ॥

यथेति । प्रत्येकभारतीयः इत्थं चिन्तयेत् । यथाहं भारतवासः भारतवर्षे निवासः यस्यैतादृशः तथाऽहं संसारस्य विश्वस्य सेवकोऽप्यस्मि 'अहं विश्वसेवक' इत्येव भारतवासिना चिन्तितव्यम् । अस्मिन् विषये संदेहकल्पनाजालप्रसरः संशयाः एवं कृते किं भविष्यति इत्याकारका अनेकविधाः कल्पनाः मया तु केवलं भारतसेवकेन भवितव्यं किमर्थं संसारसेवकेन इत्याकारका विचाराः तासां जालं समूहस्तस्य प्रसरः निरर्थकः व्यर्थः । अस्माकं संसारसेवकत्वे भारतसेवकत्वं भवेदेव ॥ ६० ॥

स्वजीवने निश्चितं चेन्मृत्युना ग्रस्यते नरः ।
मातुरुन्नतये कस्मात् साहसं न विधीयते ॥ ६१ ॥

स्वजीवने इति । चेद्यदि नरः मानवः स्वजीवने अद्य श्वो वा मृत्युना ग्रस्यते यमप्राघुणिकः भवति इति निश्चितं तत्तु भविष्यत्येव तर्हि मातृभूमेः उन्नतये समुद्धयर्थं साहसं भयरहितं कार्यं कुतो न विधीयते क्रियते । तदवश्यं विधेयम् ॥ ६१ ॥

निःस्वानान्तु कुटीरेषु भारतं वसति ध्रुवम् ।
तस्मात् सर्वप्रयत्नेन कार्यस्तेषां समुद्धृतिः ॥ ६२ ॥

निःस्वानामिति । आधुनिकं भारतं ध्रुवं निश्चयेन निःस्वानां दरिद्रदलितानां कुटीरेषु भग्नगृहेषु वसति विद्यते, अतः सर्वैः प्रयत्नैः एतेषां दरिद्रदलितानां समुद्धृतिः उद्धारः कार्यः ॥ ६२ ॥

अवन्यामत्र सर्वेऽपि नराः सन्ति परात्मनः ।
रूपाणीति विभाव्यैषां सेवास्तु भवता व्रतम् ॥ ६३ ॥

अवन्यामिति । अत्र अस्याम् अवनौ पृथिव्यां विद्यमाना सर्वेऽपि नराः मानवाः परमात्मनः ईश्वरस्यैव रूपाणि आकृतयः सन्ति इति विभाव्य चिन्तयित्वा एतेषां परमात्मस्वरूपाणां मानवानां सेवैव भवतां व्रतं कर्तव्यमस्तु ॥ ६३ ॥

परमेशस्वरूपाश्चेन्मानवा जगतीतले ।
मा भूवंस्ते तिरस्कारपदं भारतवासिनाम् ॥ ६४ ॥

परमेशेत्यादि । जगतीतले भूपृष्ठभागे सर्वे मानवा यदि परमेशस्वरूपा ईश्वरात्मकाः तर्हि ते भारतीयानां येषां पूर्वजा सर्वेऽपि आर्याः कम्बुगुणा आसन् तेषां भारतीयानां तिरस्कारपात्रम् अपमानास्पदं मा भूवन् न भवन्तु ॥ ६४ ॥

अस्माभिस्तु परित्याज्यमिदानीं दैवतान्तरम् ।
समुपास्यो विराडेको राष्ट्रदेवो निरन्तरम् ॥ ६५ ॥

अस्माभिरिति । इदानीं वर्तमानकाले अस्माभिः भारतीयैः दैवतान्तरं परित्याज्यम् अन्या कापि देवता न पूजनीया किं तर्हि ? एक विराट् सर्वव्यापी राष्ट्रदेव एव । समुपास्यः पूजनीयः । मातृभूसेवैव राष्ट्रसेवा इति । 'राष्ट्रदेवो भव' इत्येव चिन्तनीयम् ॥ ६५ ॥

यः स्वर्लोको नृपश्चास्मिन् बलवान् पाकशासनः ।
भारतं नोऽखिलं, सर्वं पूजितेऽस्मिन् सुपूजितम् ॥ ६६ ॥

य स्वर्लोक इति । यः स्वर्लोको नाम कश्चिल्लोकः अस्ति अस्मिन् स्वर्लोके बलवान् शक्तिशाली पाकशासनः इन्द्रः अस्ति तदखिलमस्मत्कृते तु भारतमेव अतः अस्माभिः अस्मिन् भारते पूजिते सर्वमपि सम्यक्तया पूजितमर्चितं भवेत् ॥ ६६ ॥

देशे कर्तुं प्रचारस्य कार्यं मद्रासपत्तनात् ।
प्रकाशिता तदादेशात् पत्रिका 'ब्रह्मवादिनी' ॥ ६७ ॥

देश इति । देशे भारतवर्षे जनजागरणप्रचारस्य कार्यं विधातुं तस्य स्वामिनः आदेशात् उपदेशात् मद्रासपत्तनात् तच्छिष्यैः 'ब्रह्मवादिनी' नाम्नी मासिकपत्रिका प्रकाशिता अभूत्, या खलु गार्गी अपाला इत्यादिप्राचीनब्रह्मवादिनीः अस्मारयत् ॥ ६७ ॥

एतस्याः सत्प्रभावेण बहवो देशवासिनः ।
प्रेरिता राष्ट्रसेवायां योजकस्तु सुदुर्लभः ॥ ६८ ॥

एतस्येति । एतस्य मासिकपत्रिकाप्रकाशनकार्यस्य प्रभावेण प्रेरणावशात् बहवो देशवासिनः भारतीया राष्ट्रसेवायां मातृभूमिसेवनार्थं प्रेरिता उत्साहिता अभूवन् । अर्थान्तरन्यासमाह योजकः कार्यारम्भको साहसकर्ता एव सुदुष्करः, योग्यप्रोत्साहके विद्यमाने सत्येव अनेके तत्प्रेरणां लभन्ते ॥ ६८ ॥

पुनः क्वचिच्चान्यत्र केन्द्राण्यस्तित्वमाययुः ।
निःस्वार्था भ्रातरो यत्र संलग्ना मातृसेवने ॥ ६९ ॥

पुनरिति । अत्र देशे पुनः कतिचन अनेके इत्यर्थः कार्यकर्तृकेन्द्राणि प्रमुखस्थानानि अस्तित्वमाययुः स्थापितानि अभूवन् । यत्र कार्यकेन्द्रेषु मध्ये निःस्वार्थाः स्वार्थरहिता भ्रातरः स्वामिप्रेरितबन्धवः मातृभूमिसेवायां संलग्नाः आसक्ता अभूवन् ॥ ६९ ॥

उद्धर्तुं भारतं पंकादालस्याज्ञानलक्षणात् ।
संघशक्तेर्भविष्यन्त्या अयमासीदुपक्रमः ॥ ७० ॥

उद्धर्तुमिति । आलस्यम् उद्योगराहित्यम् अज्ञानम् अबोधः एतदुभयस्वरूपात् पङ्कात् कर्दमाद् भारतम् उद्धर्तुं बहिरानेतुं भविष्यन्त्याः भाविन्याः संघशक्तेः 'रामकृष्णमिशन' रूपस्य उपक्रमः आरंभः आसीत् ॥ ७० ॥

एवं प्रसितचित्तोऽयं प्राक्प्रत्यगुभयोद्धृतौ ।
एकतो बोधनं कृत्वा ज्ञानदानात्तथाऽन्यतः ॥ ७१ ॥

एवमिति । एवम् अनेन विधिना प्राक्प्रत्यगुभयोद्धृतौ प्राच्याः प्रतीच्याश्च तेषाम् उद्धारार्थं प्रसितम् आसक्तं चित्तं यस्य एतादृशः अभवत् । एकतः भारते बोधनं जागरणकार्यं विधाय अन्यतः ज्ञानदानात् धर्मसमन्वयात्मकबोधस्य वितरणात् ॥ ७१ ॥

विश्वंभरातले हिन्दुधर्मादन्यो न भाषते ।
नरं नारायणं साक्षाद्विपरीता कृतिः परम् ॥ ७२ ॥

विश्वम्भरातले इति । विश्वम्भरातले पृथिवीतले हिन्दुधर्मात् सनातनवैदिकधर्मादन्यः कोऽपि धर्मः नरं मानवं साक्षात् प्रत्यक्षं नारायणं न भाषते 'जीवात्मा परमात्मैव' इति प्रतिपादयति । परं प्रत्यक्षा भारतीयस्य कृतिः कार्यं विपरीतैव विरुद्धैव अवलोक्यते अस्माकं परस्परं कलहप्रसक्तत्वात् ॥ ७२ ॥

बलवन्तो भवन्त्वार्या लोकसंग्रहहेतवे ।
न केवलं शरीरेण परमध्यात्मचिन्तनात् ॥ ७३ ॥

बलवन्त इति । लोकसंग्रहहेतवे विश्वजनीनकार्यकरणार्थं आर्याः भारतीया बलवन्तः शक्तिशालिनः भवन्तु । एतद् बलवत्वं तु न केवलं शरीरेण पाञ्चभौतिकदेहेन अपि तु अध्यात्मचिन्तनात् आत्मज्ञानविषयकविचारतः ॥ ७३ ॥

या शक्तिस्सङ्घसन्धाने सम्भवेदपराजिता ।
न व्यष्टेः साऽस्ति पार्थक्ये केवलं खण्डशः कृतिः ॥ ७४ ॥

या शक्तिरिति । सङ्घस्य जनगणस्य सन्धाने स्थापने समष्टावित्यर्थः या अपरैः अन्यैः कदापि अजिता अपरिभूता शक्तिः सम्भवेत् उत्पद्येत तादृशी शक्तिः समष्ट्यंगावयवभूत-व्यष्टेः व्यक्तीनामेकैकशः पार्थक्ये न विद्यते केवलं खण्डशः अल्पशः एवं कार्यं सम्भवेत् ॥७४॥

अतः सङ्घमयैर्भाव्यं भारतीयैर्भयातिगैः ।
एकवर्णैरेकधर्मैः सबलैरेकजातिभिः ॥ ७५ ॥

अतः इति । अतः भारतीयैः अत्रत्यैः भयातिगैः निर्भयैः तथा सङ्घशक्तियुक्तैर्भाव्यं भवितव्यम् । एकः एव वर्णः येषाम् एक एव धर्मः येषां तथा सबलैः बलवद्भिः एका एव जातिः हिन्दुजातिः येषामेतादृशैर्भाव्यम् ॥ ७५ ॥

अमितस्तस्य नव्यायां प्रभावोऽदृश्यतावनौ ।
अनेके यतयो जाता अपरे ब्रह्मचारिण ॥ ७६ ॥

अमित इति । नव्यायामवनौ पाश्चात्यजगति अमेरिकायामित्यर्थ अस्य अमित कल्पनातीत प्रभाव उत्साहवर्धनम् अदृश्यत अवलोकित । तेषु अमेरिकावासिषु अनेके यतय सन्यासिन जाता अजनिषत अपरे तत्रत्या ब्रह्मचारिण आजन्मब्रह्मचारिण स्थातु निश्चय कृतवन्त ॥ ७६ ॥

क्वचित् स्वं क्लान्तकायं तेऽन्वयु प्रकृतिसुन्दरे ।
वनोद्देशे सरित्तीरे विश्रामार्थं मुदान्विता ॥ ७७ ॥

क्वचित्स्वमिति । व्याख्यानादिभिरनवरतं भ्रमणात् क्लान्तकायं शरीरं यस्यैतादृशं क्वचित् प्रकृतिसुन्दरे रमणीयरुचिरे सरित्तीरे वनोद्देशे स्थाने मुदान्विता विश्रामार्थम् अन्वयु अनुगता ॥ ७७ ॥

एते स्नेहोपदेशाख्य प्रत्तस्तेभ्य सुधारस ।
तेऽपि तत्पानसंतृप्ता जगद्बाह्य विसस्मरु ॥ ७८ ॥

एतेनेति । इह वनोद्देशे एतेन स्वामिना तेभ्य अनुयायिभ्य उपदेशात्मक सुधारस अमृतरस प्रत्त वितरित तेऽप्यनुयायिन तादृशोपदेशामृतपानतृप्ता सन्त बाह्य भौतिक जगत् विसस्मरु विस्मृतवन्त ॥ ७८ ॥

सर्वे तृषापरा आसंस्तथापीहानुयायिन ।
वेदान्तोपनिषद्गीताभक्तिसूत्रादि शिक्षितुम् ॥ ७९ ॥

सर्वे इति । तथापि सुधारसपानहृष्टा अपि एते सर्वे अनुयायिन तृषापरा पुन पुन उपदेशश्रवणार्थं तृषिता आसन् किं शिक्षितुम् वेदान्तम् उपनिषद भगवद्गीता, नारदभक्ति सूत्राणि इत्यादि स्वामिन सकाशात् पठितुम् ॥ ७९ ॥

वितता आश्रमास्तेन पूजार्थं हिन्दुमन्दिरम् ।
अद्यापि वेदधर्मस्य यशः शंसत्यहर्निशम् ॥ ८० ॥

वितता इति । वेदान्तपरिशीलनार्थं तेन तत्र कतिपये आश्रमा वितता स्थापिता, पूजार्थं हिन्दुमन्दिरमपि स्थापितम् । यन्मन्दिरम् आश्रमाश्च अद्यापि अद्यावधि वैदिकधर्मस्य यश अहर्निश शंसति ॥ ८० ॥

अयं भारतवदूतोऽत कृतवेदान्तडिण्डिम ।
आङ्ग्लै सादरमाहूत कृतार्थयितुमुक्तिभि ॥ ८१ ॥

अयमिति । अयं भारतस्य दूत नवमदेशहारक दूत उक्तिभि स्वोपदेशै आत्मान कृतार्थयितु कृतार्थान् कर्तुं आङ्ग्लै इङ्गलन्ददेशीयै सादरमाहूत निमन्त्रित ॥ ८१ ॥

यद्भारतीयभिक्षोस्तै शिक्षितव्यमभून्नवम् ।
तत्तद्दलितदेशस्याप्यद्भुतं गौरवं न किम् ॥ ८२ ॥

यद्भारतीयमिति। यत् यस्मात् भारतीयभिक्षोः शासितदेशस्य यतेः सकाशात् तैः शासकैः किमपि नवं शिक्षितव्यमभूत् तत् दलितदेशस्य विजितदेशस्य भारतस्यास्य अद्भुतं गौरवं महिमा न जातं किम् ॥ ८२ ॥

कोऽपि स्वं विश्वसौन्दर्यलक्ष्म 'पेरिस' वर्त्मना।
सुहृत् स्वेन सहानेतुमिग्लन्दमुपचक्रमे ॥ ८३ ॥

कोऽपि तामिति । कोऽपि कश्चन सुहृन्मित्रं विश्वसौन्दर्यं संसारस्य रुचिरता तल्लक्ष्यभूतं यत् पेरिसनगरं तन्मार्गेण तं स्वामिनं स्वेन सह इग्लंददेशमानेतुमुपचक्रमे उपक्रान्तः ॥ ८३ ॥

सम्पन्नः स परैः समादरभरैर्देशे बलेर्वासिनां
संसारातिगवस्तुसंग्रहगृहेणालं कृतां भूषिताम्।
बोनापार्टनृपेण विश्वविजयस्वप्नेन संरक्षितां
शान्तिप्रोषितचन्द्रचुम्बिभवनैर्भव्यां पुरीमागतः ॥ ८४ ॥

संपन्न इति। बलेर्देशे वासिनां पातालवासिनां अमेरिकास्थानामित्यर्थः। लोकानामिति शेषः। परैः श्रेष्ठैः समादरभरैः आदरातिशयैः सम्पन्नः स स्वामी संसारमतिगच्छन्ति तानि संसारातिगानि एतादृशानां वस्तूनां संग्रहगृहेण अलौकिकवस्तुसंग्रहालयेन अलं पर्याप्तं भूषितां कृताम्, बोनापार्टेन नेपोलियनाख्येन नृपतिना विश्वविजयस्य स्वप्नं जातं यस्य तादृशेन अक्षकसान्द्रसदृशेनेत्यर्थः संरक्षितां पूर्वं पालितां शान्तिप्रोषितैः, निरन्तरसुषमशीलैः चन्द्रचुम्बिभवनैः अत्युच्चगृहैर्भव्यां सुन्दरां पुरीं पेरिसनगरीम् आगतः ॥ ८४ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
श्रीस्वाम्याश्रयखण्डकाव्यरचनाप्रीतेन गीते महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽयमेकादशः ॥ ८५ ॥

इति विवेकानन्दचरिते महाकाव्ये 'शिकागोऽनन्तर' मित्येकादशः सर्गः।

लोकमिति। लोकमित्यादि धर्मप्रधानाश्रये इत्यन्तं पूर्ववत्। श्रीविवेकानन्दस्वामिनं विषयीकृत्य 'विवेकानन्दखण्डकाव्यम्' इत्याद्यखण्डकाव्यरचनाप्रीतेन त्र्यम्बकसूरिणा विरचिते एकादशः सर्गः समाप्तः ॥ ८५ ॥

इति श्रीविवेकानन्दमहाकाव्ये 'विवेकदीप'टीकायामेकादशः सर्गः ॥ ११ ॥



## अथ द्वादशः सर्गः

नानाजनाभ्यर्थनया जितोऽयं समागतः सन् वसुधां विजेतुः ।
अभूत् परं भव्यसमादरस्य [illegible] मानमाप्नोति न विद्यया ना ॥ १ ॥

नानेत्यादि । अथ जित विजितदेशस्य स्वामी नानाजनाभ्यर्थनया विजेतु सार्वभौम शक्तियुक्तस्य आंग्लजाते वसुधाम् इंग्लन्ददेश समागत सन् तत्र भव्यसमादरस्य सम्मानस्य पदमास्पदमभूत् । अर्थान्तरेणाह विद्यया ज्ञानेन सहायेन ना नरः क मान नाप्नोति सर्वत्रैव स आदरार्ह इत्यर्थं ॥ १ ॥ उपजातिवृत्तम् ।

स ददर्श समृद्धिसम्भृतां नगरीं लन्दनलक्षणां मुनि ।
सुमहोद्यमसाधनेन या सधनालंकरणं भुवोऽजनि ॥ २ ॥

स ददर्शेति । स मुनि समृद्धिसम्भृता सर्वत सम्पत्तिपूर्णा लन्दनलक्षणां तन्नाम्नीं नगरीं ददर्श दृष्टवान् । या नगरी महता सर्वोत्कृष्टेन उद्यमसाधनेन उद्योगोपायेन सधना धनान्विता तथा भुव संसारस्य अलंकरण भूषणमिव अजनि अत्र वैतालीय छन्द । विषमे ससजा गं सयुता, सभरा अन्तगतौ समे लगौ । इति लक्षणम् ॥ २ ॥

अथ नैकसभासु भाषणप्रसितेऽस्मिन् बहुधा प्रभाविता ।
इह मार्गरेटाऽमलान्तरा विदिताऽभूद्भगिनी निवेदिता ॥ ३ ॥

अथ नैकेत्यादि । अथ लन्दनगमनानन्तरम् अस्मिन् स्वामिनि अनेकासु सभासु भाषणप्रसिते वक्तृतादानासक्त सति अमलान्तरा मार्गरेटा ( Margaret ) नाम्नी काचिदाङ्ग्लमहिला प्रभाविता सती भविष्यति काले 'रामकृष्णमठस्य भगिनी निवेदिता' नाम्ना विदिता प्रथिताऽभूत् ॥ ३ ॥

अनया किल भारतावने परिचर्याव्रतमान्तिमक्षणम् ।
उररीकृतमस्य कोपमा समयेऽस्मिन् क्वचिदीक्षिता क्षितौ ? ॥ ४ ॥

अनयेति । अनया मार्गरेटया भारतावने भारतभूमे परिचर्याव्रत सेवानियमम् आन्तिमक्षणम् अन्तिमक्षणपर्यन्त मृत्युपर्यन्तमित्यर्थ । यत् उररीकृत स्वीकृतम् अस्य व्रतस्य का उपमा सादृश्यम् अस्मिन् समये क्षितौ पृथिव्यां कश्चित् कुत्रचिदपि ईक्षिता किन्तु न कुत्रचिदपी यर्थं ॥ ४ ॥

स सदस्सु निमन्त्रितो यमी धनिधर्मज्ञमन्त्रिशिक्षकैः ।
उदयं समवाप नित्यशः स्ववचोभिर्मिहिरो यथांशुभि ॥ ५ ॥

स सदस्सु इति । स यमी धनिभि धनाढ्यैः, धर्मज्ञै धार्मिकै मन्त्रिभि राज्यसचिवै शिक्षकै प्राध्यापकैश्च सदः[illegible] भाषणार्थं निमन्त्रित आहूत नित्यश प्रत्यह स्ववचोभि उपदेशवाक्यै उदय यश प्राप लब्धवान्, तत्र दृष्टान्तमाह यथा सूर्य स्वकीयै अंशुभि किरणै प्रतिदिन उदय पूर्वदिशायां प्रातरुद्गमन प्राप्नोति ॥ ५ ॥

मनुजा निखिलांग्लभूभवा नव वेदान्तमतावगाहनात् ।
चकिता दलितोक्तिवैभवैरपि साम्राज्यसुखाभिमानिनः ॥ ६ ॥

मनुजा इति । निखिलांग्लभूभवाः सकलांग्लभूमिनिवासिनः मनुजाः स्वामिप्रतिपादितनववेदान्तविचारज्ञानात् साम्राज्यसुखाभिमानिनोऽपि सन्तः भूतलेऽस्मत्साम्राज्यमिव न किमपि अन्यत् साम्राज्यं समृद्धिशालि वर्तते इति गर्वयुक्ता अपि सन्तः दलितोक्तिवैभवैः शासितवचनप्रभावैः चकिता आश्चर्ययुक्ता जाताः ॥ ६ ॥

स किलाखिलभारतागतान् सुधियो मोहनकेशवादिकान् ।
निजवाक्पटुतांशुजालकैरकरोद्भानि विधुर्यथाबलान् ॥ ७ ॥

स किलेत्यादि । स किल स्वामी विवेकानन्दः अखिलान् भारतात् इंग्लंड्देशमागतान् 'राममोहनरॉयः,' 'केशवचन्द्रसेन' इत्यादिकान् निजवाक्पटुतांशुजालकैः वक्तृताकौशलप्रकाशैः अबलान् प्रकाशरहितानिव अकरोत् । कथम् विधुः यथा भानि नक्षत्राणि अबलानीति लिङ्गविपरिणामो बोध्यः, तेजोहीनानि करोति ॥ ७ ॥

समवोचदसौ 'महात्मनः कतिचिद्वाक्यसुधापृषत्कणाः ।
अपि यन्त्रविदोऽतिशेरते विविधाविष्कृतिकोटिसंहतिम्' ॥ ८ ॥

समवोचदिति । असौ स्वामी अवोचत् 'महात्मनः कृताध्यात्मसाक्षात्कारस्य कतिचित्कैचिदेव वाक्यसुधापृषत्कणाः वचनामृतबिन्दवः यन्त्रविदः विज्ञानशास्त्रप्रवीणस्य विविधाविष्कृतिकोटिसंहतिम् गणनातीताविष्कारसमूहमपि अतिशेरते अतिक्रम्य तिष्ठन्ति अधिकतरमहत्त्वशालिनः सन्ति ॥ ८ ॥

अपरे यदनेकभाषितैः कृतवन्तो मनुजान् प्रभावितान् ।
स तदेककवक्तृतावशादचिरात् साधितवान् सुधास्वरः ॥ ९ ॥

अपरे इति । अपरे व्याख्यातारः यद्यदा अनेकभाषितैः बहुभिर्व्याख्यानैः मनुजान् श्रोतृगणान् प्रभावितान् आकृष्टान् कृतवन्तः अकार्षुः तत् स स्वामी सुधास्वरः मधुरवचनः एककवक्तृतावशादेव एकेनैव भाषणेन अचिरात् अल्पसमयेनैव साधितवान् कर्तुं समर्थोऽभवत् ॥ ९ ॥

यतिरैक्षत चांग्लमानवान् नवभावप्रभवादरान्वितान् ।
जितजेतृविधिर्न संविदि प्रजिताः किं यवनैर्न रोमकाः ॥ १० ॥

यतिरैक्षतेति । यतिः स्वामी आंग्लमानवान् इंग्लन्ददेशनिवासिनः स्वप्रकाशितनववेदान्तविचारैः उत्पन्नेन आदरेण पूज्यभावेन अन्वितान् युक्तान् ऐक्षत । आंग्लजनाः यतिप्रतिपादितविचारैः प्रभाविता अभूवन् । अत्रार्थान्तरन्यासेनाह–अयं जेता अयं च जितः एतादृशो नियमः संविदि ज्ञानविषये न दृश्यते 'विद्वान् सर्वत्र पूज्यते' इत्युक्तेः । तत्रोदाहरणमाह-पुरा यवनैर्ग्रीसदेशवासिभिः रोमका रोमनिवासिनः न जिताः किम् ? रोमजातीयैः सर्वापि यूरोपद्वीपभूमिः आक्रान्ता ग्रीसदेशोऽपि तैर्विजितः परं ज्ञानविषये अतिविश्रुताः आसन् इति कृत्वा विजेतृभिः रोमजनैः स्वबालकशिक्षार्थं ग्रीसदेशीयाः शिक्षकाः नियुक्ताः । एवं जिता एव जेतारः संवृत्ताः ॥ १० ॥

अचिरादिव तद्यशःसितं सकलं गौरपदं व्यराजत ।
निजजन्मभुवं न केवलं परितो विश्वमसौ शिवं व्यधात् ॥ ११ ॥

अचिरादिवेति । अचिरादिव अल्पसमयाभ्यन्तरमेव सकलगौरपदं आंग्लभूमिः तस्य यशसा सितमुज्ज्वलं व्यराजत शुशुभे । यतिः केवलं स्वजन्मभुवं मातृभूमिं भारतमेव शिवं सकल्याणं व्यधात् कृतवान् अपि तु सर्वमपि विश्वं तादृशं कृतवान् । विपूर्वाद्धाधातोर्लुङ् । अतिशयोक्तिः ॥ ११ ॥

किमु तन्मुखचन्द्रमण्डलं प्रपिबातुं वसुधा सुधामयीम् ।
उदितं नवनित्यदर्शनं सकलं निर्मलनिश्चलप्रभम् ॥ १२ ॥

किमिति । तन्मुखचन्द्रमण्डलं तस्य स्वामिनः मुखाकृतिः विधुमण्डलं सकला वसुधा संसारः सुधामयीं स्वश्लाघ्याधुर्यासूनपूर्णामिव प्रपिबातु प्रकर्षेण कर्तुं नवनित्यदर्शनं नवीनं निरन्तरदर्शनदानसमर्थं सकलं सकलकलासम्पूर्णं निर्मलं निष्कलङ्कं निश्चलप्रभम् स्थिरकान्तियुक्तम् उदितम् उदयमधिगतं किमु इत्युत्प्रेक्षा । आकाशस्थचन्द्रमण्डलात् कादाचित्कदर्शनात् सकलङ्कात् अस्थिरप्रभावतः इदं यतिमुखमण्डलम् अतिरिच्यते इति व्यतिरेकः ॥

प्रशशंस स गौरजातिगं गुणसंग्राहकताविभूषणम् ।
बहुदोषपदेऽप्ययं गुणो जगति श्वेतजनेऽर्हतां गतः ॥ १३ ॥

प्रशशंस इति । स यतिः गौरजातिगं आंग्लजातौ विद्यमानं गुणसंग्राहकताविभूषणम् अन्येभ्यः जनेभ्यः सद्गुणग्राहकतात्मकं विभूषणं प्रशशंस शंसितवान् । बहुदोषपदे बहूनामनेकेषां दोषाणां पदे स्थाने अनेकदोषपूर्णेऽपि अयं गुणग्राहकतासद्गुणः एव अर्हताम् आदरयोग्यत्वं गतः प्राप्तः ॥ १३ ॥

यतिराह समागतोऽस्म्यहं भुवि तेषां घृणया समन्वितः ।
परमद्य समादरोऽनिशं भृशमेतेषु ममाभिवर्धते ॥ १४ ॥

यतिराहेति । स्वामी अवोचत् आंग्लजानि घृणास्पदम् अनेकदोषपूर्णा च इति भावनां मनसि कृत्वाहमिमं देशं समागतः, परमद्य आगमनानन्तरं परिचयप्रचयानन्तरं एतेषु आंग्लजनेषु विषये मम आदरभावना अभिवर्धते वृद्धिं प्राप्नुते ॥ १४ ॥

मुनिदर्शनयोगभाषितश्रवणोत्सुक्यभृतान्तरा नराः ।
महिता महिलाश्च सादरं मिलितास्तस्य सदस्यनेकशः ॥ १५ ॥

मुनिदर्शनेत्यादि । मुनेः स्वामिनः दर्शनशास्त्रविषये यानि भाषितानि वचनानि तथा योगशास्त्रविषये च यानि भाषितानि तथा श्रवणक्रियायाः यदौत्सुक्यमुत्कण्ठा तया भृतानि आन्तराणि येषामेतादृशा नराः तदुपदेशश्रवणतत्पराः इत्यर्थः । महिताः उच्चकुलोत्पन्नाः महिलाश्च तस्य सदसि व्याख्यानसभायाम् अनेकशः अत्यधिकसंख्यया मिलिता आसन् । अनेन तस्य स्वामिनः वाक्पटुत्वं व्यज्यते । प्रस्थानसमये शारदामात्रा तस्मै आशीरपि प्रदत्ताऽऽसीत् सरस्वती ते रसनामनाऽस्तु' इति ॥ १५ ॥

अथ केचिदभावनः सदस्युचितश्रोतृगणासनस्थिते ।
इह योगिसमाः समाहिता भुवि पद्मासनसंस्थिता बभुः ॥ १६ ॥

अथ केचिदिति । केचित् श्रोतारः भाषणसभायां योग्यासनास्तित्वाभावतः योगितुल्याः समाहितान्तःकरणाः श्रवणोत्सुकाः सन्तः मौनिनः योगशास्त्रोक्तपद्मासनसंस्थिताः पद्मासनोपविष्टाः वभुः शुशुभिरे । स्थानाभावात् भूमावेव उपाविशन् ॥ १६ ॥

सफलोऽयमुपक्रमो मुनेरिह वेदान्तपथोपदेशतः ।
अमुना सह यत्सहायका गुडिन्सेवियरादयोऽप्ययुः ॥ १७ ॥

सफल इति । इह आंग्लभूमौ नववेदान्तपथोपदेशतः नवीनवेदान्तमार्गोपदेशवशात् यः उपक्रमः उद्योगारम्भः कृत आसीत् स सफलतमः संवृत्तः यतः तत्रत्या 'गुड्विन्, सेवियर्' इत्यादयः सज्जनाः अमुना स्वामिना सह सहायकरूपेण भारतमप्येतुमनुमेनिरे । किं बहुना 'बेलुरस्थरामकृष्णाश्रमः' एतादृशसज्जनानामधिकतरसहायेनैव अस्तित्वमागतः ॥ १७ ॥

गतवान्नहि वर्तमानसंकुचिताध्वप्रतिपादने रतः ।
स तु सद्गुरुलब्धदिव्यविज्ञववेदान्तपथोपदेशकः ॥ १८ ॥

गतवानिति । वर्तमानकाले आधुनिकसमये संकुचिताध्वा यः संकीर्णमार्गः तस्य तादृशस्य प्रतिपादने बोधने रतः तत्परः सन् नहि गतवान् सत्रेंग्लेंडदेशे नैव प्रयातवान् । तु किन्तु अपि सद्गुरोः श्रीपरमहंसदेवसकाशात् लब्धा अधिगता दिव्यविद् दिव्यम-लौकिकं ज्ञानं येनैतादृशः सन् नववेदान्तपथोपदेशकः नूतनवेदान्तमार्गोपदेशकत्वेन तत्र गत आसीत् । आधुनिकहिन्दुधर्मस्तु केवलं कूपमण्डूकवृत्तिः ॥ १८ ॥

विमलीकृतलोकचक्षुषा सदसद्व्यक्तिलसच्छलाकया ।
अमुना वचसः प्रभावतो हृदयेभ्यः स्म तमो निरस्यते ॥ १९ ॥

विमलीकृतेत्यादि । अमुना स्वामिविवेकानन्देन सदसतोः सत्यासत्ययोः व्यक्तिः विवेकः सा एव लसन्ती शोभमाना अञ्जनशलाका तया करणेन विमलीकृतं लोकचक्षुः पवित्रिता जनदृष्टिः येनैतादृशेन स्ववचसः प्रभावतः वचनसामर्थ्यात् लोकानां हृदयेभ्योऽपि तमः अज्ञानान्धकारः निरस्यते स्म ॥ १९ ॥

स पुरातनदेवभारतीगतरत्नान्यमितानि सूक्तिभिः ।
प्रकटीकृतवान् सभागृहेष्विह शश्वद्विशदाङ्गसंहतेः ॥ २० ॥

स इति । स स्वामी इह विशदाङ्गसंहतेः श्वेतवर्णीयानां सभागृहेषु वक्तृतामण्डपेषु अमितानि अगणितानि पुरातनदेवभारतीगतरत्नानि प्राचीनसंस्कृतसाहित्यांगभूतोपनिषदादिषु विकीर्णानि रत्नानि सूक्तिभिः स्वमधुरवचनैः शश्वत् पुनः पुनः प्रकटीकृतवान् तत्रत्यलोकानामग्रतः प्रकटीकृतवान् प्रसार्य दर्शयामासेव ॥ २० ॥

अमुना निरमीयताद्भुतं बलवत् प्रेमसुवर्णबन्धनम् ।
मधुरोक्तिभिरत्र संगतं नवहिन्दांग्लसुबोर्भवेद् ध्रुवम् ॥ २१ ॥

अमुनेति । अमुना विवेकानन्दस्वामिना स्वकीयाभिः मधुरोक्तिभिः मधुरवचनैः अद्भुतम् अतिचित्रं बलवत् अतिदृढं प्रेमस्वरूपं सुवर्णबन्धनं प्रेमसुवर्णनिगडबन्धनमिव

निरमीयत उत्पादितम् यत अद्य हिन्दाङ्गलभुवो भारताङ्गलभूम्यो सद्यत मित्रतारूप सगम ध्रुवम् सर्वकालस्थिर भवेत् सपश्यत ॥ २१ ॥

यदि सन्त्यभिभूतभारते सुधिय स्वामिसमानमानवा ।
कथमप्यधिकारितोचिता नहि नस्तैरिति साधु निश्चितम् ॥ २२ ॥

यदि सन्ति इति । तै तत्रत्यै आङ्गलजनै इति साधु समीचीनमेव निश्चित निश्चित्य दृस्तम् । अभिभूतभारते अस्माभि जितभारते यदि स्वामिसमाना सुधिय विद्वांस मानवा सज्जना सन्ति तर्हि अस्माकम् अधिकारिता तत्र भारते कथमपि उचिता न योग्या न ॥ २२ ॥

यद्वय किल तत्र सज्जना बलवत्स्वामिवचःप्रभावत ।
निजचर्चेगमागमात्मकप्रतिबन्धे शिथिलादरा बभु ॥ २३ ॥

यद्वय इति । तत्र आङ्गलभूमौ स्वामिवचसा वचस अतिमहत प्रभावत परिणामत निज च धर्मागमागमात्मक प्रतिबन्ध धार्मामन्दिरगमने नियम तादृशनियमशिथिला-दरा स्वयभक्तय बभूवु ॥ २३ ॥

इयती यतिभाषिते सिते चिरमास्थाऽसदृशी जनेऽजनि ।
विदधे यहुधा गतागते यदसौ लन्दनपत्तनोत्तमम् ॥ २४ ॥

इयतीति । यतिभाषिते स्वाम्युपदेशवचने सिते धने आङ्गलभौतेषु मध्ये इयती एतावती असदृशी निरुपमा आस्था श्रद्धा अजनि समुत्पन्ना यदसौ बहुधा अनेकश लन्दनपत्तने गतागते गमनागमने विदधे विहितवान् ॥ २४ ॥

हरित त्वरित प्रचेतस समुपैतु सुहृद सचेतस ।
उपदिश्य स कार्यगौरवादतिथिर्नूतनयार्कमाययौ ॥ २५ ॥

हरितमिति । सचेतस विदुष सचेतस सुहृद यति सतीर्थ्यान् प्रचेतस वरुणस्य हरित पश्चिमा दिशमित्यर्थ समुपैतु त्वरितम् उपदिश्य भारतात् आङ्क्षिद्गुरुबन्धून् तत्र गन्तुमुपदिश्य स अमेरिकाया कार्यगौरवात् तत्रारब्धकार्यमहत्त्वकारणात् अतिथिरूपेण नूतनयार्क न्यूयार्कनामकम् अमेरिकानगरमाययौ ॥ २५ ॥

शिवकार्यरतोऽयमेकत परतो भारतवासिभिर्जनै ।
निजजन्मभवमुदा परप्रमदा मन्थु विघातुमर्थित ॥ २६ ॥

शिवकार्यरत । एकत पश्चिमस्यां दिशि शिवकार्यरत लोकोपदेशकार्यासक्त । अपरत भारतवासिभि भारतीयै जनै निजजन्मवसु धरा स्वकीयजन्मभुव परप्रमदा आगमनेन अत्यानन्दिता मन्थु सत्वर विघातुमभ्यर्थित । भारतीया एतादृश दिग्विजयिनं स्वजन द्रष्टुमुत्कण्ठिता जाता इत्यर्थ ॥ २६ ॥

स तु विश्वजनीनकार्यतो यतिरत्यन्तमुपेक्षितक्षण ।
धृतमानवसेचनगतो जगतो नागरिकत्वमागत ॥ २७ ॥

स विति । स यति विश्वजनीनकार्यत लोकसंग्रहकार्यकारणात् अत्यन्तमेकान्तम्

उपेक्षितः परित्यक्तः क्षणः निजसुखभावना येन धृतं स्वीकृतं मानवसेवनस्य यावन्मानवजातेः सेवायाः व्रतं नियमः येनैतादृशः सन् सम्पूर्णजगतः नागरिकत्वं निवासित्वमागतः 'उदारचरितानां [illegible] वसुधैव कुटुम्बकमिति' वचनं शब्दशः अनुसृतवानित्यर्थः ॥ २७ ॥

अधुनाऽपि समुत्सुकैर्जनैरधिकं पूर्वत एव संवृतः।
अतिविस्तृतशान्तसागरोद्गतसंख्यातिगवीचिभिर्यथा ॥ २८ ॥

अधुनापीति । अधुना लन्दननगरात् पुनः प्रत्यावृत्ते स्वामिनि एषः पूर्वतः पूर्वसमयात् अपि अधिकं अधिकसंख्याकैर्जनैरित्यर्थः । संवृतः परिवृतः अभूत् कथम् । अतिविस्तृतः यः प्रशान्तः सागरः तस्य पृष्ठे उद्गताः याः संख्यातिगाः वीचयः तरंगाः ताभिस्तरङ्गैरिव यथा प्रशान्तसागरस्तरङ्गा गणनातिगा तथा यतिसंवरणकारिणः जना अपि संख्यातीताः आसन् ॥ २८ ॥

सकलं परितो रसातलं नववेदान्तसभाविभासितम् ।
स्फुटितानि नवाङ्कुराणि किं यमिनारोपितवीजसंहतेः ॥ २९ ॥

सकलमिति । परितः सर्वत्र सकलं रसातलं पातालममेरिकाद्वीपमित्यर्थः । स्वाम्युपदेशपरिणामतः नवीनाभिः वेदान्तसभाभिः वेदान्तश्रमैरित्यर्थः विभासितं परिपूर्णमभूत् । तत्रोत्प्रेक्षते—यमिना स्वामिना आरोपितबीजसमुदायस्य ते आश्रमाः नवानि अंकुराणीव स्फुरितानि उत्पन्नानि किम् ॥ २९ ॥

इह 'नास्तिधियः' स संशयात् नव विद्यालयनिर्गतानपि ।
निजतन्त्रपथानुपादिशत् सरलान् ख्रिस्तमतावलम्बिनः ॥ ३० ॥

इह नास्तिधिय इति । स स्वामी इह अमेरिकायां सर्वानपि उपदिदेश कांस्कान् ? नास्तिधियः नास्तिकान्, स संशयात् 'ईश्वरः अस्ति वा न वा' इत्थं सन्दिग्धमनसः नवविद्यालयनिर्गतान् ( graduates ) प्राप्तपदवीकान् स्वतन्त्रविचारकान् तथा सरलहृदयान् ख्रिस्तमतावलम्बिनः सर्वानपि उपादिशत् ॥ ३० ॥

प्रशशंस यतिस्तदीयसत्कृपिविज्ञानकलार्थचातुरीः ।
स निनिन्द परं विलासिताऽसितनिग्रोपरिपीडनादिकम् ॥ ३१ ॥

प्रशशंसेति । यतिः तदीयसत्कृपिविज्ञानकलार्थचातुरीः तदीयाः अमेरिकावासिनाम् कृषिं वार्ताविद्याम् विज्ञानं भौतिकविज्ञानान्वेषणानि, कलाः विविधकलाज्ञानं तथा अर्थः अर्थशास्त्रज्ञता एतद्विषयिणीः चातुरीः कुशलतां प्रशशंस । परं तेषां विलासिताम् अधिकां विषयोपभोगप्रवृत्तिं तत्रत्यकृष्णवर्णनिग्रोजनपरिपीडनादिकं निनिन्द निन्दितवान् ॥ ३१ ॥

स तु भारतपश्चिमोभयप्रियसंगाध्वरभारदीक्षितः ।
जगदेकहितात्मकं हि तत्कृतयज्ञस्य फलं भवेदलम् ॥ ३२ ॥

सत्विति । स स्वामी तु भारतं तथा पश्चिमा दिक् एतयोः उभयोः यः प्रियः इष्टः संगमः मेलनं स एव महान् अध्वरः यज्ञः तादृशयज्ञस्य भारवहने दीक्षितः अधिकृत इव आसीत् । किं तर्हि तादृशयज्ञस्य फलम् हि यस्मात् जगदेकहितात्मकं संपूर्णजगतः कल्याणात्मकं तस्य यज्ञस्य अलं पर्याप्तं फलं भवेत् ॥ ३२ ॥

प्रधनं नु धनप्रधानकं परधर्मोत्थनि चासहिष्णुता ।
चिरशान्तिसुखस्य बाधकान्यपि साम्राज्यसुखाभिलाषिता ॥ ३३ ॥

प्रधनमिति । धनप्रधानकं केवलधनप्राप्त्यर्थं यत्प्रधनं कलहयुद्धादिकं, परधर्मोत्थनि परधर्ममार्गविषयेषु असहिष्णुता सहनशीलताभावः, साम्राज्यसुखाभिलाषिता च अन्यजनानाक्रम्य तेषामुपरि साम्राज्यस्थापनं च एतानि सर्वाणि चिरशान्तिसुखस्य शाश्वतिकशान्तिसुखलाभमार्गे बाधकानि विघ्नभूतानि सन्ति ॥ ३३ ॥

तदलं भवतां समीहया सुहृदः केवलभौतिकोन्नतेः ।
उररीकुरुताद्य भारतात् समतां चाखिलविश्वबन्धुताम् ॥ ३४ ॥

तदलमिति । तत् तस्मात् हे सुहृद ! केवलभौतिकोन्नते भोगविलासपरिणामिन्याः ऐहिकाभ्युदयस्य समीहया अभिलाषेण अलम् कृतम् । यूयम् अद्य युष्मदैनिकोन्नत्या सार्धं भारतात् समतां साम्यं तथा विश्वबन्धुत्वं सर्वश्रेष्ठं गुणं च उररीकुरुत स्वीकुरुध्वम् ॥ ३४ ॥

किमु केवलबाह्यभूषया परमन्तःस्थिरसारशून्यया ।
नवसभ्यतया रसातले भविता राष्ट्रसमुन्नतिः क्वचित् ॥ ३५ ॥

किमु केवलेत्यादि । केवलबाह्यभूषया बाह्यतः चाकचक्यपूर्णया परम् अन्तः स्थिरसारशून्यया आन्तरिकाध्यात्मतत्त्वज्ञानरहितया नवसभ्यतया भौतिकोन्नतिमात्रपूर्णया रसातले क्वचित् राष्ट्रसमुन्नतिः राष्ट्राभ्युदयः भविता किमु भविष्यति किम् । न कदापीत्यर्थः ॥३५॥

इति तेन तदर्चितेर्जना अनुशिष्टा जगतः समृद्धये ।
नवसंस्कृतिनिर्मितिर्यतः स्थिरमासीत् किल लक्ष्यमन्विमम् ॥ ३६ ॥

इति तेनेति । इति इत्थं तेन स्वामिना तदर्चिते. पाश्चात्त्य जनाः जगतः समृद्धये विश्वजनीनसमृद्धिसिद्धयर्थं अनुशिष्टाः उपदिष्टाः । किमर्थम् ? यतः जगति प्राच्यप्रतीच्यसम्मेलनात् नवसंस्कृतिनिर्मितिः नवीनशान्तिमयजगन्निर्माणमेव सत्यान्तिमं लक्ष्यमासीत् ॥ ३६ ॥

वचनं यमिनो न चानृतं जगदेकं भवितेति साम्प्रतम् ।
हरितोरुभयोः परस्परं गुणदानग्रहणप्रभावतः ॥ ३७ ॥

वचनमिति । 'सम्पूर्णं जगत् साम्प्रतम् एकमेव भविष्यति' इति या भविष्यवाणी स्वामिना कृता आसीत् सा वाणी अनृता असत्या न । कुत इदं भविता ? उभयोः हरितोः परस्परम् अन्योन्यगुणानां स्वीकार्यसद्गुणानां दानग्रहणप्रभावतः दानादानतः भारते पश्चिमाया विज्ञानं शिक्षते पश्चिमा च भारतादध्यात्ममिति आदानप्रदानप्रकारः ॥ ३७ ॥

यतिरत्र ययाशया ययौ जनता तं परमाशयाऽन्वयात् ।
अनिशं विमलाशयाः प्रयान्त्यभियुक्तं हृदि संशयान्विताः ॥ ३८ ॥

यतिरत्रेति । अत्र अमेरिकायां यतिः अमेरिकाया यया आशया दिशया ययौ प्रयातः तत्र जनतापि परमाशया पुरुदुत्सरणेन 'अस्मत्सन्देहनिवृत्तिर्भवेदि'त्याशय अन्वयात्

अनुगता । अर्थान्तरन्यासेनाह—अनिशं नित्यं विमलाशयाः शुद्धान्तःकरणा जना हृदि संशयान्विताः संदिग्धान्तःकरणा अभियुक्तं योग्यपुरुषं ज्ञानिनमित्यर्थः । प्रयान्ति अनुगच्छन्ति ॥ ३८ ॥

तदुक्तवचनानि एतावन्महत्त्वपूर्णानि आसन् यत् तानि 'वेद' इति वक्तुं शक्यते इत्याह—

यदनेन सभासु भाषितं लिखितं यद्विविधप्रबन्धगम् ।
अनुयायिषु यद्रहोवचः सकलं तच्छ्रुतिसम्मतं मतम् ॥ ३९ ॥

यदिति । यदनेन स्वामिना अमेरिकायाम् आंग्लदेशे वा सभासु व्याख्यानसदःसु यत्किञ्चिद् भाषितं व्याहृतम् अथवा विविधप्रबन्धेषु यत्किञ्चिल्लिखितं किंवा अनुयायिषु मध्ये इह एकान्ते यत्किञ्चिदुपदेशात्मकम् उक्तमासीत् तत्सकलं श्रुतिसम्मतम् उपनिषदुपमम् आसीत् ॥ ३९ ॥

इह भक्तिसृतौ हितौजसा कथितं ज्ञानपथेऽमुना पुनः ।
अथ वर्त्मनि कर्मणोऽङ्कितं विदधौ तस्य यशोऽधिकप्रभम् ॥ ४० ॥

इह भक्तीत्यादि । हितं जगत्कल्याणकारकम् ओजः ज्ञानतेजः यस्यैतादृशेन अमुना स्वामिना भक्तिसृतौ भक्तिमार्गविषये ज्ञानपथे ज्ञानाध्वविषये अथवा कर्मणो वर्त्मनि कर्ममार्गविषये च अङ्कितं विलिख्य रचितम् एतत्सर्वं तस्य यशः कर्म अधिकप्रभम् अधिकतरकान्तियुक्तम् विदधौ चकार । एतादृशोपदेशः स समधिककीर्तिः समजनि ॥४०॥

भक्तिमार्गमाह—

विविधैरभिधानलक्षणैः प्रभुरेकोऽपि पृथङ् नमस्यते ।
स हि केवलदृष्टिभेदतो लभते रूपभिदां न वस्तुतः ॥ ४१ ॥

विविधैरिति । एकोऽपि प्रभुः अनन्योऽपीश्वरः विविधैः अभिधानलक्षणैः 'ईश्वरः' 'अल्लाह' 'गॉड' इत्यादिभिः पृथक् भिन्नतया नमस्यते पूज्यते । हि यस्मात् स ईश्वरः एकोऽपि सन् दृष्टिभेदतः अवलोकनविचारभेदात् रूपभिदाम् आकारभेदं लभते न वस्तुतः । वस्तुतः ईश्वरः सर्वेषां कृते एक एव ॥ ४१ ॥

अयनं खलु भक्तिलक्षणं सरलं स्यादखिलेषु वर्त्मसु ।
प्रियमानवसत्प्रतीकतो बहुधा सिद्ध्यति काप्युपासना ॥ ४२ ॥

अयनमिति । भक्तिलक्षणमयनं भक्तिमार्गः अखिलेषु वर्त्मसु ज्ञानमार्गाद्यन्यमार्गेषु सरलः अनुसरणयोग्यः भवति । तत्रापि उपासनायां प्रियमानवसत्प्रतीकतः अस्माकं यदिष्टं मानवात्मकं बुद्धखिस्तादिकं प्रतीकं तत्सहायतः बहुधा प्रायशः काप्युपासना भक्तिमार्गाङ्गभूता सिद्ध्यति सफलीभवति ॥ ४२ ॥

स हि भक्तिपथश्च संसृतिश्रुतिशास्त्रोद्भवकारणात्मनः ।
अतिनिर्मलभावतो हृदि स्वयमन्वेषणमीश्वरस्य यत् ॥ ४३ ॥

हीति । संसृतिः संसारः श्रुतिशास्त्राणि ज्ञानप्रदा दिव्यग्रन्थाः तेषां सर्वेषाम् उद्भवकारणात्मनः हेतुस्वरूपस्य ईश्वरस्य अतिनिर्मलभावतः अव्यभिचारिशुद्धभक्तिपूर्वकं हृदि स्वान्तःकरणे अन्वेषणं गवेषणं भक्तेः पन्थाः उच्यते ॥ ४३ ॥

अभियुक्तगुरोः सहायतो मनुजानामनुभूतिरात्मनः ।
विमलान्तरवाक्यकर्मणा नियतं लक्षणमस्य वर्त्मनः ॥ ४४ ॥

अभियुक्तत्यादि । अभियुक्तगुरोः महानिशाचार्यस्य सहायतः विमलान्तरवाक्यकर्मणां वाक्कायमनस्सु शुद्धानां मनुजानाम् आत्मनः अन्तःस्थितात्मतत्त्वस्य अनुभूतिः साक्षात्कारः एव अस्य वर्त्मनः भक्तिमार्गस्य लक्षणं चिह्नं नियतं निश्चितम् ॥ ४४ ॥

बहुशः परिपूर्णसंविदः परमज्ञानिजना मनागपि ।
अमुना समुपासनाध्वना विचरन्तो भुवि नावलोकिताः ॥ ४५ ॥

बहुश इति । बहुशः प्रायशः परिपूर्णसंविदः पूर्णाद्वैतज्ञानयुक्ताः केवलनिर्गुणोपासका इत्यर्थः । तथा परमम् अत्यन्तम् अज्ञानिजनाः अत्यन्तज्ञानशून्याश्च एतादृशा मनुष्याः अनेन समुपासनापरपर्यायेण भक्तिमार्गेण विचरन्तः भुवि भूतले नावलोक्यन्ते । अत्यन्तज्ञानिनः एकान्ताज्ञानिनश्च बहुधा भक्तिमार्गावलम्बिनः न भवन्ति ॥ ४५ ॥

परमप्रियतामहेश्वरं मनुजः प्रेममयान्तरीभवन् ।
यदि पूजयति ध्रुवं समः समुपास्येन भवेदुपासकः ॥ ४६ ॥

परमप्रियतेति । परमप्रियतामहेश्वरम् अत्युत्तममयम् ईश्वरं चेद्यदि प्रेममयम् आन्तरं यस्यैतादृशीभवन् पूजयति तर्हि उपासकः पूजकः भक्तिमार्गावलम्बी समुपास्येन पूज्येनेश्वरेण समः तत्स्वरूपः भवेत् ध्रुवमिति निश्चयः ॥ ४६ ॥

सगुणेश्वरमर्चयन्ति ये क्वचिदर्हन्ति न ते तिरस्कृतिम् ।
सगुणः खलु मूर्तिपूजकोऽप्यधिगन्तुं सुतरां निराकृतिम् ॥ ४७ ॥

सगुणेश्वरमिति । ये भक्तजनाः सगुणं त्रिगुणात्मकम् ईश्वरं पूजयन्ति तदुपासनां कुर्वन्ति ते कदापि तिरस्कृतिं नार्हन्ति । मूर्तिपूजकः प्रतीकोपासनापरः भक्तः न दोषान्वितः यतः एतादृशः प्रतीकपूजारतः निराकृतिं निर्गुणेश्वरमधिगन्तुं प्राप्तुं सगुणः एव योग्य एव वर्तते ॥ ४७ ॥

गणनातिगजीवखेलने कतिचिज्ज्ञानपराः परेऽबुधाः ।
उपदेक्ष्यति बोधपूर्वकं गुरुधर्मं किल केलिमुत्तमाम् ॥ ४८ ॥

गणनातिगेति । गणनातिगाः असंख्या ये जीवाः तेषां खेलने क्रीडायां कतिचिज्जीवाः ज्ञानपराः अधिगतोत्कृष्टज्ञानाः सन्ति अपरे च अबुधाः अज्ञानिनः अपि सन्ति । गुरुः उच्चतरधर्मं एव एतानुभयविधाञ्ज्ञानिनः अज्ञानिनश्च उत्तमां केलिं क्रीडयैव खेलने न अधिको लाभः इति बोधपूर्वकं स्पष्टीकरणसहितम् उपदेक्ष्यति ॥ ४८ ॥

ज्ञानमार्गोपदेशमुपक्रमते—

इह दार्शनिकाश्च धार्मिका अपि विज्ञानविदो वृथाऽनिशम् ।
'मरणोपरि जीवितं न वा' विषयेऽस्मिन् परितश्चिकित्सवः ॥ ४९ ॥

इहेति । इह अस्मिल्लोके दार्शनिकाः दर्शनशास्त्रानुशीलिनः धार्मिकाः धर्ममार्गावलम्बिनः विज्ञानविदः अपि भौतिकविज्ञानपण्डिता अपि अनिशं नित्यं मरणोपरि मरणानन्तरं जीवितम् अस्ति न वा अथवा 'मरणान्तं च जीवितं मिथ्यैव सत्यमित्यस्मिन् विषये वृथैव चिकित्सां कर्तुमिच्छन्ति ॥ ४९ ॥

यदनंतमनादिजीवनं किमिवास्मिन् भवतां विमर्शनम् ।
'अमरा वयमत्र मा कृथाः समयस्य व्ययमप्रयोजनम् ॥ ५० ॥

यदनन्तमिति । यदस्माकं जीवनम् अनन्तम् अन्तरहितम् अविनाशि अनादि आरम्भशून्यं च विद्यते अस्मिन् विषये भवतां विमर्शनं विचाराभिमुखीभवनं किमिव अस्ति ? नेदमुचितमित्यर्थः । 'वयम् अमरा अमर्त्याः' इति अस्मिन् विषये निश्चयमागन्तुम् अप्रयोजनं समयस्य अपव्ययं मा कृथाः । 'वयममृतस्य पुत्राः' इति तु निःसंदिग्धं श्रुतिवाक्यं, नास्ति तत्र संदेहावकाशः ॥ ५० ॥

वयमादित एव बान्धवा, अजरा ज्ञानमयास्तथाऽमराः ।
इति साधयितुं न दानवो न च देवः समपेक्ष्यते क्वचित् ॥ ५१ ॥

वयमिति । हे बान्धवाः ! सुहृदः ! वयं सर्वे आदित एव न तु किञ्चित्समयानन्तरं अपि तु आरम्भत एव अजरा जराशून्याः ज्ञानमयाः ज्ञानस्वरूपाः, तथा अमरा मृत्युरहिता अनन्ताः स्मः । इति साधयितुं प्रमाणीकर्तुं न दानवो राक्षसो न वा देवः समपेक्ष्यते आवश्यकोपस्थितिकः क्वचिद्विद्यते । आत्मनः अजरामरत्वं तु स्वतःसिद्धं तत्र न कस्यचिदपि बाह्यप्रमाणस्यावश्यकत्वम् ॥ ५१ ॥

मतवादभयातिगामिनी मनुजानामनिशं सहायकृत् ।
इतरेतरमित्रतोद्भवः परमार्थः खलु संविदात्मनः ॥ ५२ ॥

मतवादेति । आत्मनः संविज्ज्ञानम् आत्मज्ञानमित्यर्थः । मतवादेभ्यः धार्मिकमतकलहेभ्यः यद्भयं तदतिक्रम्य स्थिता इति मतवादभयातिगामिनी, मनुजानां मानवानां नित्यं सहायकारिणी, तथा इतरेतरेषां मित्रतायाः उद्भवः उत्पत्तिस्थानम् अत एव परमपुरुषार्थस्वरूपा विद्यते ॥ ५२ ॥

मतभेदतरङ्गिणीततिर्निपतन्त्यस्तमितात्मसंस्थितिः ।
निजबोधमहाम्बुधावियं चिरमद्वैतमतौ विलीयते ॥ ५३ ॥

मतभेदेत्यादि । मतभेदतरङ्गिणीततिः मतभेदः धार्मिकमतभिन्नता तत्स्वरूपा या तरङ्गिणीनां ततिः परम्परा यस्याम् आत्मनः अविनाशितत्वस्य संस्थितिः अस्तित्वम् अस्तमिता विद्यते तादृशी ततिः निजबोधमहाम्बुधौ आत्मज्ञानरूपिणि महासागरे अद्वैतविचारस्वरूपे विलीयते चिरकालपर्यन्तम् अदृश्या भवति । यथार्थतया स्वात्मबोधानन्तरं धार्मिकमतभेदानां पूर्णतया लयः सम्पद्यते इति भावः ॥ ५३ ॥

हृदयादपनीयतां जगत् क्षणिकावस्थिति पाञ्चभौतिकम् ।
अथ तस्य पदेऽनुचिन्त्यतां चिरसच्चित्सुखमात्मगौरवम् ॥ ५४ ॥

हृदयादिति । क्षणिकावस्थिति क्षणकालमेव अवस्थितिः अस्तित्वं यस्यैतादृशं पाञ्चभौतिकं क्षणभङ्गुरं जगत् हृदयात् स्वान्तःकरणादपनीयतां निष्कास्यताम् । तस्य क्षणिकभौतिकसृष्टेः स्थाने सच्चिदानन्दस्वरूपम् आत्मनः गौरवम् गुरुत्वं सर्वव्यापित्वम् अनुचिन्त्यताम् विचारविषयीकर्तव्यम् ॥ ५४ ॥

परिभावय जीवसन्ततिर्मयि चाहं सकलेष्ववस्थितः ।
न शरीर-मनोऽक्षसञ्चयः सुखदुःखादिगसाक्षिलक्षणः ॥ ५५ ॥

परिभावयेति । 'सकला जीवसन्ततिः प्राणिपरम्परा मयि स्थिता अहं च सकलेषु जीवमात्रेषु अवस्थितः'। अहं शरीरं देहः, मनः अन्तःकरणम्, अक्षाणामिन्द्रियाणां च सञ्चयः समूहः अपि न सुखदुःखानितोऽहम् अतिक्रान्तसुखदुःखभावनः केवलं साक्षिस्वरूपोऽहमिति च चिन्त्यताम् ॥ ५५ ॥

जगदक्षपथेन भौतिकं नरकाकृत्यय पापकर्मणाम् ।
त्रिदिवं खलु पुण्यकर्मणां परितो ब्रह्ममयं चिदात्मनाम् ॥ ५६ ॥

जगदिति । जगत् अक्षपथेन अक्षाणामिन्द्रियाणां पथा मार्गेण ईक्षमाणानां भौतिकं पाञ्चभौतिकं परिदृश्यते, पापकर्मणाम् निम्नमार्गेण गच्छतां नराणामिदमेव जगत् नरकाकृति नरकाकारं दृश्यते, पुण्यकर्मणां पुण्यात्मनां तदेव जगत् त्रिदिवं स्वर्गस्वरूपं, परन्तु तदेव जगत् चिदात्मनां ज्ञानिनां चिन्मय आत्मा येषां परितः सर्वत्र ब्रह्ममयं दृश्यते 'सर्वं खलु इदं ब्रह्म' इति तेषां वृत्तिर्जायते ॥ ५६ ॥

अविनाश्यपहाय चिन्मयं नहि सत्ता पृथगस्ति कस्यचित् ।
किमु सागरतो जलोर्मिभिः क्षणमुत्पद्य पुनर्न लीयते ? ॥ ५७ ॥

अविनाशीति । चिन्मयं ज्ञानमयम् अविनाशि अनाद्यनन्तं परमात्मानमेव विहाय कस्यचिदपि अन्यस्य वस्तुनः पृथक् सत्ता नास्ति । तत्र दृष्टान्तमाह—सागरतः समुद्रात् जलोर्मिभिः जलतरङ्गैः क्षणकालपर्यन्तमुत्पद्य ताभिः तस्मिन्नेव सागरे पुनर्न लीयते किमु ? यथा सागरादुत्पद्यमाना ऊर्मयस्तरङ्गाः क्षणं तत्पृष्ठोपरि स्थित्वा पुनस्तस्मिन्नेव विलीयन्ते न तासां समुद्रात् पृथगस्तित्वं विद्यते तस्मिन् चिन्मये आत्मतत्त्वे विवर्तस्वरूपं जगत् उत्पन्नमिव भासते परं चिदात्मनः जगतः पृथक् स्थितिर्नास्ति ॥ ५७ ॥

प्रतिभासवशेन भिन्नता परमद्वैतमतो यथार्थता ।
प्रतिबिम्बितमीक्ष्यते हि सत् तनुचेतोऽखिलबाह्यवस्तुषु ॥ ५८ ॥

प्रतिभासेत्यादि । जगति या भिन्नता नानाविधत्वं दृग्गोचरं भवति तत्केवलं प्रतिभासवशात् प्रातिभासिकमित्यर्थः । विद्यते यथा रज्जौ सर्पः प्रातिभासिकः यथा च शुक्तिकायां रजतं प्रातिभासिकं तद्वत् । हि यस्मात् सत् अनाद्यनन्तं चैतन्यमयमात्मतत्त्वमेव तनौ शरीरे चेतसि अन्तःकरणे, तथा अखिलबाह्यवस्तुषु प्रतिबिम्बितम् ईक्ष्यते अवलोक्यते ॥५८॥

अनिशं कुरु लक्ष्यमुच्चकैरसदर्थोऽनुशयाय कल्पते ।
मृगयुः कुशलोऽन्विषेद्धरिं न शशं गौरवहानिकारणम् ॥ ५९ ॥

अनिशमिति । अनिशं नित्यम् उच्चकैः अत्युच्चं लक्ष्यम् आत्मतत्त्वज्ञानस्वरूपं साध्यं पुरतः स्थापय, यतः यदि असदर्थं अविद्यमानः क्षणिको वाऽर्थः लक्ष्यीक्रियते तर्हि तदनुशयाय कल्पते पश्चात्तापस्य कारणं भवति । मृगयुः व्याधः यदि कुशलः स्वकलाप्रवीणः तर्हि नित्यं हरिं सिंहमेव अन्विषेत् न कदापि स्वगौरवहानिकारणम् अपमानजनकं शशम् अन्विषेत् ॥ ५९ ॥

परिहार्यमदो जगद्बुधैरिति शिक्षा यदि संविदध्वन ।
निजकर्मफलस्पृहां विना व्यवहर्तव्यमिदं तथेष्यते ॥ ६० ॥

कर्मयोगमाह–परिहार्यमिति। बुधैः ज्ञानमार्गावलम्बिभिः अदः जगत् सादि सान्तं च परिहार्यं त्यक्तव्यमित्येतादृशी यदि संविदध्वनः शिक्षा उपदेशः विद्यते तर्हि तत्र तया शिक्षया इदमेवेष्यतेऽभिलष्यते यत् अस्माभिरत्र जगति कर्मणां फलस्पृहां विना फलाकांक्षां विना व्यवहर्तव्यमिति। अयमेव निष्कामकर्मसिद्धान्तः ॥ ६० ॥

कठिना यदि कर्मशून्यता फलहीना जगति क्रिया वरम्।
नहि नामयशःस्वरर्थिभिः क्रियमाणं खलु कर्मसंज्ञितम् ॥ ६१ ॥

कठिनेति। यदि 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति वचनानुसारं कर्मशून्यता कर्मराहित्यं कठिना असंभवा तर्हि कर्म तु कर्तव्यमेव परं तत्कर्म सा क्रिया फलशून्या वरम् क्रिया फलाकाङ्क्षां विना विधेया। यतः नामप्राप्त्यर्थं यशःप्राप्त्यर्थं, स्वर्गप्राप्त्यर्थं च यत्किञ्चित् क्रियते तत्कर्मसंज्ञितं भवितुं नार्हति ॥ ६१ ॥

चरमात्मविकासकारणं भवति स्वार्थपरा नहि क्रिया।
ध्रुवमान्तरिकी समुन्नतिः परलक्ष्यं शुभकर्मवर्त्मनः ॥ ६२ ॥

चरमात्मेत्यादि। स्वार्थपरा क्रिया स्वार्थावलम्बिनी क्रिया चरमात्मविकासकारणं उच्चतमाध्यात्मिकोन्नतेः निदानं न भवति। अतः शुभकर्ममार्गानुयायिनां कृते आन्तरिकी समुन्नतिः आध्यात्मिकी उन्नतिरेव आत्मज्ञानमेव परं श्रेष्ठं लक्ष्यम् उच्यते बुधैः ॥ ६२ ॥

समुपैम्युपकारपात्रतामिति बुद्ध्याऽत्र परार्थमाचरेः।
अपरस्य भवान् सहायकृत् स्वयमेवोपकृतोऽस्ति वस्तुतः ॥ ६३ ॥

समुपैमीति। 'अहमेव उपकारास्पदं भवामि' इति बुद्ध्या एतादृशसंकल्पेन त्वं परोपकारमाचरेः। यद्यहं परोपकारं करोमि तर्हि उपकृतेनाहमेवोपकृतो भविष्यामीति चिन्तयित्वा परोपकारः कर्तव्यः। यदि भवान् अपरस्य कस्यचित् सहायं करोति एतादृशः अस्ति तर्हि वस्तुतः त्वमेव उपकृतोऽसि ॥ ६३ ॥

जगतामधमर्णतां गता यतमानाः परशर्मणे वयम्।
यदि सर्वगतः परेश्वरः प्रभुसेवा परकार्यमुत्तमा ॥ ६४ ॥

जगतामिति। परशर्मणे परेषां कल्याणाय यतमानाः प्रयत्नपरा वयं जगतां जनानामित्यर्थः। अधमर्णतां गता ऋणग्रहीतृत्वं प्राप्ताः। यदि च परमेश्वरः सर्वगतः सर्वव्यापी तर्हि परेषां कृते क्रियमाणं सेवारूपं कार्यमेव प्रभोः ईश्वरस्य उत्तमा सेवा भवेद् ॥ ६४ ॥

परिणामविचारवर्जितं करणीयं निजकर्म साधुभिः।
इयमेव निवृत्तिरुच्यते न च कर्तेह सकर्मबन्धनः ॥ ६५ ॥

परिणामेत्यादि। साधुभिः सज्जनैः परिणामविचारवर्जितं फलबुद्धिरहितमेव निजकर्म आत्मनः कार्यं करणीयम्। इदमेव फलाकाङ्क्षाशून्या कर्मपद्धतिरेव निवृत्तिमार्गः उच्यते एतादृशफलशून्यक्रियाभिरेव कर्ता कर्मबन्धनेन बद्धः न भवति ॥ ६५ ॥

परिशान्तसमुत्सुकालसं त्रिविधं कर्म गुणत्रयक्रमात्।
प्रथमं त्वपरद्वयोत्तरं चरमं साधुभिरुच्यतेऽधमम् ॥ ६६ ॥

परिशान्तेति। परिशान्तं शान्तिमयं, समुत्सुकम् औत्सुक्ययुक्तम् 'अनेन कर्मणाहमिदं लप्स्यामी'त्याकारिकया इच्छया विहितं तथा अलसम् आलस्ययुक्तम् इत्थं कर्म त्रिविधं तच्च क्रमशः सत्त्वरजस्तमोगुणस्वभावात्मकम्। तेषु प्रथमं शान्तिपूर्णं कर्म अपरस्य कर्मद्वयस्य

सुरसुकालसयो: उभय समीचीनतरम् उच्यते चरमम् अन्तिमं तु अपरम् अधर्म कर्मेत्युच्यते ॥ ६६ ॥

चिरमुषमिलचिदागमो मनुजस्यान्तिमसाध्यमुच्यते ।
न तु केवलभौतिकात् सुखात् प्रकटं ज्ञानमिदं भवेद्दृढः ॥ ६७ ॥

चिरमिति । चिरमुषमिन चिरकालपर्यन्तम् उपमशीलस्य चिदागम, शुद्धचैतन्येन सह तादात्म्यमेव मनुजस्य चरमं साध्यम् इष्यते इदमिति उच्यते । केवलं भौतिकात् सुखात् एतादृशं रहस्यमय ज्ञानं प्रकटं न भवति नाधिगम्यते ॥ ६७ ॥

शुभकर्मवशात् पशुः स्वयं मनुजत्वं लभतेऽर्हणागुणम् ।
मनुजस्त्वशुभक्रियाविधेः पशुतामेति पुनर्न संशयः ॥ ६८ ॥

शुभकर्मवशादिति । शुभकर्मवशात् तादृशकर्मकरणात् पशुरपि पशुरूपो मनुष्योऽपि परपशुरपि मनुजत्वं नाम पूजनीयगुणं लभते प्राप्नोति । परं तु तद्विपरीत मनुज अशुभक्रियाविधे पापकर्मकरणात्पुन पशुत्वं प्राप्नोति इत्यत्र न कोऽपि सन्देह ॥ ६८ ॥

शिवकर्मकरा नरा कृशाऽप्यलमेतुं जगतीजिगीषुताम् ।
अलसास्त्वितरे महाबलाः परिहर्तुं संयतान मक्षिकाम् ॥ ६९ ॥

शिवकर्मेति । कृशापि दुर्बलकाया अपि शिवकर्मकरा पुण्यकर्मकर्तार नरा जगतीजिगीषुताम् जगज्जेतृत्वम् एतुं प्राप्तुमलं समर्था भवन्ति परन्तु इतरे अलसा सहबलोऽपि मक्षिकामपि परिहर्तुं अपनेतु सयत्ना समर्था न भवन्ति ॥ ६९ ॥

भक्तिज्ञानशान्तिप्रशान्तिपदवीत्रिस्रोतस पाययन्
तत्रत्यानमृतं स्थिरं च विदधद्वेदान्तकार्यं बृहत् ।
सच्छिष्यान्परितो दिशांश्च पुरतः सञ्चालनं कर्मणः
कुर्वन्नुत्कहृदः स्वकीयसुहृदः प्रापः पुनर्लन्दनम् ॥ ७० ॥

भक्तिज्ञानेत्यादि । भक्तिज्ञानकर्मणां भक्तिज्ञानकर्मणां पदव्य एव त्रिस्रोता भागीरथी (त्रिपथगा) तस्या अमृत उपदेशामृतं तत्रत्यानमेरिकावासिनः पाययन् त्रयाणां मार्गाणां विषये अमृतमयानि वचनानि श्रावयन् । तत्र आरब्धं बृहत् वेदान्तकार्यसंघटन स्थिरं दृढं कुर्वन् । सच्छिष्यान् कर्मणे पुरत सञ्चालनं परित सर्वत दिशन्नुपदिशन् तथा स्वकीयसुहृदः उत्कहृद उत्कण्ठितहृदयान् कुर्वन् स यति पुनर्लन्दननगरीं प्राप ॥ ७० ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाश्चर्यगुणे विवेकचरिते धर्मप्रधानाश्रये ।
साहस्र्याख्यनवोपदेशकविताचित्तेन वित्ते महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽगमद् द्वादश ॥ ७१ ॥

इति त्र्यम्बकसूरिणा विरचिते विवेकानन्दचरिते नाम महाकाव्ये
'इंग्लन्द-अमेरिकाकार्य' नामद्वादश सर्गः ॥ १२ ॥

लोकमिति । लोकमित्यादि 'धर्मप्रधानाश्रये' इत्यन्तं पूर्ववत् 'उपदेशसाहस्री'इत्याख्यमहाकाव्यरचनायामपि वित्त यस्यैतादृशेन त्र्यम्बकसूरिणा विरचिताया विवेकानन्दमहाकाव्यटीकायां 'विवेकदीपाख्याया' द्वादश सर्गः समाप्त ॥

# अथ त्रयोदशः सर्गः

महान्तमेनं विविधांग्लभूपिता नवीनविज्ञानविचारभूषिताः ।
मुदान्वयुर्नव्यमतोपदेशतः श्रद्धान्विताः सत्वरमन्यदेशतः ॥ १ ॥

महान्तमिति । महान्तं गुरुतमम् एनं यति विविधाः बहवः आंग्लभुवि इंग्लन्ददेशे उषिताः वसन्तः नवीना नूतना ये विज्ञानविचाराः वैज्ञानिकज्ञानानि, तैः भूषिता अलंकृताः वैज्ञानिका इत्यर्थः । नव्यमतोपदेशतः स्वामिकृतनववेदान्तधर्मोपदेशकारणात् अन्यदेशतः अमेरिकादिदेशेभ्यः सत्वरमल्पकालादेव श्रद्धान्विताः सन्तः मुदा आनन्देन अन्वयुः अनुजग्मुः ॥ १ ॥

एतेऽब्रुवन् भारतशासका वयं वृथा यथासावनुशास्ति नोऽखिलान् ।
शिष्टोऽपि किं शिष्टतरो विभाति नो धिङ् नः स्वतन्त्रान् परतन्त्रताऽस्य चेत् ॥२॥

एतेऽब्रुवन्निति । एते आंग्लदेशीया अब्रुवन्-वयमिंग्लन्ददेशवासिनः वृथैव निरर्थकमेव भारतशासका भारतस्य शासनकर्तारः यथा अयमेव नः अखिलान् सर्वान् अनुशास्ति उपदिशति । अयमेवास्माकं शास्ता वयं केवलं नाममात्रेण शासकाः । अयमस्माभिः शिष्टः सन्नपि अधिकृतः सन्नपि अस्मत्तः अस्मदपेक्षया शिष्टतरः शिक्षिततरः विभाति दृश्यते । अस्य परतन्त्रता चेदस्मान्स्वतन्त्रान्परतन्त्रान् धिक् । एतद्देशवासिभिरपि अस्माभिरिव स्वतन्त्रैर्भाव्यमिति भावः ॥ २ ॥

इहावसत्कोऽपि विपश्चिदुत्तमः शार्मण्यदेशोद्भवमोक्षमुल्लरः ।
चिरस्य यो निर्जरभारतीपतिर्गृहीतवान् भारतसेवनव्रतम् ॥ ३ ॥

इहावसदिति । इह लन्दननगर्यां शार्मण्यदेशोद्भवः जर्मनीदेशीयः मोक्समुल्लरनामा कश्चित् विपश्चिदुत्तमः विद्वच्छ्रेष्ठः अवसत् । यः निर्जरभारत्यां संस्कृतभाषायां रतिः प्रेम यस्यैतादृशः सन् चिरस्य दीर्घकालपर्यन्तं भारतसेवनव्रतम् भारतसेवानियमं गृहीतवान् स्वीकृतवान् ॥ ३ ॥

स त्वस्मदीयागमशास्त्रदर्शनैः ससंस्तवः पूर्णतया शिवाशयः ।
अवाप्तुमाध्यात्मिकसौख्यसम्पदं दिदेश यध्धूनित भारतीं भुवम् ॥ ४ ॥

स त्वस्मदीयेत्यादि । स मोक्षमुल्लरः अस्मदीयैः भारतीयैः आगमैः वेदैः शास्त्रैः आचारनियमनिर्देशकैः दर्शनैश्च ससंस्तवः पूर्णतया परिचितः शिवः पवित्रः आशयः अन्तःकरणं यस्यैतादृशः आध्यात्मिकसौख्यसम्पदम् आध्यात्मिकानन्दसम्पत्तिम् अवाप्तुमधिगन्तुं भारतीं भुवम् भारतवर्षम् इत गच्छत इति दिदेश उपादिशत् ॥ ४ ॥

येनांग्लभाषालिखितैरनेकशः साङ्गश्रुतिब्राह्मणसन्निबन्धनैः ।
न केवलं पश्चिमदिक्प्रकाशिताऽस्मद्भारतेऽकारि जगत् समादरम् ॥ ५ ॥

येनेति । येन मोक्षमुल्लरेण आंग्लभाषालिखितैः अनेकशः अनेकैः साङ्गश्रुतिब्राह्मणसन्निबन्धनैः वेदवेदाङ्गब्राह्मणग्रन्थैः न केवलं पश्चिमदिक् पाश्चात्यं जगत् प्रकाशिता अपितु

सर्वं जगत् सकलसंसार भारतदेशे समादरं साग्रहादरयुक्तं चकार कृतवान्। तत्कृत-ग्रन्थप्रकाशनैः जगत् भारतं प्रति सादरमवलोकयत् इति भावः ॥ ५ ॥

अभूदयं सादरमानसः स्वयं श्रीरामकृष्णेऽपि निशम्य तद्यशः ।
इयेष तत्सच्चरितप्रकाशनं 'प्रकाशदाने परमस्ति कः प्रभुः' ॥ ६ ॥

अभूदिति। अयं मोक्षमुलरः तस्य यशः कीर्तिं निशम्य श्रीरामकृष्णेऽपि स्वयं सादरं श्रद्धायुक्तं मानसमन्तःकरणं यस्यैतादृशोऽभूदजनि। तस्य चरित्रमपि प्रकाशयितुम् इयेष अभिलषितवान्। परं स अनेन हेतुना चिन्तितः आसीत् यत् श्रीरामकृष्णचरित्रलेखनकार्यं प्रकाशदाने आवश्यकसामग्रीवितरणे कः प्रभुः समर्थः स्यात् ॥ ६ ॥

तां चिन्तां श्रीविवेकानन्दस्वामी परिजहार इत्याह—

परस्परप्रत्ययकृष्टमानसौ युवप्रवृद्धौ मिलितावुभावपि ।
एको महान् विश्वशिवव्रती यतिः परः पुराणर्षिसमानदर्शनः ॥ ७ ॥

परस्परेत्यादि। परस्परं अन्योऽन्यं प्रति यः प्रत्ययः विश्वासः तेन इतरेतरं प्रति आकृष्टं मानसं ययोः एतादृशौ तौ एकः स्वामी युवा अपरः शार्मण्यपण्डितः वृद्धः एवमुभावपि मिलितौ। ययोरेकः स्वामी महान् गुरुतमः विश्वशिवव्रतः जगत्कल्याणकाङ्क्षी अपरश्च पुराणर्षिसमानदर्शनः प्राचीनभारतीयर्षितुल्यं दर्शनं यस्यैतादृशः आसीत् ॥ ७ ॥

उभावमू ज्ञानमहापयोनिधी प्राक्प्रत्यगाशाद्वयमेलनक्षमौ ।
ईशेच्छयैवैकपदे समागतौ समान्तरावेकपदे जगद्धितौ ॥ ८ ॥

उभाविति। उभावपि द्वावप्यमू एतौ ज्ञानस्य महान्तौ पयोनिधी समुद्राविव स्थितौ प्राक्प्रत्यगाशाद्वयमेलनक्षमौ पूर्वपश्चिमोभयदिशामेलने उभयदिशोः समीपतरानयने क्षमौ समर्थौ एकपदे अकस्मात् ईशस्येश्वरस्येच्छयैव एकपदे एकस्मिन् स्थाने जगद्धितौ संसार हितकारिणौ समं तुल्यम् आन्तरं मानसं ययोः ईदृशौ सन्तौ समागतौ मिलितौ ॥ ८ ॥

तौ संगतावर्जुनकृष्णविग्रहौ महात्मवार्तोल्लसितान्तरौ रहः ।
श्रुतिष्वतीवादरपूर्णमानसौ तदैकवर्णाविव संबभूवतुः ॥ ९ ॥

तौ संगताविति। तौ स्वामिमोक्षमुलरौ अर्जुनकृष्णविग्रहौ श्वेतसितशरीरौ एकः आङ्ग्लदेशीयोऽपरश्च भारतीयः इत्यर्जुनकृष्णशरीरौ रहः एकान्ते महात्मनः आत्मनश्च वार्तालापेन उल्लसिते आन्तरे मानसे ययोः एतादृशौ, श्रुतिषु वेदेषु विषये अतीवादरपूर्ण-मानसौ श्रद्धावन्तौ सन्तौ तदा उभयसम्मेलनसमये एकवर्णाविव ब्राह्मणवर्णाविव संबभू-वतुः अभवताम् ॥ ९ ॥

प्रकाशितं मुल्लरकोविदेन यच्छ्रीरामकृष्णस्य चरित्रमुत्तमम् ।
तत्रोदितं प्राच्युदिता नु तारका नवावतारः परहंसविग्रहः ॥ १० ॥

प्रकाशितमिति। यत् मुल्लरकोविदेन मोक्षमुल्लरपण्डितेन श्रीरामकृष्णस्य उत्तमं चरित्रं जीवनवर्णनात्मकं प्रकाशितं विलिख्य प्रथितं तत्र 'प्राच्यां दिशि पूर्वदिशायां परहंसविग्रहः रामकृष्णपरमहंसस्वरूपः तारकानवावतारः नवनक्षत्रमिव उदितः उदयमागतः' इति उदितमास्ते ॥ १० ॥

मुधा बुधैवं प्रवदन्ति संगता प्राच्या प्रतीची भविता कदापि नो ।
एतावभूतां तु विवेकमुल्लरौ प्रतीकमेतादृशसंगमे ध्रुवम् ॥ ११ ॥

बुधा इति । 'प्रतीची पश्चिमा दिक् प्राच्या दिशा कदापि संगता मिलिता नो भविता न भविष्यति' इति बुधाः पण्डिता मुधैव निरर्थकमेव प्रवदन्ति । परमेतस्य वचनस्य विरोधे विवेकसुन्दरो एतादृशसंगमे ध्रुवम् निश्चयेन प्रतीकं संगमलक्षणमभूताम् ॥ ११ ॥

अहो ! अयं भारतभारतीयसत्साहित्यविद्यादिषु सादरान्तरः ।
वयं पुनर्विश्वशिवादिकारणे भृशं तिरस्कारपराः स्वमातरि ॥ १२ ॥

अहो इति । अयं पाश्चात्योऽपि सन् भारतीयाम् सत्यः समीचीनाः साहित्यं वाङ्मयं च विद्याः चतुर्दशविद्याः आदयः येषु तानि तेषु साहित्यविद्यादिषु शास्त्रेषु सादरं सश्रद्धम् आन्तरं यस्यैतादृशः जात इत्यहो ! आश्चर्यम् । परं वयं विश्वशिवादिकारणे सकल-विश्वकल्याणहेतुभूतायां स्वमातरि मातृभूमौ भृशम् अत्यधिकं तिरस्कारपरा निरादरपूर्ण-मानसा इत्यहो अस्माकं दुर्दैवम् ॥ १२ ॥

यतिं प्रयान्तं सुहृदं समीक्षितुं विद्वद्वरोऽतिस्थविरोऽपि सादृतिः ।
हार्दप्रकाशाय स वाति वेगतः सवृष्टिवातेऽग्निरथालयं ययौ ॥ १३ ॥

यतिं प्रयान्तमिति । सुहृदं मित्रं प्रयान्तं गच्छन्तं समीक्षितुं स्थविरोऽपि वृद्धोऽपि विद्वद्वरः अपि मोक्षमुल्लरः हार्दप्रकाशाय स्वादरप्रकाशनार्थं वेगतः अतिवेगेन वृष्टिसहित-वाते झंझावाते वाति वहति सति अग्निरथालयं वाष्पयानाश्रयस्थानं ययौ गतः ॥ १३ ॥

अपार्थमेवास्ति समागतो भवान् प्रचण्डवाते समुपेक्ष्य वार्धकम् ।
इतीरितः स्वं कृतिनं समर्थये समीक्ष्य देवानुचरं जगाद सः ॥ १४ ॥

अपार्थमिति । भवान् वार्धकं स्वकीयां वृद्धावस्थां समुपेक्ष्य अविगणय्य अस्मिन् प्रचण्ड-वाते झंझावाते अपार्थमेव व्यर्थमेव समागतोऽस्ति इति स्वामिना ईरिते उक्ते सति स मोक्षमुल्लरः देवानुचरं श्रीरामकृष्णपरमहंसस्य शिष्यं समीक्ष्य स्वमात्मानं कृतिनं धन्यं समर्थये मन्ये ॥ १४ ॥

अध्यापयंस्तत्र जनाननेकशः समाहितान्तःकरणान् विधाय तान् ।
सार्धं सुहृन्मुल्लरकन्यकाभिः यूरोपदेशभ्रमणाय निर्ययौ ॥ १५ ॥

अध्यापयन्निति । तत्र आंग्लदेशे अनेकशः जनान् अध्यापयन् धर्ममुपदिशन् तान् उपदेशश्रोतॄंश्च समाहितान्तःकरणान् विधाय आश्वस्तचित्तांश्च कृत्वा सुहृद्भिः मुल्लरकन्य-काभिः सार्धं यूरोपभ्रमणार्थं निर्ययौ निर्गतः ॥ १५ ॥

उपागतः स्विज्झरलन्दनीवृतं वृतं समन्ताद्गिरिनिर्झरैः सुखैः ।
सुखैकहेतोः क्षितिवासिनां परं परं सुराणां पदमीशकल्पितम् ॥ १६ ॥

उपागत इति । स्विज्झरलन्दनीवृतं तन्नामकदेशं 'नीवृज्जनपदो देशे' इत्यमरः । उपागतः । प्राप्तः कीदृशम् 'समन्तात्परितः सुखैः सुखकारकैः गिरिनिर्झरैः पार्वतप्रपातैः, वृतं पूर्णम् । क्षितिवासिनां भूतलनिवासिनां सुखैकहेतोः सुखम् आनन्द एव एकः हेतुः कारणं तदर्थं परं सर्वोन्नतं परम् इतरत् ईशकल्पितं सुराणां पदं स्थानं स्वर्गमित्यर्थः ॥ १६ ॥

शंसन्घटीयन्त्रकृतां स कौशलं भृशं प्रसन्नः प्रकृतिद्युतेर्वशात् ।
नतेन मूर्ध्ना गिरिजासु पूजयन् मेरीं सपुत्रां मुदितो यतीश्वरः ॥ १७ ॥

ग्रामस्थिति । स्विट्जरलन्दे घटीयन्त्रकृतां मणियन्त्रघटिकोद्यमिनां कौशलं कुशलतां शासन् प्रशंसन्, प्रकृतिपुनर्वेशात् प्राकृतिकसौन्दर्यदर्शनात् मुदमत्यधिक प्रमदं सुखिन गिरिजासु प्रार्थनामन्दिरेषु सपुत्रां ससुतां जिसस्सहितां मेरीं मातरं नतेन मूर्ध्ना शिरसा पूजयन् अर्हयन् यतीश्वर स्वामी मुदित ॥ १७ ॥

अथायमामंत्रणमाप्य कोविदाच्छार्मण्यदेशोद्भवपॉलडाय्सनात् ।
इयाय कीलाभिधपत्तनस्थितं विश्वस्यविद्यालयमुन्नतप्रथम् ॥ १८॥

अथायमिति । अथानन्तर कोविदात् सुधिय शार्मण्यदेशोद्भवात् जर्मनीदेशोत्पन्नात् प्राध्यापकपॉलडायसनात् आमन्त्रणं प्राप्य स द्रष्टुम् उन्नतप्रथं प्रसिद्धं कीलाभिधपत्तनस्थित विश्वस्यविद्यालयम् इयाय गतवान् ॥ १८ ॥

प्राध्यापकोऽसीय मुदान्वितो यतिं निवस्तुमभ्यर्थितवान् गृहे चिरम् ।
वेदान्तविद्यापरिशीलनामलान्तरावविद्धानिर्वचनीयनिर्वृती ॥१९॥

प्राध्यापक इति । प्राध्यापक पॉलडायसन स्वामिदर्शनेन अतीव मुदान्वित स्वगृहे चिर दीर्घसमयपर्यन्त निवस्तु निवास कर्तुमभ्यर्थितवान् । गृहे वेदान्तविद्यापरिशीलनेन वेदान्तविषयिकया आलोचनया अमले आन्तरे मानसे ययोरेताद्दशौ तावुभौ अनिर्वचनीया निर्वृति' आनन्द ययोरेताद्दशौ जातौ । डायसन एतावान् वेदान्तविचाराकृष्टचेता जात' येन स आत्मान 'देवसेन नाम्ना प्रथितमकार्षीत् ॥ १९ ॥

स्वजीवनं पालविपश्चितोऽत्रसद्वेदान्तसद्भावविचारचर्चया ।
निर्धारितं यापयितुं यतो यतेः स्थानेऽजनिष्टास्पदमेष चक्षुषो. ॥ २० ॥

स्वजीवनमिति । पॉलविपश्चिता पॉलविदुषा स्वजीवनम् अत्रसन् ज्ञानप्रकाशपूर्वं प' वेदान्त तद्गतसद्भावानां विचारचर्चया चिन्तयालोचनया यापयितुम् आजीवन वेदान्त-परिशीलन विधातु यत यस्मात् कारणात् निर्धारित निश्चित तत स प्राध्यापक' यते स्वामिन चक्षुषो नयनयो' आस्पद विषय अजनिष्ट जात । उभयो परस्परदर्शन योग्य मेवाऽभूत् ॥ २० ॥

स्वामी तुतोषाहमुपस्थित स्तुता शोपेनहाराचिंततातकाश्यपीम् ।
यत्रोषिता संस्कृतभारतीरता अवर्धयन् भारतगौरवं बुधा ॥२१॥

स्वामीति । 'अह शोपेनहार'—नामकेन प्रसिद्धदार्शनिकेन अर्चिता पूजिता तातकाश्यपीं पितृभूमिम् शार्मण्यदेशीया जन्मभूमि 'मातृभूमि' इति न वदन्ति अपितु 'पितृभूमि' इति । यत्र देशे संस्कृतभारतीरता संस्कृतभाषाध्ययनरता बुधा पण्डिता भारतगौरव ससारे-ऽवर्धयन् ॥ २१ ॥

सत्यानुसन्धानकृतां कृते यथा वेदान्तविद्योपनिषत्प्रकाशिता ।
पन्थानमिष्टं सरलं समादिशेत् तस्योपमा क्वापि न सत्यमुच्यते ॥ २२ ॥

सत्यानुसन्धाने यादि । उपनिषत्प्रकाशिता उपनिषद्ग्रन्थै प्रकटीकृता वेदान्तविद्या सत्यानुसन्धानकृता सत्यान्वेषणकारिणा जिज्ञासुना कृते यादृश सरलम् इष्ट योग्य च पन्थान मार्गं समादिशेदुपदिशेत् । तस्य उपमा जगति कुत्रापि न दृश्यते इति सत्य-मुच्यते ॥ २२ ॥

यूरोपयात्रासु यथा यथा यतिर्भ्रमन् प्रयातो नवमार्गदर्शकः ।
तथा तथा नॄन् परितः स दृष्टवान् निःश्रेयसे भारतदत्तचक्षुषः ॥ २३ ॥

यूरोपयात्रास्विति । यतिः यथा यथा यूरोपयात्रासु नवमार्गदर्शकः वेदान्तपथप्रचारकः भ्रमन् प्रयातः पुरतः अगच्छत् तथा तथा परितः सर्वत्र एतादृशान् नॄन् मनुष्यान् दृष्टवान् ये निःश्रेयसे परमकल्याणार्थं भारते एव दत्तानि चक्षूंषि येषामेतादृशाः आसन् ॥ २३ ॥

ऊचेऽयमुच्चैः प्रति भारते जनानुत्तिष्ठतालं चिरघोरनिद्रया ।
नवा युवानः कतिचित् दृढव्रताः कुर्वन्ति वेदान्तमयं भुवस्तलम् ॥ २४ ॥

ऊचेऽयमिति । अयम् स्वामी भारतीयजनान् प्रति भारतीयबान्धवान् प्रति उच्चैः उच्चस्वरेण ऊचे उक्तवान् । हे भारतीयाः ! उत्तिष्ठत जाग्रत अद्यावधि यस्यां घोरनिद्रायां यूयं प्रसिताः आस्त तां घोरनिद्रां परित्यजत । दृढव्रताः कार्यतत्पराः कतिचिदपि नवयुवकाः बद्धपरिकरा भवन्ति तर्हि अखिलं भुवस्तलं भूमण्डलं वेदान्तमयं करिष्यन्ति इत्यत्र नास्ति संदेहावकाशः ॥ २४ ॥

जागर्ति चेन्नः समये न भारतं प्रचारयिष्यन्नवविश्वबन्धुताम् ।
अशिक्षिता जन्यरता नराः क्षितौ क्षतां विधास्यन्त्यपि मातरं भुवम् ॥२५॥

जागर्तीति । नः अस्माकं भारतं चेद्यदि समये यारयकाले न जागर्ति किं कुर्वत् ? नवीनां विश्वबन्धुतां विश्वभ्रातृतां प्रचारयिष्यत् तर्हि क्षितौ पृथिव्यां अशिक्षिता नराः न केवलं जन्यरता युद्धमग्ना भविष्यन्ति अपितु मातरं भुवं स्वमातृभूमिमपि क्षतां आपदाक्रान्तां विधास्यन्ति ॥ २५ ॥

अतः प्रतीच्यां दिशि पॉलमुल्लरोपमा भवेयुर्भवतां सुहृत्तमाः ।
यैरस्मदीयोपनिषत्सु भाषितं सन्देशसर्वस्वमिहोपदिश्यताम् ॥ २६ ॥

अत इति । अतः आपद्भ्यः संसाररक्षणार्थं प्रतीच्यां दिशि पश्चिमस्यां पॉलमुल्लरसदृशा भवतां युष्माकं सुहृत्तमाः घनिष्ठमित्रतामापन्ना भवेयुः । यैः सुहृत्तमैः अस्माकं उपनिषत्सु-भाषितं विश्वभ्रातृस्वरूपं संदेशसर्वस्वं वाचिकरहस्यम् अत्र यूरोपदेशे उपदिश्यताम् श्राव्यताम् ॥ २६ ॥

ययौ स हालन्दरसां रसातलं यूरोपखण्डस्य समं सुहृद्वरैः ।
यत्रोदधिर्भूतलतः समुन्नतो रुद्धो ऽस्त्युच्चैरवरोधबन्धनैः ॥ २७ ॥

ययाविति । स यतिः स्वामी यूरोपखण्डस्य रसातलं पातालं हालन्दरसं हालन्दभूमिं सुहृद्वरैः समं ययौ । यत्र हालन्दरसायां भूतलतः भूतलादपि उन्नतः उदधिः समुद्रः उच्चैः तत्रत्यजनैः अवरोधबन्धनैः कृत्रिमप्रस्तरादिबन्धनैः अवरुद्धः भूमेरपि उच्चपृष्ठस्य समुद्रस्य जलं निम्नभूतलं न प्लावयेदिति हेतोरित्यर्थः ॥ २७ ॥

अन्नत्यदेशेषु यथा यथा यतेरयाद् रयेण प्रसृतिं यशोरुचिः ।
तथा तथा विश्वहितस्य दर्शने वृद्धिं गता हिन्दनृणां मनोरुचिः ॥ २८ ॥

अन्नत्येत्यादि । यथा यथा यतेः स्वामिनः यशोरुचिः यशःकान्तिः अन्नत्यदेशेषु

पाश्चात्यविविधभूमिषु मध्ये रयेण वेगेन प्रसृतिं विस्तारं अयान् प्राप्ता, तथा तथा विश्वहितस्य जगत्कल्याणेच्छोः स्वामिनः दर्शने हिन्दनृणां भारतीयमनुष्याणां रुचिः अभिलाषोऽपि वृद्धिं गता ववृधे ॥ २८ ॥

अकिञ्चनः स्वार्थविमुक्तमानसः काषायवासा न यशोभिलाषुकः ।
स्वालौकिकाचारवशादसौ हृदि प्रत्यग्जनानां चिरवासमाप्तवान् ॥ २९ ॥

अकिञ्चन इति । अकिञ्चनः निर्धनः नास्ति किञ्चन यस्य सः स्वार्थविमुक्तमानसः परित्यक्तस्वार्थः काषायवासाः गैरिकवस्त्रधारी न यशोभिलाषुकः कीर्त्यभिलाषशून्यः असौ स्वस्य निजस्य अलौकिकाचारवशात् दिव्याचरणहेतुना प्रत्यग्जनानां हृदि चिरवासं दीर्घकालस्थायिनमावासं प्राप्तवान् जनाः तं न विसस्मरुरित्यर्थः ॥ २९ ॥

स्वान्तेषु तेषां ससृजेऽमुना पुनर्विश्वैकताधीरुपदेशभाषितैः ।
वेदान्त एवैतदशाभावनोद्भवे भवेत्समर्थं किल नापरा सृतिः ॥ ३० ॥

स्वान्तेष्विति । अमुना स्वामिना तेषां पाश्चात्यानां स्वान्तेषु निजैरुपदेशभाषितैः विश्वैकताधीः सम्पूर्णविश्वस्यैकीकरणविचारः ससृजे उत्पादितः । तथा वेदान्तमदृश एव तादृशविश्वैकताविचारस्योद्भवे उत्पत्तौ समर्थं अलं भवति इति निःसन्दिग्धम् । एतल्लक्ष्यप्राप्त्यर्थं अपरा सृतिः मार्गः न विद्यते 'नान्यः पन्था विद्यतेऽयनाय' ॥ ३० ॥

हालन्दतो लन्दनमागतः पुनर्यूनो वयस्कः किल कीलशिक्षकः ।
उक्तीः समाकर्ण्य सुधासमा बुधस्तृप्तिं न यातोऽप्यसकृत्सदोगतः ॥ ३१ ॥

हालन्दत इति । हालन्दतः यूरोपखण्डात् पुनः लन्दनमागतः वयस्कः वृद्धः बुधः पण्डितः कीलशिक्षकः कीलस्थविद्यालयप्राध्यापकः डायसन यूनो यते असकृत् बहुवारं सदोगतः तेन सह भाषणसभायां श्रोतृरूपेण गतः सन् सुधासमाः मधुराः उक्तीः समाकर्ण्य तृप्तिं न ययौ । 'अर्थम केन तृप्यते' इति भावोक्तिः ॥ ३१ ॥

प्रयास्यतो विश्वमहापुरात्यतेर्मित्राणि शिष्याः स्थविरा युवस्त्रियः ।
समागता सन्तु शिवास्तवानिशं पन्थान इत्थं भणितुं समन्ततः ॥ ३२ ॥

प्रयास्यत इति । विश्वमहापुरात् लन्दननगरात् प्रयास्यतः तन्नगरं विहायान्यत्र गमिष्यतः यतेः इंग्लैंडवासिनः शिष्याः मित्राणि सुहृदः स्थविराः वृद्धाः युवानः स्त्रियश्च समन्ततः अभितः प्रदेशात् 'हे स्वामिन् ! अनिशं तव पन्थानः शिवाः सन्तु' इति भणितुं भाषितुं, समागताः । यस्मात्स्थानात् स निर्गतः तत्र मिलिता आसन् ॥ ३२ ॥

अहो ! अमीषां दृढहार्दबन्धनं सर्वेऽपि तेऽस्राकुलितेक्षणाः क्षणम् ।
मुनिस्तदुत्कण्ठनयाऽनया भृशं चिराय किंकार्यविमुग्धतां ययौ ॥ ३३ ॥

अहो ! इति । अहो इत्याश्चर्यम् अमीषामाङ्ग्लजनानां दृढम् अशिथिलं हार्दबन्धनं प्रेमाकर्षणम् । यतः स्वामिनः गमनसमये सर्वेऽपि ते अस्रैः अश्रुभिः आकुलितानि ईक्षणानि येषामेतादृशाः क्षणं क्षणकालपर्यन्तं जाताः इति शेषः । मुनिः स्वाम्यपि तेषामेतयोत्कण्ठया चिराय दीर्घकालपर्यन्तं किंकार्यविमुग्धतां ययौ किङ्कर्तव्यमूढोऽजनि ॥ ३३ ॥

ततो रसाभ्यसरस्वदूर्मिभिः प्रक्षालितां रोमकराज्यमेदिनीम् ।
गतः पुरे राजपुरीं स दृष्टवान् रोमाभिधां तैवरतीरसंस्थिताम् ॥ ३४ ॥

तत इति। ततः अनन्तरं लन्दनतः प्रयाणानन्तरं रसामध्यसरस्वदूर्मिभिः भूमध्यसागरतरङ्गैः प्रक्षालितां धौतां रोमकराज्यमेदिनीं रोमनसाम्राज्यभूमिं आधुनिक-इटलीनाम्नीं गतः पुरः स्वपुरतः राजपुरीं रोमनसाम्राज्यराजधानीं रोमनगरीं तैबरतीरसंस्थितां तैवरास्यनदीतीरे प्रसृतां दृष्टवान्॥ ३४॥

यन्न्यस्तमूला वृकरक्षितेन रोम्यूलसेनाथ च रोमसेन तत्।
साम्राज्यभूपा श्रुतजन्यकौशला 'रोमे'ति नाम्ना भुवि भाविताऽजनि॥३५॥

यन्न्यस्तमूलेति। यत्तस्मात्कारणात् वृकरक्षितेन-कश्चिद्वन्यवृकः द्वौ बालकौ अपहृत्य वनं नीतवान्, तयोर्नाम्नी रोम्यूलसः तथा रोमसः इत्यास्ताम्, वृकीदुग्धपालिताभ्यां ताभ्यामियं राजधानी स्थापिता अत एव नगरस्य नामापि 'रोम' इत्येव जातम्। इयमेव नगरी रोमनसाम्राज्यस्यालङ्कारभूता तथा श्रुतं प्रसिद्धजन्यकौशलं युद्धनैपुण्यं यस्या एतादृशी भुवि संसारे 'रोम' इति नाम्ना भाविता प्रसिद्धा अजनि॥ ३५॥

साम्राज्यमेतद्बलवत्पुरा यभौ प्राचेतसी दिक् सकलाऽस्य विस्तृतिः।
लोकोक्तिरेषा प्रसृता च सर्वतः प्रयान्ति मार्गाः किल रोमपत्तनम्॥३६॥

साम्राज्यमिति। एतद्रोमनसाम्राज्यं पुरा अतिबलवत् शक्तिशालि बभौ प्रसिद्धमासीत्। सकलापि प्राचेतसी दिक् अस्य रोमनसाम्राज्यस्य विस्तृतिः विस्तारस्वरूपा आसीत्। अत एव कारणात् एषा लोकोक्तिः सर्वतः प्रसृता। का सा? 'सर्वतः सर्वेऽपि मार्गाः रोमपत्तनमेव प्रयान्ति' इत्याकारिका ( all Roads lead to Rome )॥ ३६॥

पुरे क्वचिच्चारुणि वेनिसाह्वये महापथाः सन्ततनीरपूरिताः।
पौराः समोदं तरणीसहायकाः प्रयान्ति यस्मिन्गृहतो गृहान्तरम्॥३७॥

पुरे इति। क्वचित् इटलीदेशे चारुणि सुन्दरे वेनिसाह्वये नगरे महापथाः राजमार्गाः नीरपूरिताः जलसंभृताःसन्ति यत्र नगरे पौराः पुरवासिनः तरणीसहायका एव नौकाभिरेव गृहतः एकस्माद् गृहात् गृहान्तरम् अन्यद् गृहम् प्रयान्ति॥ ३७॥

आसादितं किं यमिनाऽमुनाऽधुना दिशि प्रतीच्यां भ्रमता समन्ततः।
नृसंघशक्तिः परमः समुद्यमो नवीनविज्ञानरुचिर्निरन्तरम्॥३८॥

आसादितमिति। अमुना यमिना अधुना इदानीं प्रतीच्यां दिशि पश्चिमदिशायां समन्ततः सर्वतः भ्रमता किमासादितम्। तत्रोत्तरम्-नृसंघशक्तिः नृणां मनुष्याणां संघशक्तिः संघटनाबलम्, परमः श्रेष्ठः समुद्यमः उद्यमशीलता तथा निरन्तरं नवीनविज्ञानरुचिः वैज्ञानिकाविष्कारविषयकः अभिलाषः। एत एव गुणाः भारतेन पश्चिमदिशातः ग्राह्याः सन्ति॥ ३८॥

किं चाधिकमासादितम्?—

अभीष्टलक्ष्यागममार्गमन्तरा स्थितान्तरायानभिभूय भूयसः।
सकर्मताऽङ्गीकरणं जनान्तरालसद्गुणग्राहकतान्तरान्तरम्॥३९॥

अभीष्टलक्ष्येत्यादि। अभीष्टं प्राप्तुमिष्टं यल्लक्ष्यं तस्य आगमः लाभः तस्य मार्गः उपायः तमन्तरा तन्मध्ये इत्यर्थः। स्थितान् विद्यमानान् भूयसः अनेकान् अन्तरायान् अभिभूय

विजित्य सकर्मता उद्योगक्षमता तथा आन्तरान्तर मानसाभ्यन्तरे अनान्तरात् अन्यत्र नैम्य-स्सद्गुणानाम् प्रसिद्धमद्गुणानाम् अङ्गीकरण ग्रहणशीलत्वम् ॥ ३९ ॥

कि चापर लिखितम् ?

सव्यूहनं प्राक्तनरोममानवाच्छार्मण्यदेशीयजनाच्च वीरताम् ।
सत्यं शिवं सुन्दरतामथेन्सतो मूल्यं गुणानां स्थिरमाङ्ग्लनीवृत. ॥४०॥

सव्यूहनमिति । प्राक्तनरोममानवात् सव्यूहन संघटनशक्ति, शार्मण्यदेशीयजनात् जर्मनदेशनिवासिभ्य शूरताम् अथेन्सनगरात् सत्य शिव सुन्दरमिति गुणत्रयम् तथा आङ्ग्लनीवृत इङ्गलन्ददेशात् परेषां गुणानां स्थिर निश्चित मूल्यम् तेन लिखितम् ॥ ४० ॥

नभोमहानीलसरिद्वयोच्छलन्नीलापगाक्षालितमिस्रभूमितः ।
पुरोभयाशामिलनामलस्थलात् पुराणवस्तुप्रतिरक्षणादर ॥ ४१ ॥

नभोमहेत्यादि । नभ स्वच्छनिम्नगी आकाशस्वरूपा या महानीलनदी तस्या उच्छल यस्या ईदृशी उच्छलन्ती वेगेन वहन्ती या नीलापगा ईजिप्तदेशीया सरित् तया क्षालिता धौता या मिस्रभूमि मिस्रदेश तस्मात् पुरा उभयाशयो पूर्वपश्चिमयो मिलनस्य पवित्रस्थल-भूतात् मिस्रदेशात किं लिखितम् पुराणाना वस्तूनां 'पिरामिड' इत्याख्यानां रक्षणे आदर तेनासादित उपरि महान् नीलाकाश एव महती नीलनदी तस्या एव स्वर्गीयनद्या नीलनदी उत्पन्ना । तथा अत्र मिस्रदेशे भारतात् तथा ग्रीसदेशात् विद्वास मिलिता आसन् अत्रैव औपनिषदिकी पुनर्जन्मन कल्पना पायथागोरसनामकेन ग्रीसदेशीयेन गृहीता इति इतिहास कथयति ॥ ४१ ॥

आरुह्य नौकां महतीं दिवानिशं करोति भास्वान् पृथिवीप्रदक्षिणाम् ।
कदाप्यहिर्नाम भुजंगमो ग्रसत्यमुं जनैरत्र विलोक्यते ग्रह. ॥ ४२ ॥

आरुह्येति । भास्वान् सूर्य महतीं नौकामारुह्य दिवानिश पृथिवीप्रदक्षिणां करोति इत्यपि मिस्रीयाणां विश्वास तादृशभ्रमणसमये अहिर्नाम कश्चित् बलवान् भुजगम सर्प नौकारूढ सूर्य ग्रसति इदमेव भुजगमकर्तृक सूर्यस्य ग्रसन सूर्यग्रहणमित्युच्यते मिस्रदेशीयै ॥ ४२ ॥

शार्मण्यदेशो लघुराज्यसंकुलो विस्मार्कविल्हेममतिप्रभावत ।
शक्ते प्रतीकं नयमेकराष्ट्रता गतोऽचिरात् संघबलस्य नोपमा ॥ ४३ ॥

शार्मण्येति । ऊनविंशतितमस्य शत्या (१८६०) शार्मण्यदेश अनेकै लघुस्वतन्त्रराज्यै सकुल व्याप्त आसीत् परं विस्मार्कनामकमन्त्रिण प्रभावात् बुद्धिबलात् तथा तन्नृपविल्हेम-नामकनृपस्य च प्रभावात् शक्ते बलस्य नव प्रतीक चिह्नम् एकराष्ट्रता नाम अचिरात् अल्प-समय एव गत प्राप्त । सत्यमुच्यते यत् संघबलस्य उपमा सादृश्यं नास्ति ॥ ४३ ॥

फ्रेञ्चाङ्ग्लशार्मण्यजनप्रवर्धिताऽवनेर्नवाया उररीक्रियोचितम् ।
सौन्दर्य-नीति प्रभुता गुणत्रयं महत्तमं राष्ट्रसमृद्धिलक्षणम् ॥ ४४ ॥

फ्रेञ्चेत्यादि । फ्रञ्चै फ्रांसदेशीयै आङ्गल इङ्गलन्दवासिभि तथा शार्मण्यदेशीयै जनै सर्वैरेभिरित्यर्थ । नवाया प्रवर्धिताऽवने अमेरिकाया सौन्दर्य (फ्रेञ्चानां) नीति (आङ्गलानां) प्रभुताबल 'शार्मण्यदेशीयानाम्' एतन्नामक गुणत्रय यदि स्वीक्रियते तर्हि तत् महत्तम राष्ट्रसमृद्धिलक्षणम् राष्ट्रोन्नतिचिह्नम् प्रसिद्धम् ॥ ४४ ॥

इस्तंबुलं नाम पुरं पुरातनं तुर्कीयशक्तेरवशेषखण्डकम् ।
सन्दर्शयत्यन्यधरापहारतो स्वकीयमप्येति विलोपनं क्षणात् ॥ ४५ ॥

इस्तम्बुलमिति । इस्तंबुलं नाम पुरातनं पुरं नगरं तुर्कीयशक्तेः सम्पूर्णयूरोपखण्डे प्रसृतायाः राजशक्तेः अवशेषखण्डकम् अवशिष्टांशभूतं अन्यधरापहारतः अन्यदेशानां स्वसंवतापहरणेन स्वकीयमपि अन्ते क्षणाद् अचिरात् विलोपनं नाशम् एति इति दर्शयति ॥ ४५ ॥

स शारदाभेदसुहृत्सहायतः स्वकार्यचिन्ताभरतो विमोचितः ।
पाश्चात्यशिष्यैरथ सार्धमुत्सुकान् द्रष्टुं प्रतस्थे निजदेशबान्धवान् ॥ ४६ ॥

स शारदेत्यादि । स स्वामी शारदानन्दः तथा अभेदानन्दः इत्युभयसुहृदोः सहायतः स्वकार्यचिन्ताभरतः पाश्चात्यदेशेषु क्रियमाणस्य कार्यस्य चिन्ताभारात् विमोचितः बन्धनरहितः कारितः सन् पाश्चात्यशिष्यैः संवियर-निवेदितामभृतिभिः सार्धम् उत्सुकान्निजदेशबान्धवान् द्रष्टुं प्रतस्थे प्रस्थितः ॥ ४६ ॥

यः प्रेमभावः प्रति भारतं यतेः प्रत्यागतेरागमनप्रसङ्गतः ।
स्वदर्शनोत्कस्य विशालवक्षसो न कापि तस्यास्त्युपमा चराचरे ॥ ४७ ॥

यः प्रेमभाव इति । प्रत्यागते पाश्चात्यभ्रमणात् आगमनप्रसंगतः प्रत्यावर्तनसमये इत्यर्थः । भारतं प्रति यतेः कीदृशस्य स्वदर्शनोत्कस्य स्वजनदर्शनोत्कण्ठितस्य विशालवक्षसः अतिविस्तृतहृदयस्य यः यादृशः प्रेमभावः स्नेहभावना आसीत् । अधुनाऽहं स्वदेशबान्धवान् द्रक्ष्यामीति तस्य प्रेम्णः चराचरे स्थावरजंगमात्मकसम्पूर्णसंसारे उपमा सादृश्यं नास्ति ॥४७॥

आसीदुरु प्रेम यदस्य भारते प्रत्यग्गते तेन वरीयसाऽजनि ।
धर्मोपदेशप्रतिपादनात् परं प्रत्यागतस्याधिगतं वरिष्ठताम् ॥ ४८ ॥

आसीदिति । अस्य स्वामिनः भारते यत् उरु महत् प्रेम आसीत् तेन प्रेम्णा तस्मिन् प्रत्यग्गते पश्चिमदिशायां गते सति वरीयसा अजनि वरीयः महत्तरं जातम् तत्र दूरदेशे भारतस्मरणात् । तथा धर्मोपदेशप्रतिपादनात्परं प्रत्यागतस्य निवृत्तस्य तदेव प्रेम वरिष्ठतां महत्तमतां गतम् भारतं प्रत्यागतस्य तस्य भारतीयेषु यत्प्रेम आसीत् तत् सर्वोत्कृष्टम् अजनि ॥ ४८ ॥

'द्यौरुत्तमा भारतभूर्ममानिशं सा मत्कृते तीर्थमिवास्ति मङ्गलम् ।
अस्याः पुनर्धूलिकणो नमस्यतां प्राप्तो'ऽधुनाऽस्राकुलितेक्षणोऽब्रवीत् ॥ ४९ ॥

द्यौरुत्तमेति । इयं भारतभूः मम अनिशम् उत्तमा द्यौः सर्वोपरि विद्यमानः स्वर्गः । सा भारतभूर्मम कृते मंगलं तीर्थमिवास्ति । अस्याः भारतभूमेः धूलिकणोऽपि मम पूजनीयतां प्राप्तः इति अस्राकुलितेक्षणः अश्रुपूर्णनयनः सन्नब्रवीत् ॥ ४९ ॥

तथा बभूवेऽत्र जनैः समुत्सुकैः सुहृद्गणैः शिष्यवरैः क्षितीश्वरैः ।
यथा चिरादन्तरितस्वसम्पदां द्रुतं पुनः प्रत्युपलब्धिनिश्चितैः ॥ ५० ॥

तथेति । स्वामिनः आगमनस्य वार्तां निशम्य अत्रत्यैः तस्य सुहृद्गणैः मित्रसमूहैः शिष्यवरैः तथा समुत्सुकैर्बभूवे जातं यथा चिराद्दीर्घकालात् अन्तरितस्वसम्पदाम् अदृश्यतां

गतानां धनसम्पदां द्रुत सम्वर पुन समुपलब्धिनिश्चितै तादृशाम्यपत्नीनां पुन प्राप्तिनिश्चित मानसैः सम्मुखकैर्भूयते ॥ ५० ॥

ज्ञानासिरात्तस्वचरित्रकञ्चुक सोपासनो विश्रुतमार्गणो गुणी।
उष्णीषशीर्षण्ययुत पदातिग स्वय नियन्ता जगतीं जिगाय स ॥ ५१ ॥

ज्ञानासिरिति। ज्ञानम् अध्यात्मज्ञानमेव असि खड्ग यस्य, आत्त गृहीत स्वचरित्र स्वकीयनिर्मलचरित्रमेव कञ्चुक शरीररक्षावरण येन सोपासन ईश्वरोपासनासक्त अथ च धनुर्बाणमङ्गालनाभ्यासपर, विश्रुतमार्गण तस्य भिक्षुत्वात् विश्रुता मार्गणा दानप्रार्थना यस्य अथ च प्रसिद्धबाणप्रक्षेपणशक्तिर्यस्य गुणी गुणवान् अथ च प्रत्यञ्चासहित उष्णीष शीर्षण्ययुत उष्णीष शिरोवस्त्रमेव शिरस्त्राण यस्य पदातिग पादचारी स्वय च नियन्ता जितेन्द्रिय अथ च सारथि एतादृशयुद्धसामग्रीयुक्त सन् जगतीं जिगाय जितवान्। रूपकालङ्कार ॥ ५१ ॥

खण्डत्रयान्तरमिलज्जलवर्त्मनाऽसौ सिन्धुत्रयं भुवनमध्यमुख सुखेन।
उल्लङ्घ्य निर्जितगुणत्रयसङ्कटोऽभूल्लोकत्रये प्रथितभारतमेतुमुत्क ॥ ५२ ॥

खण्डत्रयमिति। असौ स्वामी खण्डत्रयान्तरमिलज्जलवर्त्मना खण्डत्रयम् यूरोप एशिया आफ्रिका च एतेषाम् अन्तरे मध्ये मिलत् लग्न यज्जलवर्त्म 'सुएज'नामक तेन भूमध्यसागरान्तर 'सुएज' इति कृत्रिमजलप्रणालीमार्गेण, भुवनमध्यमुख भूमध्यसागर मुखम् यस्यैतादृश सिन्धुत्रय भूमध्यसागर आरक्तसागर (लालसागर) तथा अरबसागर इति सिन्धुत्रय उल्लङ्घ्य अतिक्रम्य निर्जितम् अतिक्रान्त गुणत्रयं सत्वरजस्तमः स्वरूप सङ्कट यन त्रिगुणातीत इत्यर्थः। लोकत्रय प्रथित प्रसिद्धि गत भारतमेतुमागन्तुमुत्क उत्कण्ठित अभूत् ॥ ५२ ॥

प्रस्थानमस्य तु निशम्य दिशः प्रतीच्या हर्षातिरेकवशतोऽखिलभारतीया।
नीराजना विजयशालि गुरोर्विधातु चक्रु प्रफुल्लमनसाऽऽगमनप्रतीक्षाम् ॥५३॥

प्रस्थानमिति। प्रतीच्या दिश पश्चिमदिशाया सकाशात् अस्य स्वामिन प्रस्थान प्रत्यावर्तन निशम्य श्रुत्वा अखिलभारतीया हर्षातिरेकवशात अत्यधिकानन्दकारणात् हेतो विजयशालिगुरो कृतदिग्विजयस्य गुरोराचार्यस्य नीराजनामारार्तिक विधातु प्रफुल्लमनसा सानन्देन चित्तेन आगमनप्रतीक्षा भारतवर्षे आगमनस्य प्रतिपालन चक्रु ॥५३॥

रत्नाकर समधिगम्य विवेकनामारत्नं द्राक् तातसरुचि पञ्चदश तु रत्नम्।
उद्भासिताकिल विधाय च पश्चिमाशा प्रत्यर्पयत्युचितदमारपूर्वकतत् ॥५४॥

रत्नाकर इति। रत्नाकर समुद्र अस्मद्भारतात् रत्नागारादित्यर्थ। विवेकनाम सरुचि प्रकाशमान पञ्चदश रत्नमिव चतुर्दशरत्नानि पूर्वमेव भारतेन प्राप्तानि इदानीं समुद्र पञ्चदश रत्न प्राप्य तस्य रत्नस्य सहायेन पश्चिमाशां पश्चिमदिश च उद्भासिता विधाय कृत्वा उचितमेव योग्यमेव भारताय आदरपूर्वकसादर प्रत्यर्पयति समर्पयति। पश्चिमाशाप्रकाशनार्थं रत्नाकरेण भारतादेक रत्न गृहीतमासीत् तत्कार्यसम्पादनानन्तर तद्रत्न समुद्रेण भारताय सादर समर्पितमित्युत्प्रेक्षा ॥ ५४ ॥

हिन्दावनेर्हठतर दिशि दक्षिणस्या रत्नाकर सलिलदुर्गमिवेत्य लङ्काम्।
स्वधामनाविषयमुत्तममातृभूमिं द्रक्ष्यामि मङ्क्ष्विति यतिर्हृदि शान्तिमाप॥५५॥

हिन्दावनेरिति। दक्षिणस्यां दिशि स्थितं हिन्दावनेर्भारतस्य दृढतरं बलवत् रत्नाकरं लङ्कां नाम सलिलदुर्गमिवागत्य इदानीमहम् उत्तमं स्वं सर्वोत्कृष्टं कामनाविषयं मातृभूमिं भारतमातरं मंक्षु द्रक्ष्यामि इति विचार्य हृदि मानसे शान्तिमाप प्राप्तवान् ॥ ५५ ॥

लोकं मोहतमोहतं धृतहिताल्लोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
सर्गस्त्र्यम्बकनामधेयकृतिना क्लृप्ते सुवृत्ते महा-
काव्येऽस्मिन् सरसे त्रयोदशतया युक्तः समाप्तिं गतः ॥५६॥

इति त्र्यम्बकसूरिविरचिते विवेकानन्दचरिते महाकाव्ये
यूरोपभ्रमणं नाम त्रयोदशः सर्गः ॥ १३ ॥

लोकमिति। लोकमित्यादि धर्मप्रधानाश्रये इत्यन्तं पूर्ववत्। त्र्यम्बकनामधेयकृतिना कविना क्लृप्ते रचिते सुवृत्ते त्रयोदशतया युक्तः सर्गः त्रयोदशः सर्गः समाप्तिं गतः ॥ ५६ ॥

इति विवेकानन्दचरितमहाकाव्यटीकायां 'विवेकदीपाख्यायां' त्रयोदशोऽध्यायः।



## अथ चतुर्दशः सर्गः

कस्यान्तरं न भविता सवितारमुच्चै
पूर्वां दिशं पुनरुपेतमुदीक्ष्य तुष्टम्।
रात्रौ प्रसुप्तमखिलं किल जीवजातं
स्वस्वेषु कर्मसु नियोजयितुं पुरस्तात् ॥ १ ॥

कस्यान्तरमिति। उच्चैः स्वकिरणैः उपलक्षितं सवितारं सूर्यं पूर्वां दिशं प्राचीं ककुभं रात्रिसमाप्त्यनन्तरं पुनरुपेतम् उदयाचलारूढम् उदीक्ष्य कस्य तद्दर्शनोत्सुकस्य आन्तरम् अन्तःकरणं तुष्टमानन्दितं न भविता भविष्यति अपि तु सर्वस्यापि। किं कर्तुमागतस्य? रात्रौ प्रसुप्तं निद्रितम् अखिलं सम्पूर्णं जीवजातं प्राणिवर्गं स्वस्वेषु निजनिजकर्मसु पुरस्तात् प्रथममेव नियोजयितुं नियुक्तं कर्तुम्। सूर्यः प्रातरुद्दीपमानः पुनरपि जगत् कर्मव्यापृतं करोति। अत्र स्वामी सूर्यः पुनरपि भारते तस्योदयः जातः स चाधुना भारतीयान् देशोद्धारकर्मणि नियोजयिष्यति। अत्र वसन्ततिलकं वृत्तम्। अयमपि सर्गः विविधवृत्तमयः। प्रतिश्लोकं यथासम्भवम् अलङ्काराश्च प्रदर्शिताः। यथा दशमः सर्गः वृत्तमयः तथायं सर्गोऽलङ्कारमयः। अत्र अप्रस्तुतप्रशंसा निदर्शना चालङ्कारः ॥ १ ॥

करधृतकुसुमस्रक्सारभारैः समुत्कैः मुदितजनसहस्रैः सार्धमस्मै प्रतीच्याम्।
अधिगतविजयाय स्वागतं वक्तुकामे जलधिरपि समुद्यत्फेनपूर्णोर्मिमालः ॥

करधृतेत्यादि। करधृतकुसुमस्रक्सारभारैः करे हस्ते धृता धृताः कुसुमस्रक्सारस्य उत्तमकुसुममालानां भारा यैः एतादृशैः उत्कण्ठितैः स्वामिनं द्रष्टुमुत्सुकैः मुदितजनसहस्रैः परःसहस्रानन्दितचित्तैः जनैः सार्धं प्रतीच्यां दिशि अधिगतविजयाय अस्मै स्वामिने जलधिरपि स्वागतं वक्तुकामः अभूत्। कीदृशः? उद्यत्फेनपूर्णोर्मिमालः उद्यता फेनेन कुसुमसदृशेन पूर्णा ऊर्मिमाला हस्तस्थानीया यस्यैतादृशः। लोकैः सह समुद्रोऽपि करगृहीतकुसुममालः स्वागतार्थमागतः। अत्र मालिनी वृत्तम्। सहोक्तिः उत्प्रेक्षा, उपमा (व्यङ्ग्या) अनुप्रासश्चालङ्कारः ॥ २ ॥

लङ्कारथ्याः सुरभिसलिलैर्नागराः सिक्तवन्तः
सालंकारैः पुनरुभयतस्तोरणैः सज्जिताश्च।
'राजास्माकं नयनरुचिरः केवलं योगिपूर्वः
प्राप्तो जिष्णु'र्मुदितहृदया भाषमाणाः समानाः ॥ ३ ॥

लङ्कारथ्या इति। नागराः नगरनिवासिनः लङ्कारथ्याः कर्म लङ्कानगरमार्गान् सुरभिसलिलैः स्वामिस्वागतार्थं सुगन्धिजलैः सिक्तवन्तः तथा ताः रथ्याः सालङ्कारयुक्तैः उभयतः उभयपार्श्वयोः तोरणैः तोरणबन्धैः सज्जिताश्च परिष्कृताश्च। मुदितम् आनन्दितं हृदयं येषां ते समानाः साहङ्काराभिमानमुक्ताः मिलिता एव भाषमाणाः वदन्तः आसन्। किं भाषमाणाः— 'जिष्णुः विजयशीलः नयनरुचिरः नयनानन्दहेतुः केवलं योगिपूर्वः अस्माकं राजा योगिराज

आगतः' इति भाषमाणाः। अत्र मन्दाक्रान्ता वृत्तम्। उदात्तः, न्यूनताद्रूप्यरूपकं, यमकम्, प्रेयोऽलंकारश्च ॥ ३ ॥

द्वीपत्रयं सभुवनत्रयमेव नैजप्रोद्यद्यशोधवलितं परितो विधाय।
प्रत्यागतो विजयमाल्यविभूषिताङ्गः स्थानेऽधिराजपदमर्हति योगिराजः ॥४॥

द्वीपत्रयमिति। भुवनत्रयमेव द्वीपत्रयम् अमेरिकाएशिया तथा यूरोपः इति द्वीपत्रयं निजस्य प्रोद्यद्यशोधवलितं प्रसरत्कीर्तिश्वेतवर्णं परितः सर्वतः विधाय कृत्वा विजयमाल्यविभूषिताङ्गः विजयमालाविभूषितकण्ठः अस्माकं योगिराजः यतिसम्राट् प्रत्यागतः निवृत्तः तस्य विश्वजेतृत्वाद्धायं स्थाने उचितमेव 'अधिराज' इति पदवीमर्हति। वसन्ततिलकं वृत्तम्। उत्प्रेक्षा, काव्यलिङ्गम् उपमा चालंकाराः ॥ ४ ॥

आरेभिरे द्विजवराः श्रुतिमन्त्रघोषं दध्वान जातसुखमङ्गलवाद्यजातम्।
उच्चारितं जनतया जयवाक्यमुच्चैरुच्चासने समुपवेश्य तमादरेण ॥ ५ ॥

आरेभिर इति। द्विजवराः विपश्चितो ब्राह्मणाः श्रुतिमन्त्रघोषं वेदमन्त्रोच्चारणम् आरेभिरे आरब्धवन्तः। जातसुखम् आनन्दितं मङ्गलवाद्यजातं मङ्गलवाद्यानि दध्वान वादितम्। जनतया लोकैः उच्चैरुच्चस्वरेण जयवाक्यं, 'जयतु स्वामी विवेकानन्दः' इत्याकारकम् उच्चारितम् उक्तम्, किं कृत्वा तं स्वामिनम् आदरेण तम् उच्चासने समुपवेश्य स्थापयित्वा। वसन्ततिलकं वृत्तम्। अनुप्रासः प्रेयोऽलंकारश्च। उत्तरेण श्लोकेन युग्मम् ॥५॥

लोकैः समार्चि हरिचन्दनपुष्पमाल्यैर्धूलिर्धृतास्य पदयोः शिरसि स्वकीये।
सच्छत्रचामरपताकमथास्य पुर्यां यात्रा समारभत विश्रुतराजचिह्नैः ॥ ६ ॥

लोकैरिति। लोकैः लङ्काजनैः स हरिचन्दनपुष्पमाल्यैः समार्चि पूजितः। तैश्च स्वकीये आत्मनः शिरसि मस्तके अस्य स्वामिनः पदयोश्चरणयोः धूलिः रजः धृता स्थापिता। पुर्यां लंकानगर्यां सच्छत्रचामरपताकं छत्रचामरपताकाभिः विश्रुतराजचिह्नैः अस्य यात्रा च शोभायात्रा समारभत आरब्धा। वसन्ततिलकं वृत्तम्। प्रेयोऽलंकारश्च ॥ ६ ॥

सहस्रशः स्त्रीपुरुषास्तदानीं सभामहंपूर्विकया प्रयाताः।
समुद्रपूरादधिकश्च तेषामानन्दपूरो ववृधे मनस्सु ॥ ७ ॥

सहस्रश इति। तदानीं तस्मिन्समये सहस्रशः परस्सहस्राः स्त्रीपुरुषाः स्त्रियः पुरुषाश्च अहं पूर्वं अहं पूर्वं गमिष्यामि इति अहंपूर्विका क्रिया तया स्वामिस्वागतसभां प्रयाताः। तेषां मनस्सु आनन्दपूरः समुद्रपूरादपि अधिकः ववृधे वृद्धः। उपजातिवृत्तम्। अतिशयोक्तिरलंकारश्च ॥ ७ ॥

धन्या वयं भारतमेव धन्यं यस्य प्रियो विश्वजिदात्मजोऽयम्।
तुभ्यं नमो येन विभाकृतेदं जगत्तथाकारि च सप्रकाशम् ॥ ८ ॥

धन्या वयमिति। यस्य भारतस्य पुत्रः विश्वविजयो आत्मजः तद्भारतं धन्यं भाग्यशाली वयं च धन्याः भाग्यशालिनः। येन विभाकृता ज्ञानप्रकाशं कुर्वता सूर्येण च इदम् अज्ञानजं तमः तुभ्यं नाशितम् सम्पूर्णं जगच्च सप्रकाशं प्रकाशयुक्तम् अकारि अक्रियत। उपजातिवृत्तम्। उत्प्रेक्षा श्लेषानुप्राणिता उपमा च ॥ ८ ॥

ज्ञानप्रभानिधिरयं जलधिं विलङ्घ्य यद्धीतवानमितहिन्दयशोऽतिदूरम् ।
तस्मादसावनभिषिक्त नृपोत्तमोऽभूदस्मान्मुपगतमिह ध्रुवमुत्तमाङ्गम् ॥ ९ ॥

ज्ञानप्रभानिधिरिति । अयं स्वामी ज्ञानप्रभाया सवित्प्रकाशस्य निधि कोश इव अयं जलधिं विलङ्घ्य अमितं हिन्दयशः अमर्यादां भारतकीर्तिम् अतिदूरम् अमेरिकापर्यन्तं नीतवान् सर्वमपि जगत्स्वोज्ज्वलकीर्तियुक्तं चकार । तस्मात् कारणात् असावस्माकम् अनभिषिक्तः राज्याभिषेकं विनैव नृपोत्तमः अभूत् जातः अस्माकं च अद्यावधि अवनतमुत्तमाङ्गम् पुनरकृतयशोविस्तारेण उन्नतं जातम् । वसन्ततिलकं वृत्तम् । व्यतिरेकः, रूपक, उत्प्रेक्षाश्चालङ्कारा ॥ ९ ॥

देवैः पुरा जलनिधेर्मथनाद्यवाप्तं पीयूषमेव रचितं स्थविरैः प्रवादः ।
सत्यं त्वनेन विदुषाम्बुनिधिर्जगाहे बोधामृतं च मथितं जगते प्रदातुम् ॥१०॥

देवैरिति । पुरा काले देवैः अमरैः जलनिधेः समुद्रस्य मथनादालोडनात् पीयूषममृतमवाप्तम् इति तु केवलं स्थविरैः वृद्धैः प्रवादः किंवदन्तीव रचितः । तत्र सत्यं तु अनेन विदुषा अम्बुनिधिः समुद्रः जगाहे मथितः बोधामृतं च ज्ञानसुधां च जगते प्रदातुं वितरितुं मथितम् प्राप्तम् । वसन्ततिलकं वृत्तम् । अपह्नुतिः काव्यलिङ्गं चालङ्कारौ ॥ १० ॥

स्तुतिमिति यतिरेतां लोकतः स्वां निशम्य
स्वहृदि निरभिमानो नम्रतापूर्वमूचे ।
न हि नृपतिरहं वा नीतिविद्वित्तवित्तः
तदपि बहुमतश्चेदस्मि साश्चर्यचित्तः ॥ ११ ॥

स्तुतिमिति । यतिः स्वामी लोकतः भारतीयेभ्य इति स्वां स्वकीयां स्तुतिं प्रशंसां निशम्य नम्रतापूर्वं सविनयमूचे उक्तवान् । अहं नृपतिः पार्थिवः नास्मि, नीतिविद् नीतिशास्त्रज्ञोऽपि नास्मि, वित्तवित्तः प्रसिद्धधनाढ्य अपि नास्मि तथापि यद्यहं भवद्भिः बहुमतः तर्हि अहं साश्चर्यचित्तः साद्भुतान्तःकरणः जातोऽस्मि । अकिञ्चनदरिद्रस्य पूजा इत्यद्भुतमेव भासीत्यर्थः । मालिनी वृत्तम् । अनुप्रासः अर्थान्तरन्यासश्चालङ्कारौ ॥ ११ ॥

नुतिरियमतिभक्त्या कास्ति दीनस्य भिक्षो
रपरहरितमित्वा चेन्मया किञ्चिदुक्तम् ।
जनिभुवमधिकृत्य प्रायशः सा प्रशंसा
श्रुतिविहितस्मृतेर्वा भारताध्यात्मशक्तेः ॥ १२ ॥

नुतिरियमिति । अतिशया भक्त्यैर्यस्यामेनादृशी ममेयं नुतिः अस्य कस्यचिद्दीनस्य दरिद्रस्य भिक्षोः सन्यासिनः का? सा तु न कर्तव्या । यदि मया अपरहरितं पश्चिमदिशाम् इत्वा गत्वा किञ्चिदुपदेशपरम् उक्तमपि, किमधिकृत्य मम जनिभुवं मातृभूमिमधिकृत्य विषयीकृत्येत्यर्थः । सा खलु न मम भिक्षोः प्रशंसा अपि तु श्रुतिविहितस्मृतेः वैदिकधर्मस्य सा प्रशंसा भवेत् अथवा भारते विद्यमाना या अध्यात्मशक्तिः तस्याः शक्तेर्वा प्रशंसा भवेत न कदापि मम । क्वाहं भिक्षुः क चेयं भवद्विहिता मम प्रशंसा इति विरोधालङ्कार अनुप्रासश्च । वृत्तं मालिनी ॥ १२ ॥

धर्मः प्राण इवास्ति भारतभुवस्तस्यैव वृत्तिर्मया
पाश्चात्ये जगति प्रकाशिततराऽस्याज्ञानमुद्रावृते।
चेद्वेदान्तविशेषणान्विततया धन्योऽयमालम्ब्यते
जीवेद्राष्ट्रमिदं सहस्रशरदो विश्वस्य शिक्षाकरम् ॥ १३ ॥

धर्म इति। धर्मः आध्यात्मिकोन्नतिस्वरूपः भारतभुवः। अस्मन्मातृभूमेः प्राणः इव आस्ते तेन विनेयं गतप्राणेव तस्यैव धर्मस्य यदि मया अज्ञानमुद्रावृते पाश्चात्ये जगति वृत्तिर्व्याख्या कृता यदि स एव धर्मः वेदान्तविशेषणतया 'वेदान्तधर्म' इति सविशेषणः धन्यः अतिकल्याणकारी अस्माभिः आलम्ब्यते तर्हि इदमस्माकं राष्ट्रं विश्वस्य संसारस्य कल्याणकरं सत् सहस्रशरदः सहस्रावधिवर्षपर्यन्तं जीवेत् अमरं भवेत्। शार्दूलविक्रीडितं वृत्तम्। उपमा, रूपकं, सहोक्तिश्चालंकाराः ॥ १३ ॥

को भारतस्य महिमानमनन्तशक्त्या युक्तस्य पूर्णमिह वर्णयितुं समर्थः।
धर्मोऽस्त्यमुष्य तु गुरुत्वनिदानमेकं धर्मेण शून्यमिदमेति परासुभावम् ॥१४॥

को भारतस्येति। अनन्तशक्त्या युक्तस्य अत्यधिकबलेन युक्तस्य भारतस्य पूर्णं महिमानं माहात्म्यं वर्णयितुं कः समर्थः विद्यते। धर्म एव अमुष्य भारतस्य गुरुत्वे महत्त्वे निदानं मूलकारणम् अस्ति। तथेदं भारतं धर्मेण शून्यं परासुभावम् जीवनशून्यत्वमेति गच्छति। वसन्ततिलकं वृत्तं, असंभवः, विनोक्तिश्चालंकारौ ॥ १४ ॥

का पुण्यभूः समुचिता जगतीतलेऽस्मिन्
किं स्थानमत्र परमेश्वरलाभसिद्ध्यै।
नृणां च कर्मफलभोगपदं किमास्ते
तत्रोत्तरं श्रृणुत भारतभूरियं नः ॥ १५ ॥

का पुण्यभूरिति। अस्मिन् जगतीतले सर्वोत्तमा पुण्यभूः पवित्रभूमिः का अत्र संसारे ईश्वरलाभसिद्ध्यै परमेश्वरप्राप्त्यर्थं परं सर्वोत्कृष्टं स्थानं किम् नृणां मनुष्याणां कृते कर्मणां फलभोगपदं स्थानं च किम्? इति सर्वेषामेव प्रश्नानामेकमेवोत्तरम् तच्च श्रृणुत! इयं नः भारतभूरेव तत्सर्वमित्युत्तरम् ॥ वसन्ततिलकं वृत्तम्। प्रश्नोत्तरं चालङ्कारः ॥ १५ ॥

किं क्षेत्रमस्ति बलशीलदयागुणानामन्तर्दृशोऽप्यजनि यत्र परो विकासः।
जाता च यत्र परमात्मविचारचर्चा तत्रोत्तरं श्रृणुत भारतभूरियं नः ॥१६॥

किं क्षेत्रमिति। बलस्य शक्तेः शीलस्य सदाचारस्य तथा दयागुणानाम् अनुकम्पा एतेषां त्रयाणां गुणानां क्षेत्रं मूलोत्पत्तिस्थानं किम्? अन्तर्दृशः आध्यात्मशक्तेः यत्र परः सर्वोत्तमः विकासः वृद्धिः अजनि। एतादृशं च क्षेत्रं किम् यत्र च परमात्मनः सर्वव्यापिनः ईश्वरस्य विषये आलोचना जाता ईदृशं क्षेत्रं किम्? इति प्रश्नानामपि एकमेवोत्तरं तच्च इयमस्माकं भारतभूरेव।-वसन्ततिलकं वृत्तम्, प्रश्नोत्तरं चालंकारः ॥ १६ ॥

धर्मस्यावासभूमिः प्रभवपदमिदं नित्यशो दर्शनानां
नानावीरैः सुधारैरविरतभवनात्त्वस्ति कालादनादेः।
विश्वप्रेमप्रकर्षः प्रकृतिमाधुरिमा मार्दवं भावनानां
एभिर्लोकस्य कर्तुं प्रभवति सततं नेतृतां भारतं नः ॥१७॥

धर्मस्येति । इदमस्मद्भारतं धर्मस्य सनातनवैदिकधर्मस्य विश्वबन्धुत्वोपदेशकस्य आवासभूमिः मूलनिवासस्थानं, नित्यश सततं दर्शनानां दार्शनिकविचाराणां प्रभवपदम् उत्पत्तिस्थानम् । विश्वप्रेमप्रकर्षं 'उदारचरितानां तु' इत्याद्युक्त्यनुसारं विश्वप्रेमप्रकर्षं सार्वत्रिकबन्धुभावस्य उत्कर्षं प्रकृतिमधुरिमा स्वभावमाधुर्यम्, भावनानां विचाराणां मार्दवं कोमलत्वं एभिः सद्गुणैः । सर्वस्यापि लोकस्य नेतृतां कर्तुं प्रभवति समर्थमस्ति । स्रग्धरावृत्तम् । उल्लेखालंकारः उदात्तः ॥ १७ ॥

धर्मोऽवलम्ब्य किल भारतस्य न राजनीतिर्न समाजनीतिः ।
अध्यात्मसंविद्भुवमस्य संपद्विश्वं तयैवोपकृतं कृतं स्यात् ॥१८॥

धर्म इति । भारतस्य अवलम्ब्य आश्रय केवलं धर्म एव मान्य न राजनीति न वा समाजशास्त्रम्, अध्यात्मसंविदेव केवलम् आत्मज्ञानमेव अस्य भारतस्य वास्तविकसम्पत् तयैव आध्यात्मिकसम्पदा विश्वम् उपकृतं कृत विहित स्यात् । उपजातिवृत्तम् । अपह्नुतिरलंकारः ॥ १८ ॥

इत्थं यमी खेन्दुदिनानि लङ्कालंकारवद्बोधरुचिं वितेने ।
तेनेदृशं प्रेम नृणाममानं मानश्च तस्मिन्नभवत् समेषाम् ॥१९॥

इत्थमिति । इत्थम् ईदृशं यमी स्वामी खेन्दुदिनानि दशदिनपर्यन्तं लङ्कालंकारवत् लङ्काद्वीपस्य बोधरुचिं ज्ञानप्रकाशं वितेने प्रसारयामास । तेन कारणेन तस्मिन् स्वामिनि नृणां अमानं प्रमाणरहितं अत्यधिकमित्यर्थः तथा समेषां सर्वेषां जनानां मानः आदरबुद्धिश्च अभवत् ॥ उपजातिवृत्तम् । पादादिपादान्तयमकप्रयमालंकारः ॥ १९ ॥

ततः प्रतस्थे मनसोत्सुकेन द्रष्टुं चिराद् भारतरत्नगर्भाम् ।
सापीममाश्लेष्टुमना स्वसूनुं यशस्विनं स्नेहवशेन नूनम् ॥ २० ॥

ततः अनन्तरम् उत्सुकेन मनसा उत्कण्ठितेन चित्तेन भारतरत्नगर्भाम् भारतमातृभूमिं चिरात् दीर्घकालानन्तरं द्रष्टुं प्रतस्थे प्रस्थितः सापि मातृभूरपि यशस्विनं लब्धकीर्तिं स्नेहेन आश्लेष्टुमना आलिङ्गितुम् नूनमुत्सुकाऽभवत् । उपजातिवृत्तम् । उत्प्रेक्षालंकारः ॥२०॥

वार्तास्य भारतरत्नागमनस्य पुण्या विद्युत्प्रभेव तरसा प्रसृता पुरेषु ।
तत्स्वागतस्य समभूत्प्रमदस्य हेतोः सर्वत्र सम्भृतिविधानमभूतपूर्वम् ॥२१॥

वार्तास्येति । अस्य स्वामिनः भारतागमनस्य पुण्या पवित्रा वार्ता तरसा विद्युत्प्रभेव विद्युत्प्रकाश इव पुरेषु विविधनगरेषु प्रसृता प्रासरत् । प्रमदस्य हेतोः आगमनोत्पन्नप्रमोदकारणात् सर्वत्र तत्स्वागतस्य अभूतपूर्वं कदापि न जातं सम्भृतिविधानं सम्भारैः कक्रीकरणं जातमभूत् ॥ वसन्ततिलकं वृत्तम् । उपमालंकारः ॥ २१ ॥

रामनादनगरीजनेश्वरः पूजयन्प्रमुदितो यतीश्वरम् ।
यत्तदादरसमस्तदादरः क्वापि तस्य तुलना न दृश्यते ॥ २२ ॥

रामनादेत्यादि । रामनादनगरीजनेश्वरः तन्नामकराज्याधिपतिः । यतीश्वरं पूजयन्प्रमुदितः अभूत् यद्यस्मात् तदादरः स्वामिनः पूजादिभिः क्रियमाणः आदरः असमानः तदादर इव आसीत् । तस्य आदरस्य तुलना कुत्राप्यन्यत्र न दृश्यते । अत्र रथोद्धतावृत्तम् । अनन्वयालंकारश्च रामरावणयोर्युद्धं रामरावणयोरिव इतिवत् ॥ २२ ॥

तुतोष नृपतिर्यतेश्चरणधूतिसंस्पर्शनात्
जनैरिह सहाखिलैः सदसि तत्प्रशंसापरैः ।
'अनेन जगतीतले सपदि भारतस्योज्ज्वलं
यशो यदि न विस्तृतं तदभविष्यदन्धन्तमः' ॥ २३ ॥

तुतोपेति । इह नगर्यां सदसि सभायां तत्प्रशंसापरैः स्वामिस्तुतिप्रसक्तैः अखिलैः जनैः सह नृपतिः यतेः स्वामिनः चरणधूतिसंस्पर्शनात् पादरजोवन्दनात् तुतोष तुष्टोऽभवत् जनाः प्रशंसां कुर्वन्तः उक्तवन्तश्च अनेन स्वामिना चेद्यदि जगतीतले भूमण्डले सपदि सत्वरं भारतस्य उज्ज्वलं प्रकाशमानं यशः न विस्तृतं तर्हि सर्वत्र अन्धं तमः अभविष्यत् । पृथ्वीवृत्तम् । उपमाध्वनिश्च ॥ २३ ॥

परस्त्वमसि चन्द्रमा नभसि भारतस्योदित-
स्ततोऽजनिषताखिलाः सरुचितारका निष्प्रभाः ।
नरेन्द्र इति विश्रुतो भवसि राजभिः पूजितो
जिताहितबलस्य ते सततराजता राजते ॥ २४ ॥

परस्त्वमसीति । इत्थं जनास्तं अस्तुवन्—भारतस्य नभसि त्वं परः अपरः चन्द्रमा उदितोऽसि । ततः कारणात् नवचन्द्रोदयाद्धेतोः नभसि विद्यमाना अखिलास्तारकाः निष्प्रभाः कान्तिशून्या जाताः । सर्वेऽप्यपरेऽन्यधर्माणां नेतारः निष्प्रभा जाताः । त्वं नरेन्द्र इति विश्रुतः असि अतः स्थाने राजभिः पूजितः जिताहितबलस्य अहितानां कामक्रोधादि-षड्रिपूणां बलं जितं येनेदृशस्य ते सततराजता नैरन्तर्येण विद्यमाना राजता राजभावः राजते शोभते प्रकाशते । अत्र पृथ्वीवृत्तम् । रूपकं, समासोक्तिः, श्लेषः, निरुक्तिश्चालंकाराः ॥

नवीनपथदर्शकस्त्वमसि सर्वलोकप्रिय-
स्त्वमेव चिरकालतः शयनतत्परे भारतम् ।
प्रबोधयितुमुत्तमान्तरबलप्रकाशान्वितः
किमाशु मिहिरं विना हरति कोऽपि नैशं तमः ॥ २५ ॥

नवीनेत्यादि । त्वं सर्वेषां लोकानां प्रियः अखिलजनादरपात्रम् अस्माकं नवीनपथदर्शकः नववेदान्तमार्गदर्शकः असि । त्वमेव चिरकालात् शयनतत्परं निद्रापन्नं भारतं प्रबोधयितुं उत्तमं यत् आन्तरबलम् आत्मबलं ज्ञानप्रकाशश्च ताभ्यामन्वितः असि । मिहिरं सूर्यं विना नैशं रात्रिसम्बन्धि तमः अन्धकारं कोऽपि अन्यः हरति किम् ? न कोऽपीत्यर्थः पृथ्वीवृत्तं अर्थान्तरन्यासश्चालंकारः ॥ २५ ॥

प्रासादं नीयमाने यमिनि नरपतिर्मोचयित्वा तुरंगान्
युक्तान् दीप्तांशुमुक्ताफलरुचिरतरं स्यन्दनं राजकीयम् ।
कर्षन्स्वाभ्यां कराभ्यां सह जननिवहैः प्रीतियुक्तैः पदव्या-
मासीदीर्ष्यालुदेवैर्दिवि गमनपरैः साद्भुतं प्रेक्षणीयः ॥ २६ ॥

प्रासादमिति । यमिनि स्वामिनि राजप्रासादं नीयमाने सति नरपतिः तुरंगान्मोचयित्वा रथाद्विमुक्तान्विधाय दीप्तांशुमुक्ताफलैः प्रकाशमानमौक्तिकैः रुचिरतरं सुन्दरतरं

राजकीय स्यन्दन प्रीतियुक्तै जननिवहै सह स्वाभ्यां कराभ्यां पदभ्यां मार्ग कर्षन् स्वपृष्ठत आकर्षन् दिवि गमनपरै ईर्ष्यालुदेवैरपि सम्भुत साश्चर्य प्रेक्षणीयक आसीत् ( नृप ) नृपोऽपि स्वामिन रथ स्वहस्ताभ्यां कर्षति इति देशानामाश्चर्य हतु । स्रग्धरावृत्तम् । अनुप्रास अतिशयोक्तिश्चालङ्कारौ ॥ २६ ॥

नृपेण यो भास्करसेतुनाम्ना स्तम्भो जयस्यास्य समुच्छ्रितोऽभूत् ।
उच्चैर्धरायाः इव बाहुरेष स्वर्गस्पृशं दर्शयतीव कीर्तिम् ॥ २७ ॥

नृपेणेति । नृपेण रामनादाधिपतिना अस्य स्वामिन जयस्य च भास्करसेतुनामा स्तम्भ उच्छ्रित निरात स स्तम्भ धरायाः पृथिव्या ऊर्ध्वीकृत बाहु हस्त इव स्वर्गस्पृशं स्वर्गपर्यन्तगामिनीं कीर्ति दर्शयतीव । यथा कश्चित् दूरगामि वस्तु उच्छ्रितेन हस्तेन दर्शयति । अत्र उपजातिवृत्तम् । उपमा उत्प्रेक्षा चालङ्कारौ ॥ २७ ॥

स देशभक्तिं हृदयेषु यूना सञ्चारयन् दिव्यगिरा जगाद ।
अहो प्रयाता रजनी सुदीर्घा प्राच्या नवोऽभूदरुणोदयोऽयम् ॥२८॥

स देशभक्तिमिति । स स्वामी अत्रत्ययूना तरुणानां हृदयेषु अन्तःकरणेषु दिव्यगिरा स्वदिव्यवाण्या देशभक्तिं मातृभूमिप्रेम सञ्चारयन् प्रवेशयन् जगाद उक्तवान् । अहो । सुदीर्घा अद्य यावद् विद्यमाना अज्ञानरजनी प्रयाता गता प्राच्यां दिशि भारते इत्यर्थ, नव अरुणोदय जात । उपजातिवृत्तम्, निदर्शना समासोक्तिश्चालङ्कारौ ॥ २८ ॥

उच्चैर्वचो ब्रूहि सधैर्यगर्वो भ्राता मदीय खलु भारतीय ।
सब्राह्मणो वास्त्वथवास्तु शूद्रो स निर्धनो वास्तु निरक्षरो वा ॥ २९ ॥

उच्चैरिति । मित्र ! सधैर्यगर्व धैर्येण युक्तो गर्वेण च सहित ब्रू महि—भारतीय यावद्भारतीय मम भ्राता बन्धु । स भारतीय ब्राह्मणो वास्तु शूद्रो वास्तु स निर्धन वास्तु निरक्षर अशिक्षितो वास्तु मम तु बन्धुरेव ॥ २९ ॥

न भारत दृष्टसमुन्नति स्यान्न चैति निद्रावशतामिदानीम् ।
शक्ति पुन कालमिमं विजेतुं सत्यक्तनिद्र खलु कुम्भकर्ण ॥ ३० ॥

न भारतमिति । अधुना भारत दृष्टा विशिष्टा समुन्नति उदय यस्यैतादृश कदापि न स्यात् । न च तत् पुन निद्रावशतां यास्यति । इम भारतदेश विजेतु का शक्ति अल समर्था भवेत् । यत कुम्भकर्ण इदानीं सत्यक्ता निद्रा येनैतादृश जात । कुम्भकर्णस्येव सुप्तस्य भारतस्य निद्रा गता । उपजातिवृत्तम् । समासोक्तिरलङ्कार ॥ ३० ॥

ऊर्जस्विकालायसनिर्मिताभिर्वज्रं वपु स्नायुशिराभिरस्तु ।
सेवार्थमस्मत्प्रियमातृभूमेरीहावल चास्तु यदद्वितीयम् ॥ ३१ ॥

ऊर्जस्वीति । ऊर्जस्विनीभि तेजोबलयुक्ताभि कालायसेन लोहेन निर्मिताभि कृताभि स्नायुभि शिराभिश्च युष्माक शरीर वज्र वज्रमिव कठोर भवतु अस्माक प्रियाया मातृभूमे सेवार्थम इहाबलम् इच्छाशक्ति च भवतु य ससारे अद्वितीय निरुपम स्यात् ॥ ३१ ॥

भविष्यन्महाभारत कर्तुमीहा यदि स्यादुपायत्रय सविधेयम् ।
यदस्य बल निर्मिति सघशक्तेर्विकीर्णा समीहा तथैकत्वसूत्रा ॥ ३२ ॥

भविष्यन्निति। यदि युष्माकं मनस्सु भविष्यत् भावि महत् श्रेष्ठं भारतं कर्तुं विधातुम् ईहा इच्छा विद्यते तर्हि वक्ष्यमाणमुपायत्रयं संविधेयं कर्तव्यम् किं तत्? प्रथमं अदम्यं केश्चिदप्यन्यैः अदम्यम् अपराजेयं बलं शक्तिः द्वितीयं संघशक्तेः संघइति बलस्य निर्मितिः निर्माणं तृतीयं च एकत्वसूत्रसंबद्धा विकीर्णा इतस्ततः प्रसृता समीहा इच्छा। भुजंगप्रयातं वृत्तम्। विषमालंकारो व्यङ्ग्यः ॥ ६२ ॥

बलं जीवनं दुर्बलत्वं च मृत्युर्बलं शाश्वतं स्यादलं सिद्धिबीजम्।
बलं सौख्यकृद् दुर्बलं च दुःखं बलान्यर्जयध्वं बलान्यर्जयध्वम् ॥ ३३ ॥

बलं जीवनमिति। संसारे बलं शक्तिरेव जीवनं दुर्बलत्वं मृत्युसमानम्। बलमेव शाश्वतं चिरस्थायि अलं सिद्धिबीजम् सिद्धिहेतुः। बलं सौख्यं करोतीति सौख्यकृत् दुर्बलत्वं बलराहित्यं दुःखस्वरूपम् अतः बलानि अर्जयध्वं संगृह्णीत बलं संगृह्णीत। भुजंगप्रयातं वृत्तम्। लोकोक्तिरलंकारः ॥ ३३ ॥

कालोऽयं कठिनश्रमस्य भवतो भ्रातर्वचः श्रूयता-
मुत्थाय क्रतुमारभस्व समये मन्येऽतिनिद्रं तव।
माता प्राप्तनिजासना बलवती तन्द्राभिभूता मनाक्
तस्या आयतिरुज्ज्वला परमसौ युष्मत्प्रयत्नाश्रया ॥ ३४ ॥

कालोऽयमिति। अयं वर्तमानसमयः तव कठिनपरिश्रमस्य विद्यते। हे भ्रातः! मम वचः श्रूयताम्। उत्थाय जागरितः भूत्वा समये योग्यकाले क्रतुं स्वकर्तव्यम् आरभस्व। तवेदम् अतिनिद्रं मन्ये निद्रा सम्प्रति न युज्यते। अस्माकं माता मातृभूमिः प्राप्तनिजासना स्वसिंहासनसंस्थिता मनाक् ईषत् तन्द्रया अल्पनिद्रयाभिभूता। तस्या मातृभूमेः आयतिः उत्तरः कालः उज्ज्वला प्रकाशयुक्ता समृद्धियुक्ता परमियमायतिः युष्माकं प्रयत्नमाश्रयते इति युष्मत्प्रयत्नाश्रया। शार्दूलविक्रीडितं वृत्तम्। संभावनालंकारः ॥ ३४ ॥

आयान्तु मित्राणि! भवन्तु वीरा बहिर्विनिर्गत्य निजान्धकूपात्।
विधाय दृष्टिं परितो विशालां पश्यन्तु राष्ट्राणि कथं प्रयान्ति ॥ ३५ ॥

आयान्त्विति। हे मित्राणि! भवन्तः आयान्तु आगच्छन्तु वीराःशूराश्च भवन्तु। निजान्धकूपात् स्वकीयसंकुचितदृष्टिस्वरूपान्धकारान्वितायतात् बहिर्विनिर्गत्य परितः विशालां विस्तीर्णां दृष्टं च विधाय भवन्तः पश्यन्तु इतरराष्ट्राणि कथं प्रयान्ति स्वकीय-समृद्धिविधानपराणि सन्ति इति। वंशस्थं वृत्तम् ॥ ३५ ॥

नाशोन्मुखं नः किमु भारतं स्यादहो तदाध्यात्मिकताविनाशः।
गता ध्रुवं धर्मसहानुभूतिर्मृता सदाचारविचारचर्चा ॥ ३६ ॥

नाशोन्मुखमिति। नः अस्माकं भारतं नाशोन्मुखं विनाशाभिमुखं भवेत् किम्? यदि भवेदस्य कः परिणामः? भारते विद्यमानायाः आध्यात्मिकतायाः तदस्तित्वाधारभूताया विनाश एव जायेत यदि अध्यात्मबलस्य विनाशः तर्हि भारतस्यैव विनाशः धर्मसहानुभूतिः अन्यधर्मैः सह प्रेमभावना नष्टप्राया सदाचारविचारचर्चा पवित्राचरणविचारोऽपि मृतप्रायः। आध्यात्मिकता, धर्मसहानुभूतिः सदाचारश्च यदि नश्येयुः तर्हि भारतमेव नश्येत्। वंशस्थं वृत्तम्। निदर्शनालंकारः ॥ ३६ ॥

विनाशितादर्शजगत्प्रभावता प्रतिष्ठिता चाशु विलासिता भवेत् ।
प्रतारणा पाशविकं बलं विधिर्धनं पुरोधा बलिरस्मदात्मनः ॥ ३७ ॥

विनाशितेति । भारतनाशेऽपरं किं भवेत् आदर्शं सदनुकरणीयसिद्धान्तैर्जगति प्रभावोत्पादनशक्तिः विनाशिता भवेत् । आशु सत्वरं विलासिता भोगविलासाभिरुचिस्तत्स्थाने प्रतिष्ठिता सिंहासनारूढेव भविष्यति । इयं नु प्रतारणैव स्वप्रतारणमेव । अपरं च पाशविकं बलमेव सम्पूज्यं शक्तिरेव विधिः कर्तव्यं आयतं धनं केवलं तदेव पुरोहितः यज्ञकर्मप्रधानः तथा स्वकीयस्य आत्मनः एव बलिदानं क्रियते एव सर्वध्वनाशः प्रसक्तेत्यर्थः । वंशस्थवृत्तम् । निदर्शनारूपकं चालंकारौ ॥ ३७ ॥

उत्तस्थौ किमु तत्स्थितं शववपुर्यातं महानिद्रया
दुःखान्यस्तमितानि पूर्वगगने जातोऽयमर्कोदयः ।
वार्तेयं शिखराद्धिमाचलगिरेरभ्युत्थसंस्थादितो
निर्यान्ती कुरुते प्रतिध्वनियुतं देशं यथा दिव्यगीः ॥ ३८ ॥

उत्तस्थाविति । अद्यावधि शववपुःसदृशं मृतशरीरवत्स्थितं सम्प्रतिपूर्णं भारतम् उत्तस्थौ उत्थितमिव तस्य भारतस्य महानिद्रया यातं पलायितमिव । अस्माकं सर्वाणि दुःखानि आपदः अद्य अस्तमितानि नाशं प्राप्तानि । पूर्वगगने पूर्वस्यां दिशि नवसूर्योदयः जातः । अस्माकमभ्युदयस्यायमेव प्रभातकालः । इयं वार्ता प्रवृत्तिः अभ्युत्थसंस्थात् हिमालयगिरेः शिखरात् निर्यान्ती निर्गच्छन्ती सकलदेशं आकाशवाणीव प्रतिध्वनियुतं कुरुते । शार्दूलविक्रीडितं वृत्तम् । समासोक्तिः उपमा चालंकारौ ॥ ३८ ॥

उत्तिष्ठ सम्प्राप्य वरान्निबोध श्रमधर्मी सम्प्रति धीरवीरः ।
इत्थं दिशन्तो यतिवाचमुच्चैर्जवाहरोऽपि श्रुतवानदुर्भुता सः ॥ ३९ ॥

जवाहरोऽपि । शिवलोकवासी भारतस्य प्रधानमन्त्री नेहरूजवाहरलालोऽपि श्रुतां प्रसिद्धां स्वामिनः वाचं श्रुतवान् शुश्राव । कीदृशम् भारतवासिन् ! त्वमुत्तिष्ठ वरान् अभिलषितानि वस्तूनि प्राप्य निबोध ज्ञानशीलो भव किं कुर्वन् श्रमी निर्भीकः धीरवीरः धैर्यशाली शूरश्च श्रमन् कार्यव्यापृतो भवन् । स्वकीये 'भारताविष्कार' नाम्नि प्रसिद्धग्रन्थे जवाहरलालोऽपि स्वामिनः वचनानि उद्धरति ॥ ३९ ॥

शारीरिकां मानसिकीं त्यजे त्वमाध्यात्मिकीं या बलहीनता त्वम् ।
ब्रह्माण्डमालोक्य रहस्यभेदं कर्तुं प्रचण्डा भवतोऽस्तु शक्तिः ॥ ४० ॥

शारीरिकीमिति । शारीरिकीं शरीरसम्बन्धिनीं मानसिकीं मनसि विद्यमानां वा आध्यात्मिकीं आत्मसम्बन्धिनीं वा 'अहं दुर्बलः किमपि कर्तुं नालम्' इत्याकारिका बलहीनता दुर्बलता त्वम् त्यजे परिहर । सम्पूर्णं ब्रह्माण्डमपि आलोक्य निरीक्ष्य तस्य रहस्यभेदं गूढतत्त्वाविष्कृतिमपि कर्तुं तव शक्तिरस्तु । 'अहं दुर्बलः' इत्युक्तिस्तु पापमयी भीरुत्वलक्षणा च ॥ ४० ॥

वाणीयमस्य प्रसृताऽचिरेण देशेऽखिले येन जना विना तम् ।
स्व मेनिरे यद्भितमेव चित्तमभूच्च तेषामधिकाधिकोत्कम् ॥ ४१ ॥

वाणीयमिति । अचिरेणैव कालेन सपद्येव अस्येयमुपदेशवाणी अखिले देशे प्रसृता

न्यासा अभूत् येन यद्वाणीश्रवणफलस्वरूपं तं स्वामिनं विना स्वमात्मानं वञ्चितमेव प्रतारितमेव मेनिरे। तेषां चित्तं च तं द्रष्टुम् अधिकाधिकं उत्कमुत्कण्ठितं अभूच्च। विनोक्तिरलंकारः ॥ ४१ ॥

तं मद्रासपुरं प्रयान्तमयते संद्रष्टुकामा जना
विश्रामोऽग्निरथस्य नात्र भवितेत्थं चिन्तयन्तोऽमिताः।
लीना अत्ययभीतिशून्यमनसस्तं लोहमार्गान्तरेऽ-
तुष्यँल्लब्धयतीन्द्रदर्शनसुखा भक्तिः परा हीदृशी ॥ ४२ ॥

तं मद्रासपुरमिति। तं स्वामिनं मद्रासपुरं प्रयान्तं गच्छन्तं संद्रष्टुकामा ईक्षितुमुत्सुका जना अत्र अग्निरथस्य विश्रमः न भविता न भविष्यति इति चिन्तयन्तः अमिताः बहवः अत्ययभीतिशून्यमनसः विनाशभयशून्या अग्निरथस्य लोहमार्गान्तरे लीना रथावरोधार्थं विलीनाः तथा लब्धयतीन्द्रदर्शनसुखाः आप्तस्वामिदर्शनानन्दाश्च सन्तः अतुष्यन्। परा भक्तिरथीदृश्येव भवति। शार्दूलविक्रीडितं वृत्तम्। अर्थान्तरन्यासश्चालंकारः ॥ ४२ ॥

साष्टाङ्गपातं चरणे पतन्तो नरा नृपाश्चाप्यतिभाग्यवन्तः।
स्कन्धैः स्वयं तस्य रथं वहन्तः प्रादर्शयन् स्नेहभरं स्वकीयम् ॥ ४३ ॥

साष्टाङ्गपातमिति। तं दर्शकभक्ताः साष्टाङ्गनमस्कारं कुर्वन्तः तस्य स्वामिनः चरणे पतन्तः एतादृशा नराः साधारणमानवाः तथा नृपा राजानश्च अतिभाग्यवन्तः कृतिनः आसन्। स्वस्कन्धैः तस्य स्वामिनः रथं कर्षन्तः स्वकीयं स्नेहभरं प्रादर्शयन् ॥ ४३ ॥

पुरं सुधालेपसमुज्ज्वलं नवं लसत्पताकं प्रतिमन्दिरं बभौ।
मार्गाः समुल्लासिजनैः समङ्गलैर्द्वारैरभूष्यन्त च चारुतोरणैः ॥ ४४ ॥

पुरमिति। पुरं मद्रासपुरं सुधालेपसमुज्ज्वलं कृतसुधालेपनथभित्तिकत्वात् समुज्ज्वलं प्रकाशमानम् अभूत्, तथा तत् पुरं प्रतिमन्दिरं प्रतिगृहे लसन्त्यः शोभमानाः पताका यस्यामेतादृशं बभौ शुशुभे। मार्गाः रथ्याः समङ्गलैः हस्तधृतमङ्गलचिह्नैः समुल्लासिजनैः अभूष्यन्त अलंकृताः तथा अन्यमार्गाः चारुतोरणैः सुन्दरतोरणबन्धनैः द्वारैः मार्गोपरि स्वागतार्थमुत्थापितैः द्वारैश्चाऽभूष्यन्त च ॥ ४४ ॥

उच्चैरुरुच्चैर्यतये स्वरेण ते स्वागतं वीर! जयिन्! युगर्षे!।
जीवेश्चिरं भारतभद्रदीक्ष! श्रीरामकृष्णानुग! शान्तिदूत! ॥ ४५ ॥

उच्चैररिति। जनाः उच्चैः स्वरेण यतये स्वागतं उचेरुः। हे वीर! हे जयिन् विजयशील! युगर्षे! वर्तमानयुगस्य ऋषितुल्य! भारतभद्रे भारतस्य कल्याणे दीक्षा यस्यैतादृश! श्रीरामकृष्णस्य अनुग अनुचर! हे शान्तिदूत! इत्यादिशब्दैः स्वागतं उच्चेरुः ॥ ४५ ॥

तदुक्तवाक्यान्यरविन्दगान्धिसुभासबोसप्रमुखाननेकान्।
स्वजन्मभूसेवनकार्यवृन्दे सम्प्रेरितान्तःकरणानकार्षुः ॥ ४६ ॥

तदुक्तवाक्यानीति। तदुक्तवाक्यानि स्वामिकृतोपदेशवाक्यानि अरविन्द-गांधि-सुभास-प्रमुखाननेकान्नेतॄन् स्वजन्मभुवः भारतमातुः सेवनकार्यव्राते सम्प्रेरितानि प्रभावितानि अन्तःकरणानि मानसानि येषामेतादृशान् अकार्षुः ॥ ४६ ॥

परस्परसहायता तिलककोविदाङ्गीकृता-
तिदीनदलितोद्धृतिर्नृवरगान्धिना शिक्षिता ।
बलादपि बहिष्कृतिः परबलस्य बोसेरिता
यते स्वजननीकृतेर्विततदूरदृष्टे फलम् ॥ ४७ ॥

परस्परेत्यादि । तिलककोविदेन लोकमान्यतिलकेन अङ्गीकृता स्वीकृता परस्परसहायता, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्, इति गीतावाक्यानुसारं तस्य Responsive co-opration नामक नीत्यनुसरणं तिलकेन स्वीकृता, अतिदीनदलितोद्धृति अस्पृश्योद्धारसिद्धान्त नृवरगान्धिना महात्मना गान्धिना अङ्गीकृता परबलस्य दासकर्तारं बलात् हठात् बहिष्कृति या बोसेन सुभाषचन्द्रेण ईरिता उक्ता एतत् सर्वं यत स्वजननीकृते मातृभूम्यर्थं विततदूरदृष्टे विस्तृतविचारदक्ष फलम् परिणाम ॥ ४७ ॥

उद्योगिनृणामरुणोदयेऽस्मिन् जाड्यं गतं क्वापि विलीयमानम् ।
पश्यन्ति नान्धा ध्रुवसत्यमेतन्न ज्ञायतेऽज्ञैर्यदि वा तत किम् ॥ ४८ ॥

उद्योगीति । अस्मिन्नुद्योगिनृणाम् उद्यमशीलानां भारतीयानाम् अरुणोदये भाग्यसूर्योदये ( तथा ) आलस्यमालस्य क्वापि विलीयमानं सत् गतं नष्टम् । एतत् ध्रुवसत्यं त्रिकालाबाधितं सत्यं यदि अन्धा न पश्यन्ति यदि वा अज्ञै अज्ञानिभि न ज्ञायते न बुध्यते तत किम् ? सत्यं तु सत्यमेव कथमन्यथा तद्सत्यं भवेत् ॥ ४८ ॥

न भारतं राजगृहेषु विद्यते ससौख्यसम्पद्धनिमन्दिरेष्वपि ।
तदस्ति दीनाधमदुःखितालयेष्विदं भवद्भिर्हृदयेन सेव्यताम् ॥ ४९ ॥

न भारतमिति । भारतं राजगृहेषु राजप्रासादेषु न विद्यते तत् ससौख्यसम्पद्धनिमन्दिरेषु अपि सुखसम्पत्परिपूर्णेषु धनिकानां हर्म्येष्वपि न विद्यते कुत्र तर्हि तत् ? ननु दीनानाम् असहायानाम् अधमानां नीच इति प्रसिद्धानां दुःखितानां रोगग्रस्तानां गृहेष्वेव विद्यते । अतः तद्भारतं भवद्भिः हृदयेन अन्तःकरणपूर्वकं सेवा नाम सेवाविषयीक्रियताम् ॥

सांसारिकेषु विषयेषु भवन्त्यसुखा निःस्वा जनास्तदपि दुर्जनताविहीना ।
ते सन्ति शुद्धहृदयाश्छलशून्यभावा हिंसाविचाररहिता हितकार्यसक्ता ॥५०॥

सांसारिकेष्विति । निःस्वा जना सांसारिकेषु विषयेषु आर्थिकसमस्याविषयेषु सन्तु नाम असुखा अज्ञानिन तथापि ते दुर्जनताविहीना दुष्टताशून्या एव भवन्ति । पुनश्च ते शुद्धं निर्मलं हृदयं येषामेतादृशा छलकपटभावशून्या हिंसाविचाररहिता 'अहिंसा परमो धर्मः' इति तत्त्वानुसारिणस्तथा परहितकार्यसक्ता सन्ति ॥ ५० ॥

निम्ना जना उच्चनिपीडनेन ग्रस्ता स्वकीयैरपमानिताश्च ।
चिरात् स्वकार्यप्रसितास्तथापि श्रमस्य नापु फलमद्य यावत् ॥५१॥

निम्ना जना इति । निम्ना जना समाजे नीचश्रेणीया इति-ख्याता जना उच्चवर्गीयकृतनिपीडनेन दलनेन ग्रस्ता दुःखं प्रापिता तथा स्वकीयैरेव आत्मीयैरेव सबन्धिभि अपमानिताश्च तथापि अपमानिता पीडिताश्च सन्तोऽपि स्वकार्यप्रसिताश्च कर्तव्यजागरूका आसन् परन्तु स्वस्य परिश्रमस्य फलं ते अद्य यावत् न प्राप्तवन्तः ॥ ५१ ॥

न केवलं मूर्तिषु विद्यते शिवः परं दरिद्रेषु च दुःखितेषु च ।
शुभा कृतिर्निर्मल तत्कृते कृता समर्चनासारमतोऽवधार्यताम् ॥ ५२ ॥

न केवलमिति । शिवः केवलं मन्दिरस्थितप्रस्तरादिनिर्मितशिवे एव विद्यते इति न अपि तु स दरिद्रेषु दुःखपीडितजनेष्वपि विद्यते । हे निर्मल ! निर्मलान्तःकरण मानव ! तेषां कृते दरिद्रदुःखितानां कृते कृता विहिता शुभा परोपकारबुद्ध्या कृतिः सेवाकार्यं समर्चनायाः पूजायाः सारं तत्त्वमिति भवद्भिः अवधार्यतां निश्चीयताम् ॥ ५२ ॥

ईशः स्थितो दलितदुर्बलदुःखितेषु येऽर्हन्ति सेवनमलं प्रियबान्धवास्ते ।
सेवस्व तान् मृगयसे कथमन्यमीशं गङ्गातटे खनितुमिच्छति कोऽपि कूपम् ॥

ईशः स्थित इति । ईशः परमेश्वरः दलितेषु दुर्बलेषु शक्तिहीनेषु व्याधिपीडितेषु च स्थितः अस्ति । ते तव प्रियबान्धवाः सम्बन्धिनः ये तव सेवनं सेवामलं पर्याप्तमर्हन्ति । सेवायोग्या भवन्ति । तानेव त्वं सेवस्व अन्यमीशं किमर्थं मितस्ततः मृगयसे । गङ्गातटेन निर्मलजले समीपस्थे सति कः कूपं खनितुमिच्छति न कोऽपीत्यर्थः । अस्यामवस्थायां कूपखननं तु व्यर्थमेवेत्यर्थः । अर्थान्तरन्यासोऽलङ्कारः ॥ ५३ ॥

दुर्भिक्षदुःखगदपीडितलोकशोकं
हर्तुं प्रयात भुवने भुवनेशतुष्ट्यै ।
प्राणव्ययादपि जनाः सुखिनः क्रियन्तां
जाता हि पश्यत वृथा शतशो म्रियन्ते ॥ ५४ ॥

दुर्भिक्षेत्यादि । दुर्भिक्षपीडितानां दुःखपीडितानां रोगपीडितानां च लोकानां शोकं हर्तुं अपनेतुं भुवनेशतुष्ट्यै ईश्वरप्रसन्नतासिद्ध्यर्थं भुवने भूतले प्रयात गच्छत । स्वकीय-प्राणव्ययेनापि जीवनसमर्पणेनापि तादृशजनाः भवद्भिः सुखिताः क्रियन्ताम् विधीयन्ताम् । संसारे शतशः सदा जाता लब्धजन्मानः सन्तः अन्ते किमपि न विधाय म्रियन्ते एव ॥५४॥

देशे जनाः सन्ति सहस्रशोऽन्ये शिक्षाविहीनाश्च बुभुक्षिताश्च ।
अर्थेन तेषां यदि शिक्षिताः स्मस्तदा कृतघ्नान् खलु धिग्धिगस्मान् ॥ ५५ ॥

देशे जना इति । अस्माकं देशे अन्ये सहस्रशः जनाः शिक्षाविहीनाः अशिक्षिताः बुभुक्षिताश्च क्षुधापीडिताश्च सन्ति विद्यन्ते अशिक्षितानां बुभुक्षितानां च अर्थेन धनेन तेषामेव धनमपहृत्य तेन धनेन वयं शिक्षिताः स्मः अधिगतज्ञानाः भवामः तर्हि कृतघ्नान् विस्मृतोपकारान्नः धिक् ॥ ५५ ॥

सनीतिधर्मेण रमाधिगम्यते श्रिया तया त्यागविधिर्विधीयते ।
त्यागेन लाभो यशसः सुनिश्चितः सनीतिधर्मो हि निदानमुन्नतेः ॥ ५६ ॥

सनीतिधर्मेणेति । सनीतिधर्मेण नीतिः सदाचारः धर्मः अन्तःधारमज्ञानं नीति-सहितधर्मेण रमा लक्ष्मीरधिगम्यते एतादृशी लक्ष्मीरेव अचञ्चला । एतादृश्या श्रिया रमयैव त्यागविधिर्विधीयते । एतादृशत्यागेनैव यशोलाभः कीर्तिप्राप्तिः सुनिश्चितः एवं परम्परातः नीतिसहायको धर्म एव उन्नतेः अभ्युदयस्य निदानम् मूलकारणम् ॥ ५६ ॥

लेभेऽस्मिन् गणनातिगानि नगरे सम्मानपत्राण्यसौ
संवादाः परितोऽभिनन्दनपराः प्राप्ता यतेरन्तिकम् ।
शिक्षादानकृतेऽर्थितश्च शतशोऽयं दूरदूरादपि
श्रान्तः सन् कतिचिद्दिनानि वपुषे विश्रामशान्तिं ददौ ॥ ५७ ॥

लेभे इति । अस्मिन्मद्रासनगरे गणनातिगानि असंख्यानि सम्मानपत्राणि प्रशंसापत्राणि असौ स्वामी लेभे प्राप्तवान् । यतेः अन्तिकं परितः विभिन्नस्थानेभ्यः अभिनन्दनपराः संवादाः प्राप्ताः आगताः । दूरदूरादपि विप्रकृष्टप्रदेशेभ्यः अपि शतशः शताधिकवारं शिक्षादानकृते उपदेशदानार्थम् अर्थितः प्रार्थितः । तथा श्रान्तः सन् कतिचिद्दिनपर्यन्तं स्ववपुषे विश्रामशान्तिं ददौ कञ्चित्कालं विश्रामं कृतवान् ॥ ५७ ॥

लोकं मोहतमोहनं धृतहितालोकं विधातुं क्षमे
विश्वाख्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
अस्मिंश्चित्रकलाविशेषयशसा संकीर्तनीये महा-
काव्ये त्र्यम्बकसूरिणा विरचिते वेदेन्दुसर्गो गतः ॥ ५८ ॥

इति विवेकानन्दचरिते महाकाव्ये भारतागमनं नाम चतुर्दशः सर्गः ।

लोकमिति । लोकमित्यादि धर्मप्रधानाश्रये इत्यन्तं पूर्ववत् । चित्रकलाविशेषयशसा चित्रकर्मणि निपुणेन त्र्यम्बकसूरिणा विरचितेऽस्मिन् संकीर्तनीये महाकाव्ये वेदेन्दुसर्गश्चतुर्दशसर्गो गतः समाप्तः ॥ ५८ ॥

इति विवेकानन्दमहाकाव्यटीकायां 'विवेकदीपाख्यायां' चतुर्दशः सर्गः ।



## अथ पञ्चदशः सर्गः

मद्रासनगरात् स्वामी कालीघट्टपुरं ययौ ।
तत्प्रतीक्षासमासक्तजनसम्मर्दसंकुलम् ॥ १ ॥

मद्रासेत्यादि । स्वामी मद्रासनगरात् कालीघट्टपुरं कलिकातानगरं ययौ । कीदृशम् ? तस्य प्रतीक्षार्थं प्रतिपालनकर्मणि समासक्तेन जनसम्मर्देन संकुलम् व्याप्तम् ॥ १ ॥

नगरस्थजनाः सर्वेऽमर्यादज्ञानसागरम् ।
तमालोक्य स्तुतिं तस्य मुक्तकण्ठं समादधुः ॥ २ ॥

नगरस्थेत्यादि । कालीघट्टनगरस्थिताः सर्वे जनाः एनम् अमर्यादज्ञानसागरं मर्यादातीततत्त्वसंविदिसिन्धुं तमालोक्य तस्य मुक्तकण्ठं अत्यधिकादरपूर्वकं स्तुतिं प्रशंसां समादधुः कृतवन्तः ॥ २ ॥

'कोऽप्ययं दिव्यपुरुषो नरदेहधरो ध्रुवम् ।
यस्मिन् संक्रामिता शक्ती रामकृष्णेन पूर्णतः ॥ ३ ॥

कोऽप्ययमिति । अयं नरदेहधरः मनुष्यशरीरधारी ध्रुवम् निश्चयेन कोऽपि दिव्यः अलौकिकः पुरुषः यस्मिन् रामकृष्णदेवेन पूर्णतया स्वशक्तिः संक्रामिता प्रापिता ॥ ३ ॥

गौरवं भारतस्येदं कीर्तिरेषा समुज्ज्वला ।
यस्तेन सर्वदेशेषु सत्यधर्मः प्रकाशितः ॥ ४ ॥

गौरवमिति । यत् तेन स्वामिना संसारे प्रायः सर्वदेशेषु सत्यधर्मः वै सनातनवैदिकधर्मः प्रकाशितः उपदिष्टः । एतत्तु भारतस्य गौरवम् माहात्म्यम् 'एषा भारतस्यैव समुज्ज्वला कीर्तिः यशः ॥ ४ ॥

अकारि जागृतेः कार्यं तेनासेतु हिमाचलम् ।
स्तुतिर्मुखशतेनापि कर्तुं तस्य न शक्यते ॥ ५ ॥

अकारीति । तेन स्वामिना आसेतु हिमाचलं कुमारिकातः हिमाचलपर्वतपर्यन्तं जागृतेः लोकजागरणस्य एतात्प्रशंसनीयं कार्यम् अकारि विहितं यत् तस्य 'स्तुतिः प्रशंसा मुखशतेनापि कर्तुं न शक्यते ॥ ५ ॥

युग्मम्

"सत्कर्मज्ञानयोरैक्यं' 'सर्वधर्मसमन्वयः ।'
नृसेवानेकतायामप्येकता तेन शिक्षिता ॥ ६ ॥
एतत्स्वकार्यसिद्ध्यर्थं महावाक्यचतुष्टयम् ।
स्वीकृतं तेन जातेयं विवेकोपनिषत्परा ॥ ७ ॥

सद्धर्मेति। (१) धर्मज्ञानयोः धर्माधर्मज्ञानयोः सत् समीचीनं ऐक्यं समन्वयः (२) सर्वधर्मसमन्वयः यावद्धर्मसमन्वयः यावद्धर्माणामैक्यं (३) नृसेवा नराः (४) अनेकतायामेकता 'एकं सद्विप्रा बहुधा वदन्ति' इत्यनुसारं भिन्नतायामभिन्नतादर्शनं च तेन लोकेभ्यः शिक्षिता उपदिष्टा ॥ ६ ॥

स्वकार्यसिद्धये सद्गुरुमहावाक्यकार्यसिद्ध्यर्थं उपरिनिर्दिष्टं महावाक्यचतुष्टयम् 'अहं ब्रह्मास्मि, तत्त्वमसि, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म' इति छान्दोग्योपनिषद्गतमहावाक्यचतुष्टयवत् तेन भारतोद्धारार्थं धर्मज्ञानसमन्वयादिकं महावाक्यचतुष्टयं स्वीकृतम् तेन कारणात् इयं महावाक्यचतुष्टयस्वरूपा परा श्रेष्ठा उपनिषदेव आसा। यदनुसरणेन भारतसमुन्नतिः निश्चिता ॥ ७ ॥

दृष्ट्वा संपूर्णदेशस्य लोकान्दारिद्र्यपीडितान्।
विशालहृदयस्यासीद् दृष्टिरस्याश्रुसंकुला ॥ ८ ॥

दृष्ट्वेति। सम्पूर्णदेशस्य भारतवर्षस्य लोकान् जनान् दारिद्र्यपीडितान् दृष्ट्वाऽस्यैव विशालहृदयस्य उदारात्मनः अस्य स्वामिनः दृष्टिः नयनम् अश्रुसंकुला अश्रुभिराकुला आसीत् ॥८॥

सोऽब्रवीत्सुमनःस्रग्भिर्भूषितो सुहृदादरात्।
समानीय करौ नम्रोऽतिस्नेहाद्गद्गदस्वरः ॥ ९ ॥

सोऽब्रवीदिति। नागरिकैः सुमनःस्रग्भिः पुष्पमालाभिः सुहृदादरात् भूषितः अलंकृतः सन् करौ हस्तौ समानीय नमस्कारम्। अतिस्नेहात् गद्गदस्वरः अवरुद्धकण्ठः अब्रवीत् ॥९॥

निजां जन्मभुवं प्राप्य हर्षोत्फुल्लविलोचनः।
अमन्दानन्दसन्दोहपरिपूरितमानसः ॥ १० ॥

निजामिति। निजां जन्मभुवं जन्मभूमिं प्राप्य आगत्य स हर्षेण प्रीत्या उत्फुल्ले विकसिते लोचने यस्य तथा अमन्देन महता आनन्दसन्दोहेन परिपूरितं मानसम् अन्तःकरणं यस्य एतादृशः जातः ॥ १० ॥

नाहं कोऽपि महानात्मा नवधर्मप्रचारकः।
बालकोऽहं समायातो युष्माभिः सार्धमासितुम् ॥ ११ ॥

नाहमिति। अहं नवधर्मप्रचारकः नवीनधर्मोपदेशकः कोऽपि महात्मा नास्मि अपितु युष्माकं बालमित्रं बालक एव युष्माभिः भवद्भिः सह इह जन्मभुवि आसितुं निवासं कर्तुमागतः ॥ ११ ॥

भूमावेव समासीनो धूलिधूसरिताङ्गकः।
मन्ये वृत्तं वर्णयेयं भ्रातरो! भवतां पुरः ॥ १२ ॥

भूमावेवेति। भवद्भिः सह इह सभायां भूमावेव आच्छादनरहिते भूतले एव समासीनः उपविष्टः धूल्या धूसरितानि अङ्गानि यस्य एतादृश एव [अधितुमिच्छामि]। ततश्च एतादृशः अहं हे भ्रातरः! भवतां पुरः यद् यद् वृत्तम् अमेरिकायां यूरोपमहाद्वीपे च तत्तत् वर्णयेयम् वर्णयिष्यामि इति मन्ये ॥ १२ ॥

श्रूयतां वृत्तसर्वस्वं रहस्यं कर्मणां मम।
रामकृष्णगुरोः सर्वं प्रसादस्य फलं महत् ॥ १३ ॥

श्रूयतां वृत्तमिति । हे मित्राणि ! वाह्यदेशेषु यद् वृत्तं तस्य सर्वस्वं सारतत्त्वं तथा मम तत्रत्यकर्मणां रहस्यं गूढं भवद्भिः श्रूयताम् इदं सर्वं आचार्यस्य रामकृष्णगुरोः प्रसादस्य महत्फलम् ॥ १३ ॥

साष्टाङ्गं नतयः सन्तु शतशोऽथ सहस्रशः ।
ममैतच्चरणाम्भोजे यस्येयं महती कृपा ॥ १४ ॥

साष्टाङ्गमिति । एतस्य श्रीरामकृष्ण-गुरुदेवस्य चरणाम्भोजे मम शतशः सहस्रशः साष्टाङ्गं नतयः नमस्काराः सन्तु यस्य श्रीरामकृष्णदेवस्य इयं मम वक्तृतास्वरूपा महती कृपा अनुकम्पा ॥ १४ ॥

मया चेन्मनसा वाचा वपुषा वा शुभं कृतम् ।
संसारस्य न मन्येऽहमात्मानं गौरवान्वितम् ॥ १५ ॥

मया चेदिति । मनसा विचाररूपेण, वाचा भाषणरूपेण, वपुषा शारीरिकपरिश्रमरूपेण वा यदि संसारस्य किञ्चिच्छुभं कल्याणकरं कार्यं कृतम् तेन कार्येण अहमात्मानं गौरवान्वितं न मन्ये । अत्र गौरवकारणं तु ममाचार्यदेशिकः परमहंसदेव एव ॥ १५ ॥

अथानिष्टं भवेत्किञ्चिन्मन्मुखान्निःसृतं क्वचित् ।
अभावात्परिपाकस्य धियो मन्तुर्ममैव सः ॥ १६ ॥

अथानिष्टमिति । वाह्यदेशेषु भ्रमणसमये यदि मम मुखात् वदनात् क्वचित् किञ्चित् अनिष्टं अनभिलषितं निःसृतं उच्चारितं भवेत् तत्सर्वं मम धियः बुद्धिशक्तेः परिपाकस्य पक्वताया अभावादेव एतादृशः सर्वोऽपि ममैव केवलं मन्तुरपराधः न कस्य चिदन्यस्य ॥

ओजोहीनं सदोषं वा मदीयं चेदनिर्मलम् ।
ऊर्जितं यदि वा पुण्यं शक्तिर्भगवतः परा ॥ १७ ॥

ओजोहीनमिति । ओजोहीनं मम वक्तृतायां यदि किञ्चिदोजोहीनं वक्तृतासामर्थ्यविषये दुर्बलं, अथवा अनिर्मलं अपवित्रं तत्सर्वं मदीयमेव सर्वोऽपि मदीय एव दोषः यदि च तत्र भाषणादिषु किञ्चित् ऊर्जितं ओजस्वि पवित्रं वा तत्सर्वमपि भगवतः श्रीरामकृष्णस्यैव परा श्रेष्ठा शक्तिः मया अत्र न किमपि कृतम् ॥ १७ ॥

सर्वधर्मस्वरूपस्य वाणी साक्षात् सरस्वती ।
ज्ञानात्मा स न विज्ञातो जगताद्यापि वस्तुतः ॥ १८ ॥

सर्वधर्मेति । सर्वधर्मस्वरूपस्य तस्य रामकृष्णदेवस्य वाणी साक्षात्सरस्वती एव ज्ञानात्मा ज्ञानस्वरूपः स परमहंसदेवः जगता संसारेण अद्यापि वस्तुतः याथार्थ्येन न विज्ञातः न बोधविषयीकृतः ॥ १८ ॥

धर्मस्त्वलौकिकोपायः पशुर्येन नरायते ।
नराश्चापीश्वरायन्ते विना धर्मं परः पशुः ॥ १९ ॥

धर्म इति । धर्मः स्वस्वरूपापरोक्षज्ञानस्वरूपः एतादृशः अलौकिकः दिव्यः उपायः वर्तते येन पशुरपि नरायते मनुष्यः भवति । नराश्च ईश्वरस्वरूपा भवन्ति । धर्मं विना नरः पशुतुल्यः एव ॥ १९ ॥

अवाप्य ज्ञानमीशस्य चिन्तनं तस्य नित्यशः।
प्रत्यक्षं तेन संभाषा प्रोच्यते धर्मलक्षणम् ॥ २० ॥

अवाप्येति। ईश्वरस्य ज्ञानं स सर्वज्ञः सर्वव्यापी सर्वशक्तिमान्-इत्याकारं अवाप्य नित्यशः तस्य चिन्तनं ध्यानादिकं, तेन सह प्रत्यक्षं संभाषा भाषणादिकं धर्मलक्षणं प्रोच्यते ॥ २० ॥

स्नेहः समग्रसंसारे स्थितप्राणिषु निर्मलः।
उदारता तथा तेषु धर्मस्य निकषः स्मृतः ॥ २१ ॥

स्नेह इति। समग्रे संपूर्णे संसारे स्थितेषु प्राणिषु निर्मलः शुद्धः स्नेहः प्रेमभावना तथा तेषु प्राणिषु स्वार्थशून्या उदारता भावनैव धर्मस्य निकषः कषपाषाणः स्मृतः बुधैरिति शेषः ॥ २१ ॥

एतादृशो महान् धर्मो वेदोपनिषदीरितः।
प्रतिपादितमत्रैव 'चरातिचरतो भगः' ॥ २२ ॥

एतादृश इति। एतादृशः महान् श्रेष्ठः धर्मः वेदेषु उपनिषत्सु च ईरितः, अत्र अत्रैव वेदोपनिषत्सु प्रतिपादितमस्ति 'आस्ते भग आसीनस्य ऊर्ध्वस्तिष्ठति तिष्ठतः शेते निपद्यमानस्य चरातिचरतो भगः' इति ॥ २२ ॥

मया किञ्चित्कृतं कार्यं भवद्भिः प्रतिपादितम्।
स्मर्यतामहमप्यासं बालः कालेऽतिबालिशः ॥ २३ ॥

मयेति। यदा भारताद्बहिः किञ्चित् सेवाकार्यं कृतं विहितं इति भवद्भिः प्रतिपादितम् उक्तम्। परं भवद्भिरिदं स्मर्यताम् यदहमपि कदाचित्समये अतिबालिशः अज्ञः बाल एव आसम् ॥ २३ ॥

मन्यध्वेऽत्र कृतं किञ्चिन्मया साधारणेन चेत्।
मत्तोऽधिकतरं यूयमलं कर्तुं ध्रुवं नरम् ॥ २४ ॥

मन्यध्व इति। 'मया साधारणेन न तु अलौकिकेन किञ्चित् कार्यं कृत' इति यूयं मन्यध्वे तर्हि यूयं मत्तोऽपि अधिकतरं किमपि कर्म कर्तुं अलं स्थ इति ध्रुवम् निश्चितम् ॥ २४ ॥

त्यक्तनिद्राः समुत्थायारभध्वं कार्यमुत्तमम्।
भवद्धस्तगतं सर्वं सूच्यते केवलं मया ॥ २५ ॥

त्यक्तनिद्रा इति। हे भ्रातरः! यूयं त्यक्ता निद्रा आलस्यं यैः एतादृशाः समुत्थाय 'चरातिचरतो भगः' इति वचनमनुसृत्य उत्तमं मातृभूमेरुद्धारकार्यमारभध्वम्। सर्वमेवैतज्जन्मभूमेरुद्धारकार्यं भवद्धस्तगतं युष्मत्प्रयत्नाधीनं विद्यते मया तु केवलं सूच्यते। नेदमेकस्य कस्यचित्कार्यं अपितु सर्वेषामस्माकम् ॥ २५ ॥

याते मयि न लुप्येत मातृसेवा-परम्परा।
पूर्णो युष्मासु विश्वासो युववृन्दे विशेषतः ॥ २६ ॥

यातेऽपीति। इयं मातृसेवापरम्परा वृद्धेभ्यः यूनः प्रति आगतः कुलाचार इव मयि यातेऽपि अस्माल्लोकाद्गतेऽपि न लुप्येत नष्टा न भवेत् युष्मासु मम पूर्णः विश्वासः श्रद्धा विशेषतः यूनां वृन्दे युवसमूहे ॥ २६ ॥

दिव्या शक्तिरनिर्वाच्या वर्तते मानवेऽनिशम्।
दरिद्रेषु तथेशस्य निवासोऽपि मतः पुनः ॥ २७ ॥

दिव्या शक्तिरिति। अनिर्वाच्या निर्वक्तुमयोग्या अलौकिकशक्तिः दिव्यबलं मानवे मनुष्यमात्रेऽनिशं निरन्तरं वर्तते विद्यते। तथा दरिद्रेषु निःस्वेषु ईश्वरस्य निवासः वसतिरपि विद्यते इति महतां विश्वासः ॥ २७ ॥

शक्तेरुद्घाटनं तस्याः परेशस्य च सेवनम्।
यूनां कर्तव्यमद्यत्वे भारतोन्नतिमिच्छताम् ॥ २८ ॥

शक्तेरिति। तस्याः मानवे विद्यमानाया दिव्यशक्तेः उद्घाटनं प्रकटीकरणं तथा परेशस्य ईश्वरस्य सेवनम् दरिद्रदुःखितेषु विद्यमानस्य भगवतः सेवा अद्यत्वे वर्तमानकाले यूनां भारतीयतरुणानां कर्तव्यम् कीदृशाम्। भारतस्य मातृभूमेः उन्नतिं समृद्धिमिच्छताम-भिलषताम् ॥ २८ ॥

कवीन्द्रस्तां नरेन्द्रोक्तिं रवीन्द्रोऽप्यन्वमन्यत।
सत्यमद्योन्नतिर्देशे तस्यैव वचसः फलम् ॥ २९ ॥

कवीन्द्र इति। एतादृशीं स्वामिमुखतः निःसृतामुक्तिं वचनं दिव्यशक्तेरुद्घाटनं दरिद्रसेवारूपं च कवीन्द्रः रवीन्द्रः विश्वकविरपि अन्वमन्यत मतवान्। अद्य भारते या काचित्समुन्नतिः जागरणं दृश्यते सा सर्वापि तस्यैव स्वामिनः विवेकानन्दस्य उपदेशस्य फलं परिणामः ॥ २९ ॥

तदानीं भारतेऽस्माकं नेता नैकोऽप्यविद्यत।
जननीसेवने येन बलं नाप्तं विवेकतः ॥ ३० ॥

तदानीमिति। तदानीं तस्मिन्समये अस्माकं भारतदेशे एकः अपि नेता न अविद्यत नासीत्। येन जननीसेवने मातृभूमिसेवायां विषये विवेकतः विवेकानन्दस्वामिसकाशात् बलं प्रेरणात्मकं नाप्तं नाधिगतं भवेत् ॥ ३० ॥

निशम्याह्वानमस्येदं बहवः सुहृदो यतेः।
मिलिताः परितः सन्तः सन्तः सेवार्थमुद्यताः ॥ ३१ ॥

निशम्येति। अस्य स्वामिनः इदमाह्वानमुच्चैरामन्त्रणं निशम्य श्रुत्वा बहवः सन्तः सज्जनाः सुहृदः मित्राणि तस्य परितः मिलिताः सन्तः सेवार्थं मातृभूमिसेवार्थमुद्यतास्तत्परा अभवन् ॥ ३१ ॥

दुर्भिक्षपीडिता ह्येके परे दारिद्र्यदुःखिताः।
इतरे तु गदाक्रान्ता म्रियन्ते शतशोऽनिशम् ॥ ३२ ॥

दुर्भिक्षेत्यादि। एके केचिदत्र भारते दुर्भिक्षेण अनावृष्ट्यादिहेतोः भिक्षापि दुःखेन प्राप्यते यैरेतादृशाः सन्ति अपरे तु दारिद्र्येण सर्वप्रकाराभावेन दुःखिताः त्रस्ताः

इतरे ॥ गदाक्रान्ता रोगाक्रान्तशरीरा उपचारं विना अनिशं शतशः म्रियन्ते यमसदनं प्रयान्ति ॥ ३२ ॥

अस्सहायानुपेक्ष्यैतान् यूयं स्वोदरपूरणाः ।
स्वर्गं वा नरकं घोरं भावयध्वं क्व यास्यथ ॥ ३३ ॥

असहायानिति । सहायशून्यानेतान्स्वबान्धवान् उपेक्ष्य परित्यज्य केवलं स्वार्थैकपराः स्वोदरपूरणमात्रचिन्तापराः स्वर्गं यास्यथ अथवा नरकं यास्यथ इति भावयध्वं चिन्तयत एतादृशं स्वबान्धवोपेक्षणं तु ध्रुवं नरकसाधनं भविष्यति ॥ ३३ ॥

अखण्डोऽखण्डमात्मानं जनान् दुर्भिक्षपीडितान् ।
सेवितुं विनियुङ्क्ते स्म यतेरादेशतः क्वचित् ॥ ३४ ॥

अखण्ड इति । अखण्डानन्दनामा स्वामिनः गुरुबन्धुः दुर्भिक्षपीडितान् जनान्सेवितुं यतेः आदेशतः विवेकानन्दस्य वचनात् कस्मिंश्चिद्दुर्भिक्षपीडिते क्षेत्रे आत्मानं विनियुङ्क्ते स्म नियोजयामास ॥ ३४ ॥

प्रतीच्यां दिशि सानन्दोऽभेदोऽभेदमुपादिशत् ।
गुणाधारो गुणातीतोऽभोजयच्च बुभुक्षितान् ॥ ३५ ॥

प्रतीच्यामिति । प्रतीच्यां दिशि पश्चिमायां दिशि अभेदानन्दनाम्ना अपरः सुहृद् सानन्दो महतानन्देन अभेदं सर्वेऽपि एकस्यैवेश्वरस्य पुत्रा न तेषु कोऽपि भेदः विद्यते इत्याकारकमुपदेशं कृतवान् गुणी गुणातीतानन्दोऽपि बुभुक्षितान् भोजयितुमारब्धवान् ॥ ३५ ॥

अधिलङ्कं शिवानन्दोऽमन्दो धर्मप्रचारतः ।
स्वामिप्रेरणया पुण्यं विधातुमुपचक्रमे ॥ ३६ ॥

अधिलोकमिति । अमन्दः आलस्यशून्यः शिवानन्दः अधिलङ्कं लङ्कायां स्वामिप्रेरणया स्वामिनः उपदेशात् धर्मप्रचारकार्यं कुर्वन् पुण्यकार्यं विधातुमुपचक्रमे आरब्धवान् ॥ ३६ ॥

असहायान्शिशून् कश्चिद्वर्णजातिक्रमं विना ।
अनाथालयमानीय दत्त्वा शिक्षामपोषयत् ॥ ३७ ॥

असहायानिति । कश्चिदपरः स्वामिसुहृद् असहायान् सहायशून्यान् कोमलबालकान् किंवर्णीयोऽसौ किंजातीयो वा इति विचारं विना, अनाथाश्रममानीय तेभ्यः शिक्षां च दत्त्वा अन्नादिना तान् अपोषयत् ॥ ३७ ॥

इत्थमस्य सहायास्ते लोकसेवनतत्पराः ।
कार्यक्षेत्रं तु सर्वत्र सेवाकर्ता सुदुर्लभः ॥ ३८ ॥

इत्थमस्येति । इत्थमनेन प्रकारेण अस्य स्वामिनः सहाया ते सर्वे लोकसेवनतत्पराः जाताः । कार्यस्य सेवाकार्यस्य क्षेत्रं स्थानं सर्वत्रैव प्राप्यते सेवाकर्ता एव दुर्लभो भवति ॥ ३८ ॥

चारुकार्यविधानार्थं पाश्चात्यानां विशेषतः ।
अभावात् स्थायिकेन्द्रस्य यतिश्चिन्तामुपागतः ॥ ३९ ॥

चारुकार्येति । मातृसेवाकार्यस्य सम्यक्तया संपादनार्थं विशेषतः ये पाश्चात्य-सज्जनाः स्वामिना सह सेवार्थमत्रागताः, तत्कृतभारतसेवार्थं स्थायिकेन्द्रस्य स्थिरस्थानस्य अभावात् यतिश्चिन्तासुरकण्ठासुपागतः चिन्तितोऽभवत् ॥ ३९ ॥

इयेष जाह्नवीतीरे क्वचित्स्थापयितुं यतिः ।
एतादृशं महत् केन्द्रं 'रामकृष्णा'भिधानतः ॥ ४० ॥

इयेषेति । यतिः क्वचित् कुत्रचित् जाह्नवीतीरे भागीरथीतटे एतादृशं सेवार्थं महत्केन्द्रं 'रामकृष्ण-सेवाश्रम' इत्यभिधानतः स्थापितुं इयेष अभ्यलषत् ॥ ४० ॥

तेन संक्रामिता शक्तिर्यतो सर्वस्वदानतः ।
स्थाने संस्था नवीनेयं 'रामकृष्णाश्रमो' भवेत् ॥ ४१ ॥

तेनेति । तेन परमहंसदेवेन यतौ विवेकानन्दे स्वसर्वस्वदानेन शक्तिः अलौकिक-सामर्थ्यं संक्रामिता प्रवेशिता अतः इयं नवीना संस्था स्थाने योग्यमेव 'रामकृष्णाश्रमः' भवेत् ॥ ४१ ॥

वर्षे मुन्यङ्कदिक्चन्द्रे शरे मास्यादिमे दिने ।
सेवाश्रमः स्थापितोऽभूच्चिरकालस्थितिश्रुतिः ॥ ४२ ॥

वर्षे इति । मुन्यंकदिक्चन्द्रे ईशवीय १८९७ वर्षे शरे मासि शरे पञ्चमे 'मे' इत्या-ख्यमासे आदिमे दिने प्रथमे दिने चिरकालपर्यन्तं स्थितिः अवस्थानं श्रुतिश्च यशश्च यस्य एतादृशः आश्रमः स्थापितः अभूत् ॥ ४२ ॥

संघशक्तिं विनाद्यत्वे कार्यं किंचिन्न सिद्ध्यति ।
अस्माभिः संहतैर्भाव्यमतो निःस्वार्थबुद्धिभिः ॥ ४३ ॥

संघशक्तिमिति । अद्यत्वे वर्तमानकाले संघशक्तिं विना संहतिं बलं विना किमपि कार्यं न सिद्ध्यति सफलं न भवति अतः अस्माभिः सर्वैः निःस्वार्थबुद्धिभिः परित्यक्तस्वार्थविचारैः संहतैः संघस्थैर्भाव्यम् ॥ ४३ ॥

गृहस्था भगवद्भक्ता अनेके यतयस्तथा ।
अस्मिञ्छिवतमे कर्मण्यनुयातुं तमुद्यताः ॥ ४४ ॥

गृहस्था इति । अनेके गृहस्था भगवद्भक्ताः श्रद्धालवः जनाः त्यागशीला यतयश्च अस्मिन् शिवतमे पवित्रतमे कार्ये तम् अनुयातुं अनुगन्तुं उद्यताः तत्परा अभवन् ॥ ४४ ॥

संघोऽयं रामकृष्णाख्यो जगत्यां विदितोऽजनि ।
कल्याणं मानवानां यल्लक्ष्यं निश्चितमुत्तमम् ॥ ४५ ॥

संघोऽयमिति । अयं संघः जगत्यां संसारे 'रामकृष्ण' इत्याख्या यस्यैतादृशः विदितः प्रसिद्धः अजनि यस्य संघस्य उत्तमं सर्वोत्कृष्टं लक्ष्यं साध्यं मानवानां कल्याणं शिवमिति निश्चितं निर्णीतं जातम् ॥ ४५ ॥

शिवज्ञानाज्जीवसेवारहस्यं पुरतः स्थितम् ।
अनुसृत्य तदेकं ते भ्रमन्त्यवनिमण्डले ॥ ४६ ॥

शिवज्ञानादिति । तेषां कार्यकर्तॄणां पुरतः शिवज्ञानात् जीवसेवा 'सर्वे मानवाः शिवस्वरूपाः', 'मानवसेवैव भगवत्सेवा' इति रहस्यं स्थितम्। तदेवैकं ध्येयमनुसृत्यानुगम्य ते सर्वे संघसदस्या अवनिमण्डले भ्रमन्तु इतस्ततः गच्छन्तु ॥ ४६ ॥

जगद्धिताय मोक्षार्थमात्मनश्चेति यस्तद्द्वयम् ।
आदर्शोऽनुसृतोऽप्यस्य सर्वोच्चस्तन्निर्देशतः ॥ ४७ ॥

जगद्धितायेति। अस्य संघस्य सर्वोच्चः सर्वोत्कृष्टः आदर्शः अनुसरणीयमाचरणं 'जगद्धिताय' लोककल्याणार्थं अथ च 'आत्मनः मोक्षार्थं' इति द्विवाग्मकः तन्निर्देशात् श्रीरामकृष्णोपदेशतः अनुसृतः परिपालितः अभवत् ॥ ४७ ॥

राष्ट्राणां जातिवर्णानां धर्माणां चापि भिन्नताम् ।
परित्यज्य जगत्सेवा ध्येयं संघस्य गौरवम् ॥ ४८ ॥

राष्ट्राणामिति । जगति विविधराष्ट्राणां, जातीनां, वर्णानां धर्माणां च भिन्नतां परित्यज्य जगतः स्वार्थशून्या सेवा एव अस्य संघस्य गौरवस्वरूपं ध्येयं लक्ष्यम् ॥ ४८ ॥

रामकृष्णस्य हृदये या विश्वप्रेमभावना ।
तां साकारां विधातुं च संघः प्राधान्यतः स्थितः ॥ ४९ ॥

रामकृष्णस्येति । श्रीरामकृष्ण-परमहंसस्य हृदये या विश्वप्रेमभावना सर्वस्मिन् संसारे स्नेह आसीत् तां स्नेहभावनां साकारां विधातुं कर्तुमेव प्रधानतयाऽयं संघः 'श्रीरामकृष्णाश्रमः' स्थितः विद्यते ॥ ४९ ॥

धर्मप्राणान्नविद्यानां दाने संघस्य दृष्टितः ।
अंगभूतं तु सेवायाः कार्यं सर्वप्रयत्नतः ॥ ५० ॥

धर्मप्राणेत्यादि । धर्मदानं, प्राणदानं, अन्नदानं, विद्यादानं च एतादृशं चतुर्विधदानं रामकृष्णसंघस्य दृष्टितः सेवायाः शिवज्ञानाज्जीवसेवायाः अंगभूतमंशभूतं तदेव सर्वैरपि सर्वप्रयत्नतः कार्यं विधेयम् ॥ ५० ॥

यथाहं भारतीयोऽस्मि तथा संसारसेवकः ।
इति संघसदस्यानामस्तु जीवनदर्शनम् ॥ ५१ ॥

यथाहमिति । यथा अहं भारतीयः भारतवासी अस्मि तथा अखिलस्य संसारस्य सेवकोऽपि अस्मि प्रत्येकभारतीय इदमेव स्वमनसि भावयतु यदहं अखिलस्य संसारस्य सेवकः अस्मि । इदमेव रामकृष्णसंघसदस्यानां जीवनस्य दर्शनशास्त्रमस्तु भवतु ॥ ५१ ॥

राजनीत्या न संबंधः स्थापनीयोऽस्ति संस्थया ।
विविधा राजनीतिर्हि सेवा लोकस्वरूपिणी ॥ ५२ ॥

राजनीत्येति । अनया संस्थया केवलं लोकसेवाकार्यव्यापृतया राजनीत्या सह कोऽपि संबन्धः न स्थापनीयः । यतः राजनीतिस्तु विविधा 'वारांगनेव नृपनीतिरनेकरूपा' सेवा तु अव्यभिचारिणी भक्तिरिव एकस्वरूपिणी ॥ ५२ ॥

चेच्छुद्धं हृदयं सेवाभिलाषा बलवत्तरा।
धनाभावो न बाधेत विश्वसत्कार्यसाधनम् ॥ ५३ ॥

चेच्छुद्धमिति। यदि हृदयं शुद्धं निर्मलं बलवत्तरा अतिबलवती सेवाभिलाषा च विद्यते तर्हि केवलं धनस्य अभावः विश्वसत्कार्यसाधनम् संसारकल्याणसाधनकार्यं कथमपि न बाधेत विघ्नितं न कुर्यात् ॥ ५३ ॥

धन्यं वेलूरसंस्थानं धन्यश्चाप्याश्रमो महान्।
अजरामरतां प्राप्ते येनाख्ये गुरुशिष्ययोः ॥ ५४ ॥

एतत् 'बेलूर' संस्थानं धन्यं सर्वोत्कर्षशालि अत्रत्योऽयमाश्रमश्च धन्यः येन आश्रमेण गुरुशिष्ययोः परमहंसदेवस्य विवेकानन्दस्य च आख्ये नामनी अजरताममरतां च प्राप्ते ॥ ५४ ॥

स्वार्थहीना नृणां सेवा यावदास्ते भुवस्तले।
तावदीर्ष्याकलिद्वेषदोषाणां नास्ति सम्भवः ॥ ५५ ॥

स्वार्थहीनेति। यावत्कालपर्यन्तं भुवस्तले भूतले स्वार्थहीना निःस्वार्था नृणां सेवा मानवसेवा आस्ते विद्यते तावत्कालपर्यन्तं अत्र जगति ईर्ष्यायाः कलेः कलहस्य द्वेषस्य च संभवः नास्ति। स्वार्थशून्या लोकसेवैव भारतस्य आदिमं कर्तव्यम् ॥ ५५ ॥

प्रतिष्ठितश्चारुशरीरमन्दिरे त्वयादिदेवः सततं निषेव्यताम्।
प्रभुर्न चेत्त्वं प्रभुमत्र सेवितुं प्रयोजनं तेऽस्ति किमन्यमन्दिरैः ॥ ५६ ॥

प्रतिष्ठित इति। चारुणि सुन्दरे शरीरे एव मन्दिरे प्रतिष्ठितः आदिदेवः परमेश्वरः सततं निरन्तरं निषेव्यताम् सेवाविषयीक्रियताम्। अत्र शरीरमन्दिरे विद्यमानं प्रभुमीश्वरं सेवितुं त्वं यदि प्रभुः समर्थः न भवसि तर्हि तव अन्यमन्दिरैः तत्र गत्वा प्रतिमापूजनाविधिभिः किं प्रयोजनं न किमपीत्यर्थः। अत्र वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणम् ॥ ५६ ॥

नारीं नरं चाखिलजीवलोकं सेवस्व नारायणभावतस्त्वम्।
दयाप्रदाने ननु कोऽसि तेषां सेवाप्रदानं चर धर्ममर्म ॥ ५७ ॥

नारीमिति। नारीं वनितां नरं मनुष्यमात्रं तथा अखिलजीवलोकं नारायणभावतः ईश्वरभावनया सेवस्व तेषामुपरि दयाप्रदाने त्वं कोऽसि न कोपीत्यर्थः। केवलं सेवाप्रदानमेव धर्मस्य मर्म रहस्यं तदेव चर समाचर ॥ ५७ ॥

उच्चैः स्थितः करगृहीतपणो विनोदाद्
मा ब्रूहि भिक्षुक! गृहाण दयापरोऽहम्।
दाता भवत्युपकृतोऽत्र परं ग्रहीत्रा
सौभाग्यमेतदिह ते स्वसहायकर्तुः ॥ ५८ ॥

उच्चैरिति। उच्चैः स्थितः कस्मिंश्चित् उच्चस्थाने स्थितः करे गृहीतः धृतः, पणः 'नया पैसा' येनैतादृशः सन् विनोदात्केवलं मनोरञ्जनार्थं रे भिक्षो! अहमत्युदारो जातः

इदं 'नयापैस-नाणकं तुभ्यं दातुमुद्यतोऽहं गृहाण' इति गौरवपूर्णं वचः मा ब्रूहि। अत्र दानप्रकरणे तु दानस्य ग्रहीता दाता एव उपकृत भवति न तु ग्रहीता। एवं दाने त्वं न परस्य सहाय करोषि अपितु स्वस्यैव सहायतां करिष्यति ॥ ५८ ॥

आस्ते जीवनमेव भंगुरमिदं तुच्छोऽभिमानस्तथा
यत्सांसारिकभोग्यजातमखिलं नानाविलासान्वितम्।
यो जीवेद्परार्थसाधनकृते तस्यैव शान्तिः परा
प्राणन्तोऽपि मृतोपमाः खलु नरा ये स्वार्थिनः केवलम् ॥ ५९ ॥

आस्ते इति। इद ऐहिक जीवनमेव भगुरं नश्वरमपि आस्ते अस्माकं अभिमान 'अहं कर्ता' 'अहं दानदाता' इत्याकारकः तुच्छ निरर्थक। यद् अखिल संसारस्थितं भोग्यवस्तुजातं तत् केवल नानाविलासान्वितं न कदापि वास्तविकसुखस्य साधनम्। अतः यः मानव अपरार्थसाधनकृते लोकसेवाकरणार्थमेव जीवेत् तस्यैव परा चिरन्तनी शान्तिः भवेत् न परस्य कस्यापि स्वार्थिन यत ये जना केवल स्वार्थिन स्वार्थैकरताः ते जीवन्तोऽपि मृतसमाना निरर्थजीवना सन्ति ॥ ५९ ॥

लोकं मोहनमोहनं धृतहिताल्लोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
वाणी-मन्त्रजपप्रसक्तमनसा संसेवनीये महा-
काव्ये त्र्यम्बकसूरिणा विरचिते बाणेन्दुसर्गो गतः ॥ ६० ॥

इति विवेकानन्दचरिते महाकाव्ये सेवाश्रमस्थापना नाम पञ्चदशः सर्गः।

लोकमिति। लोकमित्यादि धर्मप्रधानाश्रये इत्यन्ते पूर्ववत् वाणीमन्त्रजपप्रसक्तमनसा सरस्वती मन्त्रजपप्रसितेन त्र्यम्बकसूरिणा विरचिते विवेकचरिते नाम महाकाव्ये पञ्चदश सर्गः ॥ ६० ॥

इति विवेकानन्दचरितमहाकाव्यटीकायां 'विवेकदीपाख्यायां पञ्चदश सर्ग ॥ १५ ॥



## अथ षोडशः सर्गः

हायने नवनवाश्रमास्तुतेर्या गिरं गदितवान् यतीश्वरः ।
देशभक्तिललनात्मसंविदां तत्र किञ्चिदभिधीयतेऽधुना ॥ १ ॥

हायने इति । नवनवाश्रमास्तुतेः 'रामकृष्णाश्रम' नामकनवीनाश्रमस्थापनस्य हायने वर्षे यतीश्वरः यां गिरं उपदेशात्मिकां वाणीं गदितवान् उक्तवान् कस्मिन्विषये ? देशभक्तिविषये, ललना-स्त्रीशिक्षाविषये, आत्मसंविद्विषये च तत्र तान्विषयानधिकृत्य अधुना किञ्चिदुच्यते ॥ १ ॥

### देशभक्तिः

स्नेहस्त्वदीयहृदये नरजातिमात्रे चेद्विद्यते सुहृदये ! निजजन्मभूमौ ।
आयाहि गन्तुमनिशं पुरतो न पश्चाद् यत्नं विधातुमिह सत्तमलक्ष्यसिद्ध्यै ॥

स्नेह इति । अये सुहृद् मित्र ! निजजन्मभूमौ भारतवर्षं त्वदीयहृदये नरजातिमात्रे मनुष्यमात्रे स्नेहः प्रेमभावना विद्यते यदि तर्हि सत्तमलक्ष्यसिद्धये सर्वोत्तमलक्ष्यसिद्ध्यर्थं प्रयत्नं विधातुं कर्तुं अनिशं पुरतः अग्रतः गन्तुमायाहि न कदापि पश्चाद्गन्तुम् । देशोन्नतिसिद्ध्यर्थमनिशं पुरतः गन्तव्यं न पश्चात् ॥ २ ॥

उत्थाय धारय धुरं त्वरितं जगत्यां
जानासि जीवितमिदं क्षणभंगुरं ते ।
जातोऽसि यत्किमपि लक्ष्म भवेत्त्वदीयं
जाताः स्थिताः कति न वा पशवो म्रियन्ते ॥ ३ ॥,

उत्थायेति । त्वरितं झटिति विलंबं विना उत्थाय आलस्यपरित्यागपूर्वकं धुरं धारय स्वकर्तव्यभारं शिरसि वोढुमारभस्व ते जीवितमिदं क्षणभंगुरमिति क्षणविध्वंसि इति त्वं न जानासि किम् ? यस्मात्त्वमस्मिञ्जगति जातोऽसि उत्पन्नोऽसि तस्मादत्र तव किमपि लक्ष्म चिह्नं भवेदेव । अन्यथा अस्मिन् जगति कति पशवः जाताः उत्पन्नाः किंचित्कालपर्यन्तं स्थिताः सन्तः न किमपि कृत्वा म्रियन्ते ॥ ३ ॥

देशस्य बन्धहरणे जगतश्च मुक्त्यै कार्यं प्रयत्नशतमात्तभरोत्तमाङ्गैः ।
यज्ज्योतिरात्मनिहितं तदुदेतु नित्यं वेदान्तभाः प्रतिगृहं प्रविशत्विदानीम् ॥४॥

देशस्येति । देशस्य मातृभूमेः बन्धहरणे स्वतन्त्रताप्राप्तये । जगतः संसारस्य मुक्तये च आत्तभरोत्तमाङ्गैः शिरोधृतकर्तव्यभारैः प्रयत्नशतं कार्यं विधेयम् । यदात्मनिहितं ज्योतिः विद्यते तत् नित्यं उदेतु उदितं भवतु । वेदान्तधर्मस्य भा दीप्तिः प्रतिगृहं गृहे गृहे इदानीं प्रविशतु प्रसरतु ॥ ४ ॥

आजीवनं भवत कार्यपरा, भवन्तु
स्थित्वाद्य मृत्युमनु चापि भवेन्ममात्मा ।
आयाति याति ननु पार्थिवजीवनं नो
नित्यानि किं विभवमानयशः सुखानि ? ॥ ५ ॥

आजीवनमिति । सुहृदः ! यूयम् आजीवनं जीवनपर्यन्तं कार्यपराः कार्यव्यापृताः कर्तव्यतत्पराः भवत । मम आत्मा अहमित्यर्थः । अद्य वर्तमानकाले भवत्सु स्थित्वा मृत्युमनु चापि मृत्योरनन्तरमपि भवद्भिः सहैव तिष्ठेत् । नः अस्माकं पार्थिवजीवनं भौतिकमस्तित्वमित्यर्थः । आयाति आगच्छति कतिचिद्दिनानि च स्थित्वा याति अन्तमेति च । पार्थिवजीवनं कदापि शाश्वतं भवितुं नार्हति । विभवाः धनसम्पदः मानः सम्मानः लोककृतादरः, यशः कीर्तिः सुखं च एतानि सर्वाण्यपि कदापि नित्यानि सन्ति किम् न कदापीत्यर्थः ॥ ५ ॥

आप्लावितं प्रथममस्तु विशुद्धभावैराध्यात्मिकैर्निखिलभारतमुन्नतं नः ।
पश्चात् समाजगतमस्तु मतं तथैव यद्राजकीयजगदस्ति तदप्युपेक्ष्यम् ॥ ६ ॥

आप्लावितमिति । प्रथमं आदौ नः अस्माकमुन्नतं उन्नतिशीलं भारतं आध्यात्मिकैः अध्यात्मशास्त्रसम्बन्धिभिः विशुद्धभावैः निर्मलविचारैः आप्लावितं समन्तात्प्लावितं अस्तु आध्यात्मिकविचारैरेव सद्गुणभावनोदयात् । पश्चादनन्तरं समाजगतं सामाजिकविचारं कर्तव्यं तथैव आध्यात्मिकभावनानां पूर्वं यद्राजकीयजगत् नामकं राजनीतिविचारजातं विद्यते तदपि उपेक्ष्य परित्याज्यम् ॥ ६ ॥

तूष्णीं रहः सपदि सिक्ततुषारसम्पत्संपर्कतो रुचिरपाटलकुड्मलानाम् ।
नित्यं विकास इव विश्वविचारधाराप्रेरिता भवति भारतभाववृन्दे ॥ ७ ॥

तूष्णीमिति । तूष्णीं निःशब्दं रहः एकान्ते सपदि च झटिति च शनैः शनैः यथा केनापि दृष्टं न भवेत् तथा इति बोध्यते सिक्ताः उक्षिताः ये तुषाराः हिमकणाः तेषां सम्पत् समूहः तया संपर्कतः सम्बन्धात् रुचिरपाटलकुड्मलानां सुन्दरगुलाबकलिकानां विकासवत् उन्मीलनसदृशः भारतभाववृन्दे भारतीयविचारपरम्पराभिः विश्वविचारधारा जगति भारतेतरदेशविचारशैली सम्प्रेरिता प्रभाविता भविष्यति । यद्यपि केन प्रकारेण भारतीयविचारैः इतरदेशभावनाः प्रभाविताः जायते इति न दृश्यते तथापि तूष्णीमेव तादृशपरिवर्तनं भविष्यत्येवेत्यत्र न संशयः ॥ ७ ॥

तदेवान्ययाह—

संसृज्यते जगदिदं नवसद्विचारैर्भोः विनैव नियतं खलु भारतेन ।
अद्य ध्रुवं नवतरं युगमाविरास्ते न ज्ञास्यते परमहो प्रभवः कुतस्त्यः ॥८॥

संसृज्यते इति । भारतेन स्वकीयैः नवैः सद्विचारैः इदं जगत् नादं विनैव तूष्णीमेव नियतं निश्चयेन संसृज्यते संसृष्टं करिष्यते । फलतः अद्य वर्तमानकाले नवनवं नूतनं युगं सत्ययुगमित्यर्थः । आविरास्ते प्रकटीभविष्यति । परन्तु एतादृशनवयुगारम्भस्य प्रभवः उद्भवस्थानं कुतस्त्यः कस्मादागतः इति न ज्ञास्यते वर्तमानसामीप्ये (भविष्यत्कालार्थे) लट् ॥ ८ ॥

श्रद्धत्त यूयमनिशं मम वीरमित्राण्यत्रागमानि जगतः शुभकार्यहेतोः ।
क्षुद्रश्वशब्दवशतः कुलिशक्रमाद्वा निःसाध्वसा जगति कर्म निजं कुरुध्वम् ॥

श्रद्धत्तेति । हे मम वीराणि पराक्रमशालीनि मित्राणि ! यूयं सर्वाणि अत्र भूमण्डले सर्वस्य जगतः शुभकार्यहेतोः कल्याणार्थमेव आगतानि जातानि क्षुद्रश्वशब्दवशतः साधारणकुक्कुरभषणात् कुलिशक्रमाद्वा वज्रपाताद्वा निर्भीकाः सन्तः कस्मादपि विघ्नादभीता इत्यर्थः । निजं कर्म कर्तव्यं कुरुध्वं विधत्त ॥ ९ ॥

सर्वेऽप्यशक्तिवशतः प्रभवन्ति दोषा हेतुत्वमेति दुरिताचरणेऽप्यशक्तिः ।
स्वार्थस्य मूलमपि मानसदुर्बलत्वं तेनैव लोकनिवहः कलहे प्रवृत्तः ॥१०॥

सर्वेऽपीति । जगति सर्वे दोषाः दूषणानि अपराधा वा अशक्तिवशतः दौर्बल्यादेव मानसिकदुर्बलतायाः प्रभवन्ति उत्पद्यन्ते दुरिताचरणे पापाचरणे इयमशक्तिरेव हेतुत्वमेति कारणत्वं प्राप्नोति । मानसदुर्बलत्वं मनोदौर्बल्यमेव स्वार्थस्य मूलं निदानं भवेत् । तेनैव दौर्बल्येन लोकनिवहः जनकः परस्परकलहे प्रवृत्ताः उद्यताः भवन्ति ॥ १० ॥

भ्रातर्वृथा नयनतः स्रवदश्रुपातस्त्वय्येव नास्ति सततं निहितं बलं किम् ।
शक्त्या स्वया परिचितः परया भवेश्चेज्जायेत विश्वमखिलं भवदंघ्रिलग्नम् ॥११॥

भ्रातरिति । हे भ्रातः तव नयनतः नेत्राभ्यां स्रवन् वहन् अश्रूणां अस्राणां पातः पतनं स्रवतां अश्रूणां पातः स वृथा निष्फलः अहं दुर्बलः न किमपि कर्तुमलमित्याकारकः शोको निष्प्रयोजनः । सततं निरन्तरं बलं शक्तिः त्वयि एव भवदभ्यन्तरमेव निहितं स्थापितं न विद्यते किम् ? यदि त्वं स्वस्य परया श्रेष्ठया शक्त्या परिचितः संस्तुतः भवेश्चेत् तर्हि सकलं विश्वं भवदंघ्रिलग्नं चरणपतितं जायेत भविष्यति ॥ ११ ॥

सौहार्दभावविभवैः सबलैर्मनुष्यैः सत्यानुरागविमलैरधुनास्ति कार्यम् ।
कार्यं क्रियेत शुचिदाम्भिकवञ्चकैः किं तस्मात्सखे ! जगति दर्शय पौरुषं ते ॥

सौहार्देत्यादि । अधुना इदानीतने काले सौहार्दभावविभवैः सौहार्दभावः विश्वप्रेमैव विभवः धनसम्पद् येषां तैः सबलैः शक्तिमद्भिः सत्यानुरागविमलैः, सत्यप्रेमपवित्रैः जनैः कार्यं प्रयोजनं विद्यते स्वमातृभूसेवार्थं ईदृशा एव जना अपेक्षिताः सन्ति । कार्यं मातृसेवाकार्यं यत् शुचि पवित्रं क्रियते तत् दाम्भिकः वञ्चकैः धूर्तैर्वा क्रियेत किम् ? न कदापीत्यर्थः । तस्मात् हे सखे ! जगति ते निजं पौरुषं पराक्रमं बलं दर्शय प्रकाशय ॥ १२ ॥

सीमातिगौ भवतिः धैर्यसमुद्यमौ चेत्कार्यक्षमत्वगुणमेलनवीर्यवन्तौ ।
आज्ञाकरत्वपरिपुष्टतमौ भवेतां राष्ट्रस्य तद्गतनरस्य च कीर्तिहेतुः ॥ १३ ॥

सीमातिगाविति । धैर्यं धीरत्वं समुद्यमः उद्योगः एतौ द्वौ गुणौ सीमातिगौ साधारणमर्यादामपि अतिक्रान्तौ कार्यक्षमत्वगुणमेलनतः आवश्यकशारीरिकबलसंमिश्रणेन वीर्यवन्तौ अधिकबलवन्तौ तथा आज्ञाकरत्वपरिपुष्टतमौ नेतुराज्ञापालनगुणेनापि अतिशयेन परिपुष्टौ धैर्यसमुद्यमौ नाम गुणौ राष्ट्रस्य तथा तद्गतनरस्य जात्येकवचनं मनुष्याणामित्यर्थः । कीर्तिहेतुः यशसः कारणं भवति ॥ १३ ॥

शैत्यं क्षुधोष्णमथ पार्थिवजीवनं ते किञ्चिन्न केवलमलं बलमीश्वरो नः ।
विश्वासपूर्णहृदयस्य सहानुभूतेः पश्चात्कदापि न गतिः सुहृदः पुरस्तात् ॥१४॥

शैत्यमिति । मातृभूमिसेवाप्रसक्तस्य ते शैत्यं हिमम् क्षुधा बुभुक्षा, उष्णं तपनं वणिकं पार्थिवजीवनं च किञ्चिदपि न एतत्सर्वमुपेक्ष्य जननीसेवाकार्यं विधेयमित्यर्थः । केवल एक ईश्वर एव न अस्माकं बलं विद्यते । ना किमपि । विश्वासपूर्णहृदयस्य आत्मविश्वास युक्तस्य अन्य सह च सहानुभूतियुक्तस्य तव कदापि पश्चाद्गमनं न युक्तम् हे सुहृद् नित्यं पुरस्तादेव अग्रतः एव गन्तव्यम् ॥ १४ ॥

नित्यं वयं दृढतया पुरतो व्रजाम कोऽप्यत्र वर्त्मनि पतेदपरोऽभ्युपैति ।
अस्त्वेवमेव यदि च त्वत्परत्रा स्खलक्ष्ये त्वा च्यावयेत्क इव निश्चितकार्यमार्गात् ॥

नित्यमिति । दृढतया सदयमनसा वयं नित्यं पुरतः अग्रे प्रयाम गच्छाम कार्यारम्भानन्तरं मार्गे कश्चित्पतन्नपि परं तस्य स्थाने अपरः कोऽपि अभ्युपैति आगमिष्यति । व्यक्तिगत स्वलक्ष्ये कार्यं तत्परता च कर्तव्यमार्गे यदि चेत् त्वां निश्चितकार्यमार्गात् कर्तव्यरूपात् स्वीकृतमार्गात् कः च्यावयेत् पातयेत् ॥ १५ ॥

आत्मेव नित्यमचलं स्थिति भारतं नः शुद्धं प्रबुद्धमभयं परमद्वितीयम् ।
आद्यन्तशून्यमजरामरमप्रमेयं देशस्य तस्य वलिनस्तनया वयं स्म ॥ १६ ॥

आत्मेवेति । नः अस्माकमिदं भारतराष्ट्रं आत्मा इव विद्यते यत आत्मनः सर्वेऽपि धर्मा भारतेऽपि विद्यमाना दृश्यन्ते तद्यथा—इदं भारतं नित्यमनाद्यनन्तम् अचलस्थिति अनश्वरं शुद्धं प्रबुद्धं ज्ञानमयं अभयं भयशून्यं निर्भीकम् परं सर्वश्रेष्ठं अद्वितीयं निरुपमं आद्यन्तशून्यं अजरम् अमरं अमेयं मानशून्यं च एतादृशस्य सद्गुणसम्पन्नस्य भारत राष्ट्रस्य वयं बलिनः शक्तिमन्तः तनयाः पुत्राः स्म ॥ १६ ॥

एतादृशस्त्रिभुवने किमु कोऽस्ति देशो
नाशिक्षि येन भरतावनितश्चरित्रम् ।
नापीह कोऽपि जगति प्रथितोऽस्ति धर्मो
येनात्मनो न परतत्त्वमितो गृहीतम् ॥ १७ ॥

एतादृश इति । त्रिभुवने सम्पूर्णजगति एतादृशः अस्मद्भारतसदृशः कोऽपि अन्य देशः विद्यते किम् ? कीदृशः ? येन भरतावनितः भारतात् चरित्रं सच्चरित्रशिक्षा न शिक्षिता न शिक्षिता । तथैव जगति एतादृशः कोऽपि अन्य धर्मोऽपि नास्ति येन इतो भारतात् आत्मनः परतत्त्वं आत्मतत्त्वस्य अस्तित्वं न स्वीकृतं स्यात् मनुनाप्युक्तम्—'एतद्देशप्रसूतस्य सकाशात् अग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः' इति ।

पाश्चात्त्यकोविदवरैरसकृद्यदुक्तं 'जीवन्ति भौतिकदृशा प्रबला जगत्याम्' ।
तर्हि जगद्विजयिना पतितानि राष्ट्राण्यस्माभिरत्र सततं ध्रियतेऽबलैश्च ॥

पाश्चात्त्येत्यादि । यदि पाश्चात्त्यकोविदवरैः पाश्चात्त्यविद्वद्भिः असकृत् अनेकवारमुक्तमुद्घोषितम्— भौतिकदृशा भौतिकदृष्ट्या न तु आध्यात्मिकदृष्ट्येत्यर्थः । ये प्रबलाः बलवन्तः एव जगत्यां इतरजनानतिक्रम्य जीवन्ति इति यदुक्तं तर्हि जगद्विजयिना अलकसान्द्र घोरीत्यादीनां राष्ट्राणि साम्राज्यानि पतितानि नष्टानि अबलैः अतिदुर्बलैः अस्माभिश्चाद्यापि ध्रियते जीव्यते । तस्मात् आध्यात्मिकता एव चिरस्थायित्वस्य लक्षणं न केवलं भौतिकं बलम् अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुः । इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि इत्यत्रापि आध्यात्मिकज्ञानस्यैव प्राधान्यमुक्तम् ॥ १८ ॥

त्यागात्मिका जगति भारतवैजयन्ती गृह्णन्ति यां दृढतया जनिभूसुपुत्राः ।
उच्चैरुवाच पतनोन्मुखराष्ट्रजातं नीतिं समाचर दुरात्मतया तथालम् ॥१९॥

त्यागात्मिकेति । त्यागात्मिका त्यागस्वरूपा भारतस्य वैजयन्ती विजयपताका यां विजयपताकां जनिभूसुपुत्राः दृढतया स्वहस्तेषु गृह्णन्ति धारयन्ति पतनोन्मुखराष्ट्रजातं ह्रासोन्मुखानि राष्ट्राणि प्रति उच्चैः उच्चस्वरेण उवाच यत्तैर्न श्रुतम्–'नीतिं समाचर हे राष्ट्राणि! यूयम् सदाचारपराणि भवत तथा दुरात्मतया युष्माकं स्वभावदुष्टतया अलं पर्याप्तम्' अनीतिः दुष्टता च न विधेया इत्यर्थः ॥ १९ ॥

आध्यात्मिकानुभव एव भवत्समाजे रक्तप्रचार इव निर्मलजीवनस्य ।
ओजोन्वितो भवति यावदसौ प्रवाहः निष्कण्टको भवति तावदयस्य पन्थाः ॥

आध्यात्मिकेत्यादि । हे भारतीयाः! आध्यात्मिकः आत्मज्ञानस्वरूपोऽनुभवः भवतां समाजे निर्मलजीवनस्य पवित्रजीवनयात्रायाः रक्तप्रवाह इव रुधिराभिसरणसदृशम् । यावत्कालपर्यन्तं असौ आध्यात्मिकानुभवस्वरूपः प्रवाहः ओजोन्वितः बलवत्तरः भवति तावत् भवतां अयस्य कल्याणस्य पन्थाः मार्गः निष्कण्टको निर्विघ्नः भवति ॥ २० ॥

सामाजिकादिविविधेष्टतराः सुधारा आभ्यन्तरात्मबलसत्परिणामरूपाः ।
अन्तःप्रभा यदि पुनर्विकसन्मयूखा जायेत सुन्दरतमः सकलः समाजः ॥२१॥

सामाजिकादीति । सामाजिकसुधाराद्यः विविधा इष्टतरा अभिलषिततरा राष्ट्रकल्याणकराः सुधाराः आभ्यन्तरं अन्तर्विद्यमानं यदात्मबलं तस्य परिणामरूपाः 'फलस्वरूपा' एव । यदि आत्मपिकासमाधारीकृत्य सामाजिकसुधारादीनि कार्याणि क्रियन्ते चेत् ध्रुवं सफलीभविष्यन्ति । इयं अन्तःप्रभा आन्तरिकप्रकाशः यदि विकसन्तः प्रकाशमानाः मयूखा यस्याः एतादृशी भवेत् तर्हि सकलः समाजः राष्ट्रमित्यर्थः, सुन्दरतमः जायेत भविष्यति ॥ २१ ॥

साधारणेष्वथ पुनर्वनितासमाजे शिक्षासमः किमपरोऽस्ति परोपकारः ।
विद्याबलं प्रसृतमाशु यदा प्रतीच्यां लोकोन्नतिः समभवत्परितस्तदानीम् ॥२२॥

साधारणेष्विति । सर्वसाधारणजनेषु अथ पुनः विशेषतः वनितासमाजे स्त्रीसमाजे शिक्षासमः योग्यशिक्षादानं विहाय अन्यः कश्चित्परोपकारः विद्यते किम् । अतः भारतेऽपि शिक्षाप्रचारः आवश्यकः । पाश्चात्यदेशेष्वपि यदा इदं विद्याबलं सर्वत्र प्रसृतं तदैव तत्र परितः सर्वतोमुखी लोकोन्नतिः अभवत् राष्ट्रोन्नतिः स्त्रीशिक्षां विना न संभवेत् ॥ २२ ॥

या स्वावलम्बपदवीं न ददाति शिक्षा 'शिक्षा' भिधानमधिगन्तुमलं कथं सा ।
शिष्योऽधिशालमधुना विषयप्रकीर्णोऽजीर्णामयेन भवति क्रमशो विशीर्णः ॥

या स्वावलम्बेत्यादि । या शिक्षापद्धतिः विद्यार्थिभ्यः स्वावलम्बपदवीं स्वावलम्बनमार्गं न ददाति न दर्शयति सा शिक्षापद्धतिः 'शिक्षा' इत्यभिधानम् अधिगन्तुं प्राप्तुं कथमलं समर्था? अधुना वर्तमानकाले शिष्यः विद्यार्थी विषयेषु प्रकीर्ण इव नानाविषयेषु आवश्यकतायाः अपि अधिकभारभूतविषयेषु प्रकीर्णः विप्रकीर्णबुद्धिः अजीर्णामयेन अजीर्णरोगेण क्रमशः विशीर्णः नष्टारोग्यः भवति । तस्य कोमलबुद्धेरुपरि बहुविधविषयाणामेतावान् भारो जायते यस्य वोढुं सोढुं च न शक्नोति ॥ २३ ॥

संसारमंगलमसंभवमेव भाति शिक्षोन्नतो न भविता महिलागणश्चेत् ।
वैहायसाध्वनि खगा परिपुष्टदेहाश्छिन्नैकपक्षतिरया पथमुड्डयन्ते ॥ २४ ॥

संसारमंगलमिति । चेद्यदि अस्माकं महिलागण वनितासमाज शिक्षया योग्याध्यापनद्वारा उन्नत न चेत् भविता भविष्यति तर्हि संसारस्य जगत मंगल कल्याण असंभवमेव अशक्यमेव प्रतिभाति । परिपुष्टदेहा आरोग्ययुक्तशरीरा अपि खगा पक्षिण छिन्न नाशित एकतरा पक्षति एव पक्ष येषा छिन्नैकपक्षा इत्यर्थः, वैहायसाध्वनि आकाशमार्गे कथमुड्डयन्ते नैवोड्डयन्ते इत्यर्थः । स्त्रीपुरुषौ संसाररथस्य द्वे चक्रे यदि एकं चक्रं भग्नावस्थायां विद्यते चेत् रथस्य पुर सरणमवरुद्ध भवेत् दृष्टान्तालङ्कार ॥ २४ ॥

पाश्चात्यकृत्यनुकृतिर्यदि भारतस्य नारीजनेन विहिता त्यजता स्वलक्ष्यम् ।
ताभि सहैव भविताऽवनतिर्नराणा सर्वो भविष्यति पुनर्विफल प्रयत्न ॥२५॥

पाश्चात्येत्यादि । यदि भारतस्य नारीजनेन स्त्रीभि स्वलक्ष्य स्वजीवनस्य साध्य परित्यज्य केवल पाश्चात्यपत्नीनां अनुकृतिरनुकरणमेव विहिता कृता तर्हि न केवल अस्मद्वनितानामवनतिर्भविता भविष्यति अपि तु ताभि सह भारतीयस्त्रीभि सह अस्मन्नराणामपि अवनति पतनोन्मुखता भविष्यति तथा अस्माकं समाजसुधारादिस्वरूप सकलोऽपि प्रयत्न विफल भविष्यति ॥ २५ ॥

स्वोपज्ञमार्गगमना महिला स्वकीया कुर्वन्तु यत्नकठिना सरला समस्या ।
तासा समुन्नतिकृते न परे यतन्ता किं भारतीयललना न पुन समर्था ॥२६॥

स्वोपज्ञेति । अस्माकं महिला स्वकीया आत्मीया यत्नकठिना अत्यन्तदुष्करा अपि समस्या प्रश्ना स्वोपज्ञमार्गगमना स्वबुद्धिप्रभावनिश्चितमार्गेणैव गच्छन्त्य सत्य सरला अनायासेन सफलीकर्तव्या । भारते तासां वनितानां समुन्नतिकृते परे अन्यमनुष्या न यतन्तां अपि तु ललना एव तासां समुन्नतिकार्यं कुर्वन्तु एतस्मिन्नुन्नतिकार्ये भारतीयललना समर्था न सन्ति किमु । अवश्य ता योग्या सन्ति ता एव स्वयोग्यमार्गान्वेषण कुर्युः ॥ २६ ॥

नारीकृते किमपि तै कुशलं कृतं किं निन्दन्ति ता यदनिशं पुरुषा वृथैव ।
क्षिप्ता परन्तु ललना स्मृतिकारवाक्यै स्वातन्त्र्यहीनवरणा नरकस्य पन्था ॥

नारीकृते इति । तै भारतीयनरै नारीकृते अस्मद्वनितार्थं किमपि कुशलं कल्याणकर विहित किं न किमपीत्यर्थः । यद्यस्मात् पुरुषा अनिशं निरन्तरं वृथैव ता वनिता निन्दन्ति दोषाविष्करणं विदधति । अथ च स्मृतिकारवाक्यै कैश्चिदस्मत्स्मृतिलेखकै 'न स्त्री स्वातन्त्र्यमर्हति' 'नारीतु नरकस्य पन्था' इत्यादि घृणापूर्णशब्दै क्षिप्ता निन्दाविषयीकृता ॥ २७ ॥

नृणा समुन्नतिकथा भविता वृथैव विद्यां विनैव जननी यदि साद्यशक्ति ।
इत्येव हेतुरधुना किल रामकृष्णैर्देवी कृताऽथ महिता सहधर्मिणी स्वा ॥२८॥

नृणामिति । भारतीयवनिता जननीस्वरूपा आद्यशक्तिस्वरूपा यदि विद्यां विनैव अशिक्षिता एव रक्षिता तर्हि केवल मनुष्याणां समुन्नतिकथा सुधारवार्ता वृथैव निष्फलैव

अनेनैव हेतुना श्रीरामकृष्णपरमहंसैः स्वा स्वकीया सहधर्मिणी शारदामाता देवी कृता षोडशीपूजने देवीव मता महिता पूजिता च ॥ २८ ॥

सत्कर्मपुञ्जनिषधेश्वरधर्मपत्नी सीता रघूद्वहसती जनकात्मजा च ।
मद्रेश्वरस्य दुहिता यमतोऽप्यभीता आदर्शरूपललनाः स्मर भारतीयाः ॥२९॥

सत्कर्मेति । सत्कर्मणां पुण्यकार्याणां पुञ्जीभूता राशिस्वरूपा निषधेश्वरधर्मपत्नी निषधेश्वरस्य नलस्य नृपतेः धर्मपत्नी दमयन्ती, रघूद्वहस्य श्रीदाशरथे रामस्य सती जनकात्मजा जानकी सीता, तथा मद्रेश्वरस्य मद्रदेशाधिपतेः दुहिता सावित्री या यमतः अपि कृतान्तादपि अभीता निर्भीका एता भारतीया आदर्शललनाः स्मर भारतीयनारीभिः एतासामेवानुकरणं विधेयं न तु शिक्षिताभिः पाश्चात्त्यानुकरणासक्ताभिर्भवितव्यम् । वैदिकसमये तु वाक् आम्भृणी, घोषा, अपाला, गार्गी इत्यादयो ब्रह्मवादिन्यः विदुषीस्त्रियः अभवन् काभिश्चित् वैदिकसूक्तान्यपि लिखितानि तासां वैदिककालनारीणां पवित्रं चरित्रं स्मर्तव्यम् ॥ २९ ॥

चेदस्मदीयपरिशुद्धतरे समाजे सीतासमा निरुपमा महिला अभूवन् ।
जानाति किं न वनिताऽपचितिं स कर्तुं यः सद्गुणी भवति सोऽन्यगुणानवैति ॥

चेदस्मदीति । यदि अस्मदीये निर्मले भारतीयसमाजे सीतासदृश्यः निरुपमा अद्वितीया महिला अभूवन् स उन्नततमः भारतीयसमाजः वनितापचितिं वनितानां संमानं विधातुं अवश्यमेव जानाति । अत्रार्थान्तरन्यासेनाह—यः स्वयं सद्गुणी सद्गुणयुतः भवति सः अन्यसद्गुणानां मूल्यमपि जानाति मनुनाप्युक्तम्—'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' इति ॥ ३० ॥

आसन् पुरात्र सकला अधिकारवत्यो ज्ञानार्जनेऽद्य वनिताः किमु वञ्चिताः स्युः ।
यद्वत्कृता द्विजगणैर्बहिरन्त्यवर्णा तद्वत् स्त्रियोऽपि हृतसर्वबला वृथैव ॥३१॥

आसन्निति । पुराकाले सकला अपि भारतीयललनाः ज्ञानार्जने ज्ञानलाभे अधिकारवत्यः अधिकृता आसन् 'अयज्ञीयो वै पुरुषो योऽपत्नीकः' इत्युक्तत्वात् ता अपि वेदाध्ययने (उपनयनपूर्वकं) अधिकृता आसन् रामराज्याभिषेकसमये कौसल्याऽपि 'हुताशनं हावयन्ती' अदृश्यत । रामः सीतारहितः यज्ञकर्मणि सीतायाः सुवर्णप्रतिमां स्वान्तिके स्थापयित्वा एव यज्ञकर्मणि प्रवृत्तः । सर्वात्मभवसुक्ता वाक् आम्भृणी वैदिकसूक्तकर्त्री मन्त्रद्रष्ट्री बभूव परमद्यत्वे वनिता ज्ञानप्राप्तिविषये कथं वञ्चिताः छिन्नाधिकाराः कृताः यद्वद् द्विजगणैः ब्राह्मणक्षत्रियवैश्यैः अन्त्यवर्णाः शूद्राः बहिष्कृताः आसन् तथैव अत्रत्यस्त्रियोऽपि हृतं सर्वं बलं अधिकारः यासां एतादृशाः वृथैव निष्प्रयोजनमेव विहिताः ॥ ३१ ॥

'स्त्री ज्ञानभक्त्युभयलब्ध्यधिकारशून्या' शास्त्रे कचिन्न विहितं वचनं तथापि ।
सीतापदाङ्कसरणीमनुसृत्य शुद्धां सात्मोन्नतेरनुसरेत् सुविशुद्धमार्गम् ॥३२॥

स्त्री ज्ञानेत्यादि । भारतीयस्त्रीजातिः तथापि यद्यपि अधिकारवञ्चिताः ताः ज्ञानं अध्यात्मज्ञानं भक्तिश्च एतयोरुभयोर्मार्गयोः लब्ध्यर्थमधिकारशून्याः सन्ति इत्याकारकं वचनं शास्त्रे क्वचिदपि न विहितम् । अधुना ताभिः किं कर्तव्यम् ? शुद्धां पवित्रां सीतापदाङ्कसरणीं सीतादिभिरनुसृतपद्धतिं स्वीकृत्य सा स्त्री आत्मोन्नतेः सुविशुद्धमार्गं पवित्रमुपायमनुसरेत् ॥ ३२ ॥

जातान्यजातिषु जगत्यमितोन्नतिर्या
सा योषितां किल सुयोग्यपदस्य लाभात् ।
याधोगतिश्चिरमभूदिह भारतेऽथ
सा शक्तिरूपमहिलासु निरादरेण ॥ ३३ ॥

जातेति । जगति संसारे अन्यजातिषु अन्यराष्ट्रेषु सा अमिता अत्यधिका उन्नतिः समृद्धिर्जाता सोन्नतिर्योषितां वनितानां सुयोग्यपदस्य योग्यस्थानस्य लाभादेव जाता या च अस्मिन्भारते अधोगतिः अवनतिः, सावनतिः महाशक्तिस्वरूपमहिलासु निरादरेणैव जाता किल निश्चयेन ॥ ३३ ॥

भ्रातस्त्वमेहि बलवाननुभूय 'सोऽहं' भस्मीभविष्यति मनोमलिनत्वमस्मात् ।
जागर्ति शक्तिरनिशं त्वयि या प्रसुप्ता त्वं च प्रचण्डबलमूर्तिरिव स्वयं स्याः ॥

भ्रातरिति । हे भ्रातः सोऽहं 'अहं ब्रह्म अस्मि' इत्यपरोक्षानुभवमधिगम्य त्वं बलवान् एधि । अस्मात् एतादृशानुभवादेव मनोमलिनत्वं मनसि विद्यमानः अन्धकारः भस्मीभविष्यति पूर्णतया विनश्यति । इह तव मनसि या प्रसुप्ता सुप्तावस्थायां या शक्तिरस्ति सा जागर्ति प्रदीप्ता भविष्यति अस्यां शक्तौ च प्रदीप्तायां त्वं प्रचण्डबलमूर्तिरिव मूर्तिमद् बलमिव स्याः भवेः ॥ ३४ ॥

आचारवान् भव सुहृद्बलवान्कृतान्तस्याक्रान्ततोऽपि गतभीरमलान्तरस्त्वम् ।
व्यर्थैव धार्मिकविवादपरम्परा ते दुष्कर्मजातमिति कातरकार्यमेतत् ॥ ३५ ॥

आचारवानिति । हे सुहृद् ! त्वं आचारवान् सदाचारी शुद्धाचरणः भव तथा कृतान्तस्य यमराजस्याक्रान्ततः अपि गतभीः साध्वसशून्यः अमलान्तरश्च निर्मलान्तःकरणश्च भव । ते तव धार्मिकविवादपरम्परा धर्मविषयककलहाः व्यर्थैव निष्प्रयोजना । त्वया विधीयमानं दुष्कर्मजातं पापाचरणादिकं च कातरकार्यजातम् आततायिस्वरूपम् अतः एतादृशं कार्यं परिहर ॥ ३५ ॥

जगति भारतधर्मस्य किं कर्तव्यमित्याह—

'अध्यात्मतत्त्वविभवस्य भुवि प्रचारो नित्यं विधेय' इति भारतधर्मकार्यम् ।
यक्नीक-हूण-शक-मोगल-तुर्कयानैः सम्पीडितं भवदपि स्थिरसंविदास्ते ॥३६॥

अध्यात्मेति । 'अध्यात्मतत्त्व आत्मज्ञानरहस्यमेव ऐश्वर्यं तस्य भुवि जगति नित्यं प्रचारः विधेयः कर्तव्यः' इत्येकमेव भारतीयसनातनधर्मस्य कार्यम् कर्तव्यम् कीदृशं भारतम् ? यद् यक्नीकानां, हूणानां, मोगलानां, तुर्काणां च यानैः आक्रमणैः सम्पीडितं भवदपि पीडाविषयीकृतमपि स्थिरा संवित् ज्ञानं यस्यैतादृशमद्यावधि आस्ते भविष्यति च ॥ ३६ ॥

भक्तिर्निरन्तरमसौ मनुजान्तरस्था या काम-काञ्चनपिधानवशाददृश्या ।
दूरीकुरु त्वमिदमावरणं क्षणेन स्वान्तःस्थिताऽथ भवति स्वयमेव दृश्या ॥३७॥

भक्तिरिति । या ईश्वरभक्तिर्नाम ईश्वरविषये आस्तिक्यबुद्धिर्नाम कोऽपि गुणः वर्तते सा निरन्तरं मनुजस्य अन्तरे अन्तःकरणे स्थितैव विद्यते परं या कामकाञ्चनपिधानवशात् । विषयोपभोगधनसम्पत्स्वरूपावरणवशात् केवलं अदृश्या न दृग्गोचरीभूता । इदं आवरणं विषयविचारात्मकं त्वं दूरीकुरु अपसारय फलतः क्षणेन स्वान्तःस्थिता श्रद्धा स्वयमेव प्रकटीभविष्यति ॥ ३७ ॥

अधुनाध्यात्ममुपदिशति—

ज्ञानं परं प्रतिगृहं प्रविशेदितीत्थं चक्रं प्रवर्तयितुमिच्छति मानसं मे ।
येन स्त्रियश्च पुरुषाश्च जगत्यमुष्मिन् स्वाभीष्टनिर्णयविधिं परिभावयन्तु ॥

ज्ञानमिति । विवेकानन्दस्य मानसं मनः परं सर्वश्रेष्ठं अध्यात्मज्ञानं प्रतिगृहं गृहे गृहे प्रविशेत् प्रसरेत् इत्थं एतादृशं नवीनधर्मचक्रं प्रवर्तयितुमिच्छति । येन ज्ञानप्रचारेण अमुष्मिन् जगति स्त्रियः पुरुषाश्च स्वाभीष्टनिर्णयविधिं स्वान्तिमलक्ष्यनिर्णयविषये परिभावयन्तु विचारं कुर्वन्तु ॥ ३८ ॥

त्वत्सम्मुखो विविधरूपधरो य ईशस्तं संत्यजन् नु कुह मार्गयसे वृथैव ।
यः स्नेहतत्परमनाः खलु जीववृन्दे जानाति सेवितुमसावनिशं परेशम् ॥३९॥

त्वत्सम्मुख इति । त्वत्सम्मुखः प्रत्यक्षरूपेण तव पुरतः विविधरूपधरः विभिन्नस्वरूपेषु प्रकटीभवन् 'स ऐक्षत बहु स्यां प्रजायेय' इति श्रुतेः । यः ईशः जनताजनार्दनस्वरूपः विद्यते तमीश्वरं सन्त्यज्य वृथैव व्यर्थमेव कुह कुत्रान्यत्र स्थाने मृगयसे तदन्वेषणपरो भवसि । यः जीववृन्दरूपिणि परमेश्वरे स्नेहतत्परमना विद्यते स एव अनिशं परेशं सेवितुं यथार्थतया पूजयितुं जानाति ॥ ३९ ॥

दिक्कालकार्यकरणादिकमेव सर्वं जानीहि मित्र ! बहिरावरणं न सत्यम् ।
अस्मीन्द्रियादपि परो मनसो विचाराद् द्रष्टाऽखिलस्य जगतः खलु साक्षिरूपः ॥

दिक्कालेति । हे मित्र ! दिक् आकाशविभागस्वरूपा पूर्वपश्चिमाद्याकारा कालः अनाद्यन्तः समयः, कार्यं सृष्टिस्वरूपं करणं महत्-प्रकृति-परमाण्वादिरूपं एतत्सर्वमेव केवलं मूलतत्त्वाच्छादनहेतुभूतं जानीहि न सत्यं न यथार्थम् । 'अहं इन्द्रियात् ज्ञानेन्द्रियेभ्यः कर्मेन्द्रियेभ्यश्च परः अस्मि मनसः विचारादपि परः अस्मि' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः अखिलस्य सम्पूर्णस्य जगतः साक्षिस्वरूपः द्रष्टा दर्शकमात्रः न तु तेन सह केनापि प्रकारेण सम्बन्धवान् ॥ ४० ॥

द्वैतं बहुत्वमसदस्ति सदेकमेव
मय्येव विश्वमखिलं ह्यहमेव सर्वम् ।
द्वेषो न चास्ति मयि नापि विभिन्नभावो
मत्तो यतोऽस्मि न परं प्रियतामयोऽहम् ॥ ४१ ॥

द्वैतमिति । द्वैतम् द्वित्वं सगुणं बहुत्वं सांख्यमते उभयमपि असत्स्वरूपमेव । किं तर्हि सत्यम् ? सत्यं तु एकमेवाद्वितीयम् । सर्वमपि आपाततः भिन्नतया दृश्यमानं जगत् मय्येव ममान्तरे एव विलीनमिव यतः अहमेव सर्वम् अनेकरूपेण दृश्यमानः संसारः । मयि ममान्तरे द्वेषः अन्यैः सह वैरभावः अथ च 'अहमस्माद्भिन्नः' इत्याकारकः भेदभावोऽपि न विद्यते 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' इति श्रुतेः यतः मत्तः परं किमपि वस्तु एव न विद्यते तर्हि द्वेषादिकं कुत्र कार्यम् ? प्रियतामयोऽहम् अपरं च यद्यहं प्रेममयः न तत्र द्वेषादिकभावनायाः सम्भवः ॥ ४१ ॥

स्वप्नं त्यजेस्त्वमिह बन्धनमुक्तिहेतो-
र्गूढं निबोध तव नास्ति भयावकाशः ।
छाया ममैव किमु साध्वसकारणं स्यात्
सोऽहं न चान्यदिति चिन्तय नित्यमेव ॥ ४२ ॥

स्वप्नमिति। त्वं इह भौतिकजगति बन्धनमुक्तिहेतोः मुक्तिलाभार्थं जगद्दर्शनामक मृगजलसदृशं अज्ञानरूपं स्वप्नं त्यज परिहर गूढं रहस्यमय स्वस्वरूपं निबोध जानीहि भयस्य भीतेः कोऽपि अवकाशः स्थानं न विद्यते। अतः त्वं नित्यमेव इदं चिन्तय किम्? मम साध्वसकारणं ममैव छाया नापरं किंचित् छाया तु न किमपि वस्तुतत्त्वम्। अहं सः परमात्मस्वरूपः न किञ्चिदन्यः इत्यमेव नित्यं परिभावय ॥ ४२ ॥

जगत्केवलं अज्ञानपरिणामः इत्याह—

भूस्वर्गलोकनिरयान् सदसच्च चित्तं चित्रं सदा रचयति नैकविचारसूत्रैः ।
विस्तार्य कञ्चुकमिव स्वमसत्यजालं तेषामुपर्यथ च तानि दृढं गृहीत्वा ॥४३॥

भूस्वर्गेत्यादि। अस्माकं चित्तमेव भूः मृत्युलोकः स्वर्गः लोकः निरयान् इह कृतपापकर्मणां अमुत्रफलभोगार्थं कल्पितः निरयः नरकः, तान् 'सत् असत्' इत्यादि सकलमेव विचित्रमद्भुतं अविद्यमानमपि नैकविचारसूत्रैः कल्पनातन्तुभिः यथा तन्तुवायः वस्त्रं रचयति तद्वत् विचित्रमपि काल्पनिकं अद्भुतं जगदुत्पादयति किं कृत्वा तेषां भूस्वर्गादीनां उपरि-परन्तु तानि दृढमवलम्ब्य तदस्तित्वे स विश्वासः स्व स्वकीय नानाभावनादिरूप असत्यजालं विस्तार्य इदं विचित्रं जगत् विस्तारयति ॥ ४३ ॥

पूर्वं दिवाकरनिशाकरजन्मतोऽपि प्राग्धूमकेतुगणतारकवृन्दसूतेः ।
दिक्कालयोरपि यदा न जनिस्तदानीमासं तदास्मि भविता नियतं पुरस्तात् ॥

पूर्वमिति। दिवाकरस्य सूर्यस्य जन्मतः अपि पूर्वं निशाकरस्य चन्द्रमसोऽपि जन्मनः पूर्वं, धूमकेतूनां गणः समूहः पुच्छतारकासमूहः, अन्यतारकाणां वृन्दं, एतस्य सर्वस्य सूतेः जन्मनः प्राक् तदा यदा यस्मिन्समये दिक् आकाशविभागात्मकपूर्वादिदिशा कालः समयश्च तयोरुभयोरपि यदा जनिः उत्पत्तिः न आसीत् तदा अहं अनाद्यनन्तामलस्वरूपः आसम् वर्तमाने अस्मि पुरस्तात् भविष्यति काले नियतं निश्चयेन भविता भविष्यामि च। त्रिकालाबाधितसत्तात्मकोऽहमित्यर्थः ॥ ४४ ॥

सर्वमपि उत्पत्तिशीलं कारणाधीनमित्याह—

भूः शोभना किरणभास्वरभास्करोऽपि
चन्द्रः प्रभासमधुरो वियदुज्ज्वलं च ।
हेतोरधीनमखिलं विचरत्यभीक्ष्णं
यद्येन जीवति पुनर्विलयं प्रयाति ॥ ४५ ॥

भूः शोभनेति। शोभना प्रकृतिसौन्दर्यमयी इयं भूः 'पृथिवी' किरणैः रश्मिजालैः भास्वरः प्रकाशमानः भास्करः अपि प्रकाशेन प्रभया मधुरः चारुदर्शनः चन्द्रः हिमांशुः उज्ज्वलं ग्रहनक्षत्रादिदीप्तिपूर्णं वियत् आकाशश्च एतत्सर्वमपि हेतोः अव्ययात्मकस्य कारणस्याधीनं पुनः पुनः उत्पद्यमानं सत् गमनागमने कुर्वदिव दृश्यते। एतदुत्पत्तिशीलं जगत् यद्येन हेतुभूतेन जीवति कञ्चित्कालपर्यन्तमस्तीति भाति पुनः च, सर्वं तस्मिन्नेवानादितत्त्वे विलयं अदर्शनं प्रयाति गच्छति ॥ ४५ ॥

देवोऽपि नास्मि मनुजो न पशुस्तथाहं
नारी न चास्मि न पुमान् न मनः शरीरम् ।
शास्त्राणि विस्मयपराणि मम स्वरूपं
नालं प्रकाशयितुमद्य यतोऽस्मि सोऽहम् ॥ ४६ ॥

देवोऽपीति। अनाद्यनन्तः नित्यशुद्धबुद्धमुक्तः स्वगतसजातीयविजातीयभेदशून्यः एकमेवाद्वितीयस्वरूपोऽहं न देवः न मनुजः न पशुः न नारी न पुमान् न मनुष्यः न मनः इदमिन्द्रियाणामप्युपलक्षणम् न चापि शरीरं पाञ्चभौतिकं इमानि सर्वाण्यपि वस्तूनि सोपाधिकत्वात् क्षणिकान्येव कथं तानि मत्स्वरूपं भवितुमर्हन्ति? विस्मयपराणि अध्येतॄणां मनस्सु आश्चर्यमुत्पादयितुं समर्थानि शास्त्राणि मम यथार्थं स्वरूपं प्रकाशयितुं स्पष्टीकर्तुमसमर्थानि। श्रुतिरपि यदि 'नेति' 'नेति' वचनपरा तर्हि कथं शास्त्राणि मम स्वरूपं वर्णयितुमलम्? यतः अहं 'सः' अस्मि यः अनिर्वचनीयस्वरूपः॥ ४६॥

युग्मेनाह—

चेत्ताडितोऽपि भुजगः कुरुते फणां स्वां
वह्निर्ज्वलत्यतितरां चलितेन्धनः सन्।
व्योमान्तरं च भवति प्रतिनादयुक्तं
मर्माहताकुपितकेसरिगर्जितेन॥ ४७॥

चेत्ताडितोऽपीति। ताडितः काष्ठलोष्ठादिभिरित्यर्थः। भुजगः सर्पः अपि स्वां फणां कुरुते क्रोधितः 'सन्' फणां विस्तारयति। चलितेन्धनः चलितः ज्वलत्काष्ठः वह्निरपि अतितरां ज्वलति अधिकाधिकज्वालामालाकुलो भवति। मर्माहतस्य मर्मणि शरीरकोमलभागे प्राप्ताघातस्य अत एव आकुपितस्य क्रोधितस्य केसरिणः सिंहस्य गर्जितेन व्योमान्तरं आकाशमध्यं प्रतिनादयुक्तं प्रतिध्वनियुक्तं भवति॥ ४७॥

विद्युद्भिदारितहृदम्बुदराशिरम्भः-
पूरेण पूरितमलं जगतीं विधत्ते।
पर्याकुलं भवति चेन्नितरां तवान्त-
स्तत्त्वं ध्रुवं प्रकटयन्ति महन्महान्तः॥ ४८॥

विद्युदिति। विद्युद्भिः तडिद्भिः विदारितं आस्फालितं हृद् आन्तरं यस्याः एतादृशी अम्बुदराजिः मेघपंक्तिः स्वशरीरनिर्गतेन अम्भःपूरेण जलाप्लवेन जगतीं संसारं अलं पर्याप्तं पूरितजलमयं विधत्ते करोति। तथैव यदि तत्त्वजिज्ञासोस्तव अन्तः मनः अति व्याकुलं भवति तर्हि महान्तः ब्रह्मनिष्ठाः ध्रुवं निश्चयेन महत् तत्त्वं रहस्यं तव पुरतः प्रकटं करिष्यन्ति॥ ४८॥

पुनश्च युग्मेनाह—

म्लानं मनो भवतु मन्दतरा च दृष्टिः
प्रेम प्रतारकमथाफलमस्तु सख्यम्।
आपच्छतं क्षिपतु दैवगतिः स्वकीयं
सान्द्रं तमोऽप्यवरुणद्धु समृद्धिमार्गम्॥ ४९॥

म्लानमिति। तव मनः म्लानं भवतु विविधविचारपरम्पराभिः क्लान्तं भवेन्नाम, दृष्टिरपि नयनमपि दूरदर्शनासमर्था मन्दतरा भवत्वपि, प्रेम प्रतारकं वञ्चनापूर्णंभवतु अथ सख्यं मैत्री अफलं फलशून्यं भवतु, दैवगतिः स्वकीयं स्वनिर्मितं आपदां शतं शतशः आपदः तवोपरि क्षिपतु नाम तथा सान्द्रं निविडं तमः अन्धकारः तव समृद्धिमार्गं समुन्नतिपथं अवरुणद्धु नाम प्रत्यूहपूर्णं करोतु नाम॥ ४९॥

कोपाहितभ्रुकुटिभङ्गपदं विहन्तुं
कुर्यादपि प्रकृतिरद्य न विस्मरेस्त्वम् ।
दिव्योऽसि याहि सुहृदग्रत एव नित्यं
नो वामदक्षिणदिशो पुरतस्तु लक्ष्यम् ॥ ५० ॥

कोपाहितेत्यादि । अद्य प्रकृतिः पञ्चभूतानां मूलकारणं त्वां विहन्तुं नाशयितुं कोपेन क्रोधेन आहितम् उत्पादितं कृतं यः भ्रुकुटिभङ्गः भ्रूतिर्यक्कृतिः तस्य चिह्नं कुर्यादपि तथोपरि प्रकृतिकोपः भवेदपि । तत्सर्वमपि उपेक्ष्य त्वं न विस्मरेः यत् त्वं स्वरूपतः दिव्यः असि । अतः हे सुहृद् त्वं नित्यं अग्रतः एव पुरतः एव याहि गच्छ न वामदिशान नापि दक्षिणदिशातः । अपितु नित्यं पुरस्तादेव प्रयाहि यतः तव लक्ष्यं अग्रतः एव वर्तते न वामदक्षिणयोः ॥ ५० ॥

विकिरतितरां कोऽस्मिल्लोके प्रकाशपरम्परा
गतयुगगतो धर्मस्त्यागः पुनः समुदेष्यति ।
जगति सदया स्वात्मोत्सर्गप्रसक्तहृदो ध्रुवं
बहुजनहितश्रद्धा बुद्धा शतं प्रभवन्त्यपि ॥ ५१ ॥

विकिरतितरामिति । अस्मिन्नज्ञानतिमिरावृते लोके जगति को नाम प्रकाशपरम्परां ज्ञानज्योतिःसन्ततिं विकिरति कीर्णां विधत्ते । गतयुगगतः अतीते युगे यः धर्मः आत्मस्वरूपज्ञानात्मकः, त्यागः निःस्वार्थसेवारूपः च आसीत् स धर्मः ■ त्यागश्च अस्मिन् वर्तमाने युगे पुनः उदयमेष्यति । तथा जगति संसारे सदयाः दयालवः स्वात्मोत्सर्गप्रसक्तहृदः जगत्कल्याणार्थं आत्मसमर्पणतत्पराः बहुजनहितश्रद्धाः निखिलजगत्कल्याणकाङ्क्षिणः बुद्धाः बुद्धसदृशाः महात्मानः शतं शतशः आवश्यकतानुसारं प्रभवन्ति उत्पत्स्यन्ते । हरिणीवृत्तम् ॥ ५१ ॥

विमुक्त्यै देशस्य प्रयतनपरोऽथास्य जगतो
भव त्वय्येवास्ते शृणु सकलसेवाभरधृतिः ।
उदेत्वन्तर्ज्योतिः सततमधिजीवात्मनिहितं
रुचिर्वेदान्तस्य प्रतिगृहमिदानीं प्रविशतु ॥५२॥

विमुक्त्या इति । आदौ देशस्य स्वमातृभूमेः विमुक्त्यै स्वातन्त्र्यसिद्ध्ये अथ अनन्तरं च अस्याखिलस्य जगतः विमुक्त्यै आध्यात्मिकस्वातन्त्र्यसिद्ध्ये प्रयतनपरः यत्नशीलः भव सकलानां सर्वेषां सेवाभावभरस्य शिवज्ञानेन जीवसेवाभारधारणकार्यं त्वयि एव आस्ते इति शृणु अधिजीवात्मनिहितं मनुष्यमात्रे अन्तर्निहितं ज्योतिः प्रकाशः उदेतु उदयमेतु तथा इदानीं वेदान्तस्य रुचिः प्रकाशः ज्ञानप्रकाश इत्यर्थः । प्रतिगृहं सर्वत्र प्रविशतु प्रविष्टा भवतु । शिखरिणीवृत्तम् ॥ ५२ ॥

आघातप्रतिघातसंकटशतैरुद्धतसमाजप्रथा
चाराणां ततिभिश्च संकुलमभूदाक्रान्तमेत्यारिभिः ।
आस्ते प्राणबलान्वितं तदपि यत्तुङ्गाद्रिशृङ्गोपमं
मन्ये भारतजीवनं खलु जगत्याद्यन्तशून्यं ध्रुवम् ॥ ५३ ॥

आघातेत्यादि । भारतजीवनं भारतीयजनानां जीवितं जगति आदिशून्यं अन्तशून्यं अनाद्यनन्तं विद्यते ध्रुवम् निश्चयेन इति मन्ये कथम् ? आघातप्रतिघातैः अनेकशः

बाह्यदेशीयलोकैः शतशः कृताक्रमणैः, उद्यन्तीभिः नवनवाभिः आवश्यकताशून्याभिः समाजप्रथानां सामाजिकरीतीनां आचाराणां च ततिभिः परम्पराभिः तथा अरिभिः शत्रुभिः एत्य आगत्य आक्रान्तं संकुलं एव यद्यपि। अनेकविघ्नैः व्याकुलमभूत् तदापि तथापि तुङ्गाद्रिशृङ्गोपमं अत्युच्चपर्वतशिखरोपमं अस्मद्भारतजीवनं प्राणबलान्वितं शक्तियुक्तं च आस्ते ॥ ५२ ॥

न ज्ञातो ग्रीसदेशो भवदवनितले रोमवार्तापि नासीद्
यूरोपस्थाश्च लोका गहनवनगता दीर्घमासन्नसभ्याः ।
ध्वान्तच्छन्नेतिहासं जगदिदमखिलं दुर्बला किंवदन्ती
तत्रासीदुच्चशैलस्थिरतरवसतिः संस्कृतिर्भारतीया ॥ ५४ ॥

न ज्ञात इति। ग्रीसदेशः अवनितले अज्ञात आसीत्, रोमसाम्राज्यस्य वार्तापि नासीत्, ख्रिस्तपूर्वं सप्तमशताब्द्यां रोमसाम्राज्यस्य स्थापना जाता तत्पूर्वं रोमस्य अस्तित्वमपि नासीत्, यूरोपस्था जनाः यूरोपवासिनश्च गहनवनगताः केवलमरण्यवासिनः दीर्घकालपर्यन्तमसभ्याः असंस्कृताश्चासन् भारतवर्जम् अखिलं जगत् ध्वान्तच्छन्नेतिहासं अन्धकारावृतेतिहासघटनापूर्णमासीत्, किं बहुना किंवदन्ती जनश्रुतिरपि पूर्णतया दुर्बला दृढाधाररहिताभूत् तस्मिन्नतिप्राचीनेऽपि समये भारतीया संस्कृतिः उच्चशैलस्थिरतरवसतिरिव उन्नतेरत्युच्चशिखरमारूढा अभूत् ॥ ५४ ॥

महामहिममण्डिता भवति भारती भूः पुरा
समुज्ज्वलतरा ध्रुवं स समयोऽचिरादेष्यति ।
गृहीतजनुषोऽत्र संश्रुतमहर्षयः शान्तिदाः
समग्रजगतो जनान् सुपथगान् विधास्यन्ति ते ॥ ५५ ॥

महामहिमेति। भारती भूः पुनरपि महामहिममण्डिता लब्धपुरातनगौरवा पुरा भवति भविष्यति। तथा समुज्ज्वलतरा समृद्धिशालिनी च भविष्यति। एतादृशः समृद्धिदर्शनस्य समयः अचिरादेव एष्यति आगमिष्यति। अत्र भारते गृहीतंजनुः यैः एतादृशाः संश्रुतमहर्षयः प्रसिद्धा ऋषयः शान्तिदायकाः सन्तः समग्रजगतो जनान् भूतलनिवासिनः सुपथगान् सन्मार्गगामिनः विधास्यन्ति करिष्यन्ति। यथा पुराकाले अत्रत्या महर्षयः जगति ज्ञानप्रसारमकुर्वन् तथा वर्तमानेऽपि अचिरादेवास्मिन् भारते जनाः महर्षयः पूर्ववत् धर्मप्रचारकार्यं विधास्यन्ति ॥ ५५ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
चम्पूकाव्यलसद्विशेषरुचिनाऽपूर्वेऽपि चर्व्ये महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गो गतः षोडशः ॥५६॥

इति श्रीस्वामिविवेकानन्दचरिते महाकाव्ये उपदेशात्मकः षोडशः सर्गः समाप्तः ॥

लोकमिति। लोकमित्यादिधर्म—प्रधानाश्रये—इत्यन्तं पूर्ववत् चम्पूकाव्यलसद्विशेषरुचिना 'कादम्बरी चम्पू' इत्याख्यचम्पूकाव्यरचनाकृता त्र्यम्बकसूरिणा अपूर्वेऽस्मिन्पुनः पुनः चर्व्ये पठनीये महाकाव्ये षोडशः सर्गः समाप्तः ॥ ५६ ॥

इति विवेकानन्दमहाकाव्यटीकायां 'विवेकदीपाख्यायां' षोडशः सर्गः समाप्तः ॥

## अथ सप्तदशः सर्गः १७

कामं महाश्रमकृते सफलश्रमोऽयं
स्वामी पुनः कतिपयैर्यतिभिः समेतः ।
प्रत्यक्सखाध्युषितचारुतमाल्मोडां
प्राप्तो नगेन्द्रहृदयं स्वयमाश्रयार्थम् ॥ १ ॥

काममिति । महाश्रमकृते वेदान्तस्थमठस्थापनार्थं कामं यथेच्छमिच्छानुसारं सफलः परिश्रमः यस्यैतादृशः सन् स्वामी विवेकानन्दः कतिपयैः अल्पसंख्याकैः यतिभिः समेतः युक्तः प्रत्यक्सखैः पाश्चात्यसखैः अध्युषितं निवासीकृतं चारुतमं अल्मोडाख्यस्थानं नगेन्द्र-हृदयमिव हिमाचलस्य मानसमिव स्थितं स्वयमाश्रयार्थं प्राप्तः । वसन्ततिलकं वृत्तम् ॥१॥

मुमुदे घनराजिराजितं हिमवन्तं पुनरेत्य संयमी ।
इह तं च सखेव नित्यशोऽनुययौ भारतभद्रभावना ॥ २ ॥

मुमुद इति । संयमी यतिः घनराजिभिः अरण्यपंक्तिभिः राजितं भूषितं हिमवन्तं हिमाचलपर्वतं पुनः द्वितीयवारं एत्य आगत्य मुमुदे आनन्दितः अभवत् । इह आयातवन्तं तं यतिं नित्यशः अनिशं भारतभद्रभावनापि भारतकल्याणाभिलाषोऽपि सखेव सुहृदिव अनुययौ अनुगतवती । यत्र कुत्रापि स गतः भारतकल्याणभावनापि तेन सहैव निरन्तर-मासीत् । वैतालीयं छन्दः, 'विषमे ससजा गसंयुता, सभरा, अन्तगलौ समे रगौ' ॥ २ ॥

स्मृतवांस्तदखण्डभारतं परशास्त्या चिरदास्यदण्डितम् ।
अतिदुर्गतकोटिमण्डितं बहुजातिप्रतिजातिखण्डितम् ॥ ३ ॥

स्मृतवानिति । स यतिः तत् पुराकाले विशालं अखण्डभारतं ( परमधुना खण्डितं ) परशास्त्या विदेशीयशासकैः चिरकालपर्यन्तदास्येन परतन्त्रतया दण्डितं दमनविषयी-कृतम् अतिदुर्गता अत्यन्तदरिद्राणां या कोटयः ताभिः मण्डितं कोटिशः दरिद्रजनैः पूर्णम्, तथा अनेकजात्युपजातिभेदैः समाजव्यवस्थाविषये खण्डितम् शकलीकृतं एतादृश-भारतं स तत्रापि हिमालयेऽपि स्मृतवान् केनोपायेन एतादृशभारतस्य कल्याणं भविष्यति । चिन्तया स्वमातृभूमिमस्मृतवान् ॥ अस्मिन्सर्गे वैतालीयं छन्दः अनुप्रासश्च ॥३॥

यतिजीवनमेव सद्गुरोरुपदेशात्मकवाक्यसंहतेः ।
जनुषः पुनरावपुःक्षयं किमु कार्यात्मकभाष्यसम्मितम् ॥ ४ ॥

यतिजीवनमिति । यतेः विवेकानन्दस्वामिनो जीवनं जनुषः जन्मारभ्य आवपुःक्षयं निर्वाणपर्यन्तं सद्गुरोः श्रीरामकृष्णपरमहंसदेवस्य उपदेशवाक्यस्वरूपोपनिषत्सु कार्यात्म-कभाष्यमभवत् । गुरुणा यः उपदेशः कृतः तस्योपदेशस्य कार्यात्मकटीकास्वरूपमिव तस्य जीवनम् । किमु इत्युत्प्रेक्षा नाम ॥ ४ ॥

मनसा वपुषा च धान्यतः कृतकार्यैः शिथिलीबभूव सः ।
गतवान् स पुनः समुत्कलां कियदारब्धमुदर्कसंयुतम् ॥ ५ ॥

मनसेति । न केवलं तेन शारीरिकः परिश्रमः कृतः अपितु मनसा वाचापि स कृतः तादृशपरिश्रमपूर्वकं कृतं कार्यं येनैतादृशः स शिथिलीबभूव परिश्रान्तः पुनरपि स समुत्कतां उत्कण्ठां गतः प्राप्तः किं विचार्य—आरब्धं कार्यं कियदवधि उदर्कसंयुतं सफलीभूतमिति ॥ ५ ॥

यतयः सहकारिणः क्षुधामयः स ह्येतरयन्त्रणापरान् ।
अनपेक्ष्य तनुं बहिष्कृतानपि तत्प्रेरणया सिषेविरे ॥ ६ ॥

यतय इति । सहकारिणः यतयः स्वामिना साकं कार्यकर्तारः तनुं स्वतनुं स्वशरीरारोग्यमनपेक्ष्य क्षुधारूपः बुभुक्षास्वरूपः यः आमयः रोगः तस्य सह्येतरा असह्या इत्यर्थः । यन्त्रणापरान् तादृशयन्त्रणापीडितान् बहिष्कृतान् समाजपरित्यक्तानस्पृश्यादिकान् तत्प्रेरणया सिषेविरे सेवितवन्तः ॥ ६ ॥

सततं बलिरूपिणो वयं निजमातुर्विनिवेदिताङ्गकाः ।
स्वसमाजविराडुपासकाः समरक्ताः सकलाश्च बान्धवाः ॥ ७ ॥

सततमिति । निजमातुः स्वकीयजनन्यै विनिवेदितं समर्पितं अङ्गं यैरेतादृशा वयं सततं बलिरूपिणः बलिदानस्य इदमेव रहस्यं यन्मातृभूम्यर्थमात्मसमर्पणम् नतु पशुहिंसा । तथा वयं स्वकीयः समाज एव विराट्स्वरूपः सर्वव्यापी भगवान् तस्य उपासकाः पूजकाः वयं सर्वेऽपि समं एकमेव रक्तं येषामेतादृशाः, तथा परस्परं बन्धुभावसम्बन्धाः नाम कश्चिज्जातितः वर्णतो वा न भेदो भवितुमर्हति ॥ ७ ॥

उमया सहितोऽद्य शंकरो भवतां त्यागमयोऽस्तु पूजितः ।
धनजीवनसौख्यसम्पदो न कदाप्यात्मसुखार्थमागताः ॥ ८ ॥

उमयेति । अद्य वर्तमानकाले त्याग एवास्माकमादर्शः भवतु तदर्थं च त्यागमयः परित्यक्तसर्वस्वः उमया शक्त्या सहितः शंकरः शिव एव पूजितः भवतु । धनं जीवनं सौख्यं विविधसम्पदश्च । कदापि आत्मनः स्वस्य सुखार्थं न आगताः अधिगताः । अपितु समाजविराजः सेवार्थं मातृसेवार्थं च ॥ ८ ॥

हिमवद्गिरिमध्यगं यतेरलमोडापदमित्थमीप्सितम् ।
यदिह स्वयमाश्रमान्तरं परिनिर्मातुमतिर्व्यजायत ॥ ९ ॥

हिमवदिति । हिमवतो गिरेः हिमालयपर्वतस्य मध्यगतं इदं अलमोडापदं मायावतीस्थानं यतेः एतादृशमभिमतं इष्टमभूत् यत्र यतिः इह आश्रमान्तरं अद्वैताश्रमनामकमपराश्रमं निर्मातुं स्थापयितुं मतिर्यस्यैतादृशः व्यजायत अजनि ॥ ९ ॥

सदुपायनमांग्लभूमितः सरला भारतसेवने रता ।
अपितेह सुधीर्निवेदिता चिरमन्वर्थनिजाभिधानका ॥ १० ॥

सदुपायनमिति । आंग्लभूमितः इंग्लंडदेशतः सदुपायनभूता उपहारस्वरूपा सरला अत्यन्तपवित्रस्वभावा निरंतरं भारतसेवने तत्परा सुधीः इंग्लन्डदेशे कस्यचित्कन्यापाठालयस्य अध्यक्षस्थानीया अन्वर्थनिजाभिधानिका सार्थनामा 'निवेदिता' भारतसेवार्थमात्मानमर्पितवतीति अन्वर्थाख्या अत्रैवाश्रमे चिरमुषिता अवसत् । स्वामिना उक्तमासीत् निवेदिता इंग्लन्ददेशात् भारतेन प्राप्तः बहुमूल्यः उपहार इति । सा आत्मानं पूर्णरूपेण

हिन्दुललना अमन्यत। तथा लिखिता 'सावित्री-'दमयन्ती-'सीतादिभारतीयनारीणां कथा अध्ययनार्हा सन्ति ॥ १० ॥

इत एव समस्तभारते नवमुद्बोधननाम मासिकम् ।
युगसेवियप्रकाशितं प्रसृतं बोधनकार्यसाधनम् ॥ ११ ॥

इत एवेति। इत एव अस्मादेव स्थानात् नवं नवीनं उद्बोधनं नाम मासिकपत्रं युगसेवियप्रकाशितं सेवियरदम्पतिभ्यां प्रथितं बोधनकार्यसाधनं जनजागरणहेतुभूतं प्रसृतं प्रसिद्धमभूत् येन मासिकपत्रेण वेदान्तधर्मं कथं व्यवहारे आनेतव्य इति महत्यास्पदा उपदिष्टम् ॥ ११ ॥

तदिदं युवकालुपादिशत् ननु सेव्या भवतां स्वमातृभूः ।
अतिनिर्धननीचबान्धवाः सततं सन्तु नमस्यदेवताः ॥ १२ ॥

तदिदमिति। तदिद मासिकं युवकान् भारतीयतरुणान् उपादिशत् उपदिष्टवत् किमुपादिशत्—हे भारतीया स्वमातृभूः भारतजननी भवतां सेव्या सेवनीया। अति-निर्धना दरिद्रा नीचा बान्धवा भ्रातर सततं युष्माकं नमस्यदेवता पूजनीयदेवा: सन्तु ॥ १२ ॥

व्यवहारविधौ जगज्जनैर्नयवेदान्तमतानुशीलनम् ।
क्रियतां प्रतिकार्यमुज्ज्वलं न तु तत्केवलबोधहेतुकम् ॥ १३ ॥

व्यवहारविधाविति। जगज्जनै सर्वैरपि संसारस्थमनुष्यै व्यवहारविधौ दैनिक-व्यवहारे उज्ज्वलं प्रकाशयुक्तं वेदान्तशिक्षानुशीलनं तच्छिक्षितविश्वबन्धुत्वादिनियम-परिपालनं प्रतिकार्यं प्रत्येककार्यं क्रियतां कर्तव्यम्। वेदान्तोपदेश केवलं ज्ञानार्थमेव न अपितु व्यवहारोपयोगार्थमपि ॥ १३ ॥

अतिदीनदरिद्रसेवनं विमलं त्यागमयं च जीवनम् ।
असुभिः परिपाल्यमात्मनो भवदादर्शयुगं युगे युगे ॥ १४ ॥

अतिदीनेत्यादि। अतिदीनदरिद्राणां सेवाकार्यम्, त्यागमय यज्ञमय विमल निर्मलं जीवनम्, इदं भवतां आदर्शयुग आदर्शद्वय दरिद्रसेवा त्यागश्चेद आदर्शयुगलं युगे युगे आत्मन असुभिरपि प्रतिपाल्यम अनुसरणीयम् ॥ १४ ॥

मलशून्यविशुद्धचेतसो सहिता दिव्यबलेन तेजसा ।
जननी सुचिरात् प्रतीक्षते ध्रुवबुद्धीन् पुरुषान् सपौरुषान् ॥ १५ ॥

मलशून्येत्यादि। मलशून्यानि निर्मलानि विशुद्धानि पवित्राणि चेतांसि येषां तेनादृशाः दिव्यबलेन अलौकिकशक्त्या तेजसा वीर्येण च सहितान् एतादृशान् ध्रुवबुद्धीन् स्थिर-धियः सपौरुषान् सपराक्रमान् पुरुषान् अस्माक जननी सुचिरात् दीर्घकालात् प्रतीक्षते तादृशपुरुषाणां सहायेन परस्परबन्धुत्वादिगुणान्वितं विश्वधर्मं जगति प्रसारयितु मित्यर्थं ॥ १५ ॥

सकलाः परिपीडयन्तु ते सुहृदो मित्र वदन्तु वान्यथा ।
स्थिरमग्रगतिर्भवान्भवेत् पथि पश्चाच्च गतं तवोचितम् ॥ १६ ॥

सकला इति । हे मित्र ! सकलाः सर्वे सुहृदः सखायः त्वां परिपीडयन्तु सन्त्रासयन्तु तव बान्धवाश्च रुदन्तु अश्रुपातं कुर्वन्तु परं त्वं स्वनिर्धारिताध्वपरित्यागं मा विधेहि तदनुसारे च भवान्निरन्तरं अग्रे पुरत एव गतिर्यस्यैतादृशः भवेत्, अग्रगतेः स्थाने पश्चाद्गमनं कदापि तव नोचितम् ॥ १६ ॥

नरतां पशुरेति हिंसको ननु सत्कर्मवशात् प्रशासितः ।
पशुतां परमेति मानवोऽनवद्यात्व्यवसायतोऽवशः ॥ १७ ॥

नरतामिति । हिंसकः क्रूरः पशुरपि प्रशासितः सुशिक्षितः सत्कर्मवशात् नरतां मनुष्यत्वं प्राप्नोति परंतु अनवद्यात्व्यवसायतः असत्कर्मवशात् अवशः अजितेन्द्रियः सन् मानवः पशुतामेति ॥ १७ ॥

भवदात्मविकासकारणं विदितं तत्खलु कर्मसंज्ञितम् ।
तव चात्मविधानहेतुकं यदकर्मेति च कोविदैः स्मृतम् ॥ १८ ॥

भवदात्मेति । भवतस्तव यत् आत्मविकासकारणं आध्यात्मिकसमृद्धिहेतुभूतं यदेव त्वया क्रियते तदेव कर्म इति ख्यातम् । येन च कर्मणा स्वात्मापलापो भवेत् कोऽहं यथार्थतया इति विस्मृतं भवेत् तदेव अकर्म इति कोविदैः विद्वद्भिः स्मृतम् कथितम् ॥१८॥

इतरार्थनिरस्तसम्पदो वृणुते मुक्तिरिह स्वयं जनान् ।
'मम मुक्तिरुदेतु केवलं'वचनेनोभयतोऽपि वञ्चना ॥ १९ ॥

इतरार्थेत्यादि । इतरार्थकृते परार्थं निरस्ताः सम्पदः यैः एतादृशान् साधुजनान् इह मुक्तिः मोक्षसुखं स्वयमेव वृणुते केवलं ममैव मुक्तिर्भवतु इति वचनेन न परोपकारः नापि स्वात्मलाभः इति उभयतोऽपि वञ्चना भवेत् ॥ १९ ॥

अथ पञ्चनदप्रदेशतो यतिराट्छ्रीनगरागमेच्छुकः ।
पथि वंगरसात्मजोऽपि सन् स बभाषेऽमतराष्ट्रभाषया ॥ २० ॥

अथेति । अथ स यतिराट् यतीन्द्रः पञ्चनदप्रदेशतः पञ्जाबप्रान्तात् श्रीनगरं प्रति गमनेच्छुः सन् वंगरसात्मजः अपि सन् वंगभाषाभाषी अपि यत्र तत्र शुद्धया अस्खलित-राष्ट्रभाषया हिन्दीभाषया बभाषे सार्वजनिकसभासु भाषणादिकं चकार ॥ २० ॥

जितवानिह राष्ट्रपूजितो हृदयान्यस्य वचांसि शृण्वताम् ।
विपुलं च विधातुमान्तरं यतिरेतानखिलानुपादिशत् ॥ २१ ॥

जितवानिति । राष्ट्रपूजितोऽसौ इह काश्मीरदेशे अस्य वचांसि शृण्वतां जनानां हृदयानि अन्तःकरणानि जितवान् आचकर्ष । एतानखिलांश्च यतिः स्वकीयमान्तरं मानसं विपुलं विस्तृतं उदारं नतु संकुचितं कर्तुमुपादिशत् ॥ २१ ॥

प्रशशंस स सिक्खमार्गगां सगुणां जातिभिदातिरस्कृतिम् ।
अवदन्निजधर्मवर्त्म नः क्रियतां पाकगृहाद्बहिष्कृतिः ॥ २२ ॥

प्रशशंसेति । स यतिः सिक्खमार्गगां सिक्खानां पथि वर्तमानां सगुणां निर्दोषां बहुगुणवतीं च जातिभिदातिरस्कृतिं जातिभेदपरित्यागं प्रशशंस स्तुतवान् अवदत् उपादिशच्च—निजधर्मवर्त्मनः सनातनधर्मस्य केवलं पाकगृहात् बहिष्कृतिः बहिष्कारः क्रियताम् इति । अस्माकमाधुनिकधर्मस्तु केवलं पाकशालायामेव विद्यते चौकाप्रवेशः न कर्तव्यः प्रायः इदमेवाधुनिकधर्मस्य लक्षणम् तत्तु न स्वीकर्तव्यम् ॥ २२ ॥

अधुना किल मा स्पृशेद् भवान् अवशिष्टं शुचिधर्मलक्षणम् ।
इदमद्भुतमेव भाति मे तपनीयं क्वचिदेत्यनुद्धताम् ॥ २३ ॥

अधुनेति । अधुना इदानींतने समये शुचेः पवित्रस्य धर्मस्य लक्षणम् भवान् मो मा स्पृशेत् इत्याकारमेवावशिष्टं वर्त्तितम् इदं तु मे अद्भुतमेव विचित्रमेव भाति यत् तपनीयमपि सुवर्णमपि क्वचिदशुद्धतामेति । अत्र एकमेवोदाहरणं दीयते—पोर्चुगीजशासितगोवाप्रदेशे खिस्तधर्मोपदेशकाः कस्मिंश्चित्कूपे रात्रौ लघु गोमांसखण्डं प्रक्षिप्य प्रातःकाले तस्मात्कूपात् जलनयनार्थमागतान् हिन्दून् उक्तवन्तः अहो अस्मिन्कूपे अस्माभिः गोमांसखण्डं प्रक्षिप्तमासीत् हिन्दवश्च वयमधुना अशुद्धकूपजलग्रहणेन खिस्तधर्मावलम्बिनः जाताः । अहो दुर्दैवमस्माकम् इत्युक्त्वा खिस्तमार्गीया जाताः ॥ २३ ॥

उररीकृतभिन्नमार्गतोऽप्यनुतापान्वितसज्जनान् क्वचित् ।
यतिरेष विशुद्धिमागतान्निजधर्मान्वयिनोऽन्वमन्यत ॥ २४ ॥

उररीत्यादि । उररीकृतः स्वीकृतः यः भिन्नधर्ममार्गः तस्मात् अनुतापान्वितान् पश्चात्तपमानान् सज्जनान् क्वचित्स्थाने विशुद्धिमागतान् पुनरपि निजपूर्वधर्मप्रविष्टान् अन्वमन्यत युष्माभिः समीचीनं कृतमिति प्रशंसितवान् ॥ २४ ॥

अथ रामसुतस्य पत्तनं लवनाम्नः प्रविशन् व्यलोकयत् ।
इह रामपरं स तीर्थं इत्युदितं तीर्थपदे स्थितं नवम् ॥ २५ ॥

अथेति । अथानन्तरं स्वामी रामसुतस्य लवस्य पत्तनं लवपुरमित्यपरं 'लाहोर' इति ख्यातं प्रविशन् इह रामपरं तीर्थं इत्युदितं तीर्थरामनामानं तीर्थपदे स्थितं युवानं प्राध्यापकपदाधिरूढं व्यलोकयत् ॥ २५ ॥

स गतः किल रामतीर्थतां यतिगीतैरथ गीतभाषितैः ।
यदि राममतिर्न कामना नहि कामेऽपि च रामदर्शनम् ॥ २६ ॥

स गत इति । स प्राध्यापकः तीर्थरामः अथ परस्परदर्शनानन्तरं यतिगीतैः गीतभाषितैः स्वामिगीतगानशब्दैः कीदृशैः शब्दैः—यदि रामे मतिः बुद्धिः वर्त्तते तर्हि कामना लुप्यते तथा कामे सति रामदर्शनमपि नास्ति इत्याकारकगानवचनानि निशम्य स तीर्थरामः 'रामतीर्थ' नामकः यतिः गैरिकवस्त्रधारी जातः ॥ २६ ॥

अधुना बहुजातिभिः कृतं लघुजातिर्महतीषु मज्जतु ।
अथ वर्णचतुष्टयं भवेद्गुणकर्मप्रविभागतः क्रमात् ॥ २७ ॥

अधुनेति । अधुना वर्तमानकाले बहुजातिभिः आत्युपजातिभेदैः कृतमलम् । ताः कथं नश्यन्त्विति आह—लघुजातिः महतीषु जातिषु मज्जतु समाजधारणार्थं वर्णचतुष्टयमावश्यकं परं न तज्जन्मना अपि तु क्रमात् क्रमशः गुणकर्मविभागात् सद्गुणानां ज्ञानस्य च रक्षितारः ब्राह्मणा इति कर्मविभागात् वर्णा मन्तव्याः 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति युक्तमेवोक्तम् । वर्णजातीनामाधुनिकपरिवर्तितरूपं यथेष्टभारतोन्नतौ अन्तरायभूतम् ॥ २७ ॥

त्रिपदाजपतत्परो भवेदुपवीती खलु संविदन्वितः ।
शुभकर्मवशाज्जनः पुनः सकलो ब्राह्मणतां च गच्छतु ॥ २८ ॥

त्रिपदेति। यः संविदन्वितः ज्ञानवान् स उपधृतयज्ञोपवीतः सन् त्रिपदाजपतत्परो भवेत् गायत्रीजपासक्तः जायेत। सर्वेऽपि जनाः शुभकर्मवशात् अवदातकर्मकरणात् ब्राह्मणतां गच्छन्तु ॥ २८ ॥

निजभारतभूनृपश्रियो मुकुटस्य श्रियमाश्रितं यतिः।
गतवान् भवितुं नृपातिथिः किल काश्मीरपुरं पुरः सरन् ॥ २९ ॥

निजेत्यादि। यतिः तदनन्तरं पुरः सरन् अग्रे गच्छन् निजभारतस्य नृपश्रियः भारतस्य राजलक्ष्म्याः मुकुटस्य श्रियं शोभामाश्रितं प्राप्तं काश्मीरपुरं तत्रत्यनृपातिथिः भवितुं गतवान् किल ॥ २९ ॥

श्रुतिसंस्कृतिदिव्यभारतीपदमासीदनादिकालतः।
यत एव पुराऽत्र भारते प्रसृता सर्वत आर्यसंस्कृतिः ॥ ३० ॥

श्रुतीत्यादि। यस्स्थानं यः काश्मीरदेशः श्रुतीनां वेदानां आर्यसभ्यतासंस्कृत्योः दिव्यभारत्याः संस्कृतभाषायाश्च पदं केन्द्रमासीत् अनादिकालतः सहस्रशो वर्षेभ्यः पूर्वमपि यतश्च पुरा अत्र विस्तृते भारते सर्वतः सर्वत्र आर्यसंस्कृतिः प्रसृता आसीत् काश्मीरदेश एवार्याणां मूलस्थानं यस्माज्जगति सर्वत्र 'कृण्वन्तो विश्वमार्यम्' इति तत्त्वमनुसरन्तः आर्याः अनेकशाखाभिः प्रसृताः इति प्रतिभाति ॥ ३० ॥

इह मम्मटरुद्रटादयः कवयः काव्यकलासु कोविदाः।
अभवन्ननु नैषधं पुनः प्रथितं नूतनविद्वदौषधम् ॥ ३१ ॥

इहेति। इह काश्मीरदेशे मम्मटरुद्रटादयः काव्यकलासु कोविदाः पण्डिताः अपि अभवन् तथा अत्रैव नैषधं नाम नूतनं श्रीहर्षरचितं महाकाव्यमपि विद्वदौषधं प्रथितं प्रसिद्धञ्च किमपि नवीनं काव्यं आदौ काश्मीरस्य पण्डितमण्डले पुरतः स्थापितमभूत् यद्यपि तत्रत्यपण्डितैः अनुमतं पश्चात् सर्वस्मिन् भारते प्रथितं अजायत ॥ ३१ ॥

इह भूपममात्यसंहतिं जनसाधारणमप्यसौ यमी।
अतिमुग्धतरान् व्यधाच्चिरं नवचैतन्यवदात्मभाषितैः ॥ ३२ ॥

इहेति। असौ यमी भूपम् काश्मीरनृपतिम् अमात्यसंहतिं मन्त्रिवृन्दम् तथा साधारणजनानपि चिरं चिरकालपर्यन्तं अतिमुग्धतरान् समाकृष्टहृदयान् व्यधात् अकार्षीत् कैः नवीनचैतन्ययुक्तैः आत्मभाषितैः व्याख्यानपरम्पराभिः ॥ ३२ ॥

यतिरुत्तरभारते भ्रमन् परमो मानवमात्रसेवकः।
श्रमकर्शितकायवान्भृशं कलिकातानगरीं समाययौ ॥ ३३ ॥

यतिरुत्तरेत्यादि। यतिः परमः श्रेष्ठः मानवमात्रसेवकः उत्तरभारते भ्रमन् भृशं अत्यधिकं परिभ्रमणश्रमवशात् कर्शितकायवान् कृशगात्रः कलिकातानगरीं समाययौ आगतः ॥ ३३ ॥

अतिदीर्घयतिप्रयत्नतो विशदान्तेवसदर्थसञ्चयात्।
गुरुनामशुभाक्षरान्वितो नववेलूरमठोऽत्र निर्मितः ॥ ३४ ॥

अतिदीर्घेत्यादि। अतिदीर्घात् चिरकालकृतात् यतेः प्रयत्नात् विशदाः श्वेतवर्णीया अन्तेवसन्तः शिष्याः सेवियरप्रभृतयः तेषामर्थसञ्चयात् द्रव्यसहायतः गुरुनामशुभाक्षरान्वितः रामकृष्णाश्रम इति अभिधानवान् नवः 'बेलूरमठः' अत्र कलिकातानगरे (गङ्गातीरे) निर्मितः ॥ ३४ ॥

इह तेऽपि निवेदितादयो नवसंस्कारयुता यते स्वयम् ।
वचसा हृदयेन कर्मणा जनसेवाचरणे न्ययोजयन् ॥ ३५ ॥

इहेति । यत सकाशात् तत्त्वज्ञानादिग्रहणं, नवसंस्कारयुता अधिगतनवसंस्कारास्ते निवेदितादय वचसा भाषणादिभि हृदयेन शुद्धविचारै कर्मणा शारीरकृतपरिश्रमैश्च स्वयम् आत्मानं जनसेवाकरणे लोकसेवायां न्ययोजयन् ॥ ३५ ॥

यतिरुज्झितवर्णजातिधीरुपदेशामृतपानदानकृत् ।
क्षुधितानशनेन तर्पयन् नरनारायणसेवने रत ॥ ३६ ॥

यतिरिति । यति स्वामी उज्झिता परित्यक्ता वर्णधी अयं ब्राह्मणवर्णीय अयं शूद्रवर्णीय इत्याकारिका धी विचार येन स्वादृश सर्वानपि सुखयमेतदर्थं स्वकीयोपदेशामृतपानदानं च करोति इति—पानदानकृत् क्षुधितान् अशनेन भोजनेन तर्पयन् नरस्वरूपनारायणसेवने रत अभूत् ॥ ३६ ॥

विहितामरनाथदर्शनोऽधिगतानन्तशिवोऽस्मि भावन ।
सहकारिनिवेदितेक्षितोऽप्यधिकं ध्यानपर स्थितो यति ॥ ३७ ॥

विहितेत्यादि । विहितं कृतं काश्मीरस्थामरनाथशिवलिङ्गदर्शनं येनैतादृश फलतश्च अधिगता प्राप्ता अहं अनाद्यन्त शिवस्वरूप इति भावना येनैतादृश सन् सहकारि सहकार्यकर्त्री निवेदितया ईक्षित अवलोकित स यति निरन्तरं अधिकाधिकं ध्यानपर एव स्थित अभूत् । अमरनाथगुहायां स ध्यानमग्न सन् तस्माच्छिववात् इच्छामृत्युवरं सोऽधिगतवान् किल ॥ ३७ ॥

निजवान्धवसेवको महान् नवमार्गप्रथमप्रवर्तक ।
शुभकर्मकरो निरन्तरं जननीं चिन्तयति स्म केवलम् ॥ ३८ ॥

निजबान्धवेति । निजबान्धवाना महान् श्रेष्ठ सेवक शिवज्ञानेन जीवसेवाकारक नववेदान्तमार्गस्य प्रथम आद्य प्रवर्तक उपदेशक निरन्तरं शुभकर्मकरोऽपि अमरनाथदर्शनानन्तरं पश्चात् च क्षीरभवानीदेवीदर्शनानन्तरं च केवलं जननीं कालीमेव अचिन्तयत् ॥ ३८ ॥

कलकेनाह—

सविकाससुमान्वितं वनं मृदुगुञ्जामधुरस्वनान्वितम् ।
पवनेन तरङ्गितं सर परित पङ्कजवृन्दमण्डितम् ॥ ३९ ॥

सविकासेति । सविकासानि विकासितानि सुमानि कुसुमानि तै अन्वितं युक्तं विकसितकुसुमपरिपूर्णं मृदु कोमल गुञ्जामधुरस्वन भ्रमराणां मधुर स्वर तेनान्वितं वनं काननं पवनेन तरङ्गितं वीचियुक्तं सर सरोवरं परित पङ्कजवृन्दै कमलसमूहै मण्डितं अलङ्कृतं आस्ते ॥ ३९ ॥

अरुणांशुसुवर्णतूलिकाबहुवर्णाङ्कितभूतलाम्बरम् ।
तरुपल्लवभंगसंगतं खगवृन्दं प्रियगीतसम्भृतम् ॥ ४० ॥

अरुणांशुभिरिति । अरुणांशव सूर्यकिरणा त एव सुवर्णतूलिका वर्णविन्याससाधनभूता वर्तिका ताभि करणै बहुवर्णै अङ्कितं भूतलमेवाम्बरं चित्रपटं, तथा तरुपल्लवभंगसंगतं वृक्षशाखादिस्थितं प्रियगीतसम्भृतं खगानां पक्षिणां वृन्दं समूह ॥ ४० ॥

अन्वय—

भिदुरोद्भवघोरगर्जितं चलदम्भोधरचण्डखण्डगम् ।
प्रलयानलपातुकास्तु वा रुधिरारक्तशिखोग्रसंहतिः ॥ ४१ ॥

भिदुरेत्यादि । भिदुरात्कुलिशादुद्भवः यस्यै तादृशं घोरं भयानकं गर्जितं, यत् चलतः अम्भोधरस्य मेघस्य खण्डे शकले गच्छति तिष्ठति तत्र विद्यमानमित्यर्थः अथवा प्रलयानलात् प्रलयकालीनात् वह्नेः पातुका पतनशीला रुधिरमिव आरक्तानां रक्तवर्णानां शिखानां ज्वालानां उग्रा भयंकरी संहतिः समूहः वा भवतु ॥ [illegible] ॥

इति मातृवपुर्युगं मृदु क्वचिदुग्रं सुखदुःखसम्भृतम् ।
उभयं शिवमेव सेवनास्पदमेतत्प्रियताश्रितान्तरम् ॥ ४२ ॥

इति मात्विति । इत्थं मातुः कालीजनन्या वपुर्युगं शरीरयुगलं क्वचिद्विकसितसुमालंकृतवनात्मकं क्वचिच्च भिदुरोद्भवघोरगर्जनयुक्तं उग्रम् एवं सुखदुःखोभयस्वभावं उभयमपि शिवकल्याणमयं तथा सेवनास्पदं पूजार्हं कुतः ? प्रियतया प्रेम्णा आश्रितं आन्तरं मानसं यस्यैतादृशं विद्यते । अतः दुःखमयं मातृरूपं परित्याज्यं सुखमयमेव ग्राह्यमिति न मन्तव्यम् उभयमपि पूजनीयमेव ॥ ४२ ॥

यतिरेत्य पुनस्त्वनन्द्यश्चवेलूरमठस्थबान्धवान् ।
स मठश्च पवित्रतां गतः प्रतिमापूजितरामकृष्णभूः ॥ ४३ ॥

यतिरिति । यतिः पुनराश्रममेत्यागत्य वेलूरमठस्थबान्धवान् सुहृत्कार्यकर्तॄन् अनन्दयत् सानन्दांश्चकार । स मठश्च पवित्रतां निर्मलत्वं गतः कुतः ? प्रतिमायां मूर्तौ पूजितः यः रामकृष्णपरमहंसः तस्य भूः स्थानं एतादृशः मठः ॥ ४३ ॥

अयमारविचन्द्रसंस्थितिर्भवताद्धर्मसमन्वयास्पदम् ।
नृहिताय सुखाय सर्वतो यतिरभ्यर्थितवान् सहेतरैः ॥ ४४ ॥

अयमिति । अयं वेलूरगतः आश्रमः आरविचन्द्रसंस्थितिः यावच्चन्द्रदिवाकरौ तावदस्तित्वं यस्यैतादृशः सन् धर्मसमन्वयास्पदं सकलविश्वधर्मसामञ्जस्यभावनोत्पादनक्षमः भवतात् भवतु । किमर्थम् ? सर्वतः सर्वत्र सर्वप्रकारेण वा नृहिताय मानवमात्रकल्याणाय सार्वजनिकसुखाय च इति यतिः इतरैः सह अभ्यर्थितवान् प्रार्थितवान् ॥ ४४ ॥

स च तीर्थसमोऽसमाश्रमः सततं शारदयार्चितप्रभुः ।
जगति प्रभवेदुदारतारतयावज्जनजातलक्षणः ॥ ४५ ॥

स चेति । सः चाश्रमः असमः निरुपमः तीर्थसमः पवित्रस्थानतुल्यः सततं निरन्तरं शारदया मात्रा अर्चितः पूजितः प्रभुः श्रीरामकृष्णदेवः यत्रैतादृशः जगति अस्मिन्संसारे उदारतायां औदार्यगुणे रतं आसक्तं यावज्जनानां अखिलसेवकवराणां जातं समूहः तदेव लक्षणम् अभिज्ञानचिह्नं यस्यैतादृशः प्रथितः भवेत् एतदाश्रमसंबन्धिनः सर्वेऽपि सेवकाः पूजका उदारान्तःकरणा भवेयुरिति ॥ ४५ ॥

समुवाच तदाश्रमागतानिह यूनो नवशिक्षितानसौ ।
भवतार्यजनाः स्वयं परानपि सर्वान्नयतार्यतां क्षितौ ॥ ४६ ॥

समुवाचेति । असौ स्वामी तदाश्रमागतान् नवशिक्षितान् अचिराल्लब्धशिक्षाकान् यूनः समुवाच उपदिष्टवान् किम् ? हे युवभ्रातरः न केवलं यूयमेव आर्याः भवत अपितु

क्षितौ भूमण्डले सर्वानपि मानवानार्यतां नयत 'कृण्वन्तो विश्वमार्य'मिति अग्रण्यपुरातन ऋषीणामुपदेशमनुस्मारयेत्ययं ॥ ४६ ॥

जनजागृतिकार्यकारणादित यूयं पुरतः सहस्रशः ।
भवदर्चनमर्हति द्रुत शृणुतार्याः ! जनताजनार्दनः ॥ ४७ ॥

जनजागृतीति । हे युवधानर ! जनजागृतिकार्यकारणात् लोकजागरणार्थं सहस्रशः सहस्राधिकसंख्यायां यूयं सर्वे पुरतः अग्रतः इत गच्छत हे । आर्याः शृणुत जनताजनार्दनः मानवतास्वरूपः भगवान् भवद्भिः द्रुतं सत्वरं क्रियमाणमर्चनं पूजामर्हति ॥ ४७ ॥

इति मानवलोकशोकहा यदनाम्यापरिशीर्णदेहवान् ।
परिवर्तनमानसः पुनर्गतवान् संस्तुतपश्चिमं जगत् ॥ ४८ ॥

इति मानवेति । इत्थं मानवलोकानां मनुष्याणां शोकदुःखहन्ता इति जगद्दुःखनिवारणः यद्यस्मात् अनास्थया उपेक्षया परिशीर्णदेहवान् क्लान्तशरीरः परिवर्तनार्थं मानसं यस्यैतादृशः पुनरेकवारं संस्तुतपश्चिमं परिचितं जगत् पाश्चात्यजगत् प्रति गतवान् येन सह निवेदिताऽपि गतासीत् ॥ ४८ ॥

सह तेन तुरीयसंयमी प्रययौ संस्कृतवाग्विचक्षणः ।
इह कार्यविधिं परीक्षितुं पुरतः सारयितुं च यत्कृतम् ॥ ४९ ॥

सह तेनेति । तेन स्वामिना सह संस्कृतवाग्विचक्षणः संस्कृतज्ञः तुरीयानन्दो नाम यतिरपि प्रययौ किमर्थम् ? इह पश्चिमस्यां दिशि यत्किमपि वेदान्तप्रचारकार्यं कृतमासीत् तत्परीक्षितुं तथा यत्किञ्चित्कार्यं कृतं तत् पुरः सारयितुं च स्वामी तुरीयानन्दविषये तेनोक्तमासीत्—प्रथमं नरेन्द्र क्षत्रियवीरः दृष्टः इदानीं कश्चिद्विद्वांसं ब्राह्मणं पण्डितं दर्शयिष्यामीति ॥ ४९ ॥

मुमुदे किल नूतनं जगत् यतिमालोक्य निजातिथिं पुनः ।
स्थिरकेन्द्रमिह प्रतिष्ठितं नववेदान्तविचारहेतवे ॥ ५० ॥

मुमुदे इति । नूतनं जगत् अमेरिकावासिनः इत्यर्थः, यतिं पुनरपि यतिं निजातिथिमागतं वीक्ष्य मुमुदे तत्र च तेन नववेदान्तविचारहेतवे वेदान्तविचारशिक्षार्थं स्थिरं चिरस्थायि केन्द्रं च प्रतिष्ठितं स्थापितमभूत् ॥ ५० ॥

विमुखः परमद्य सस्रुतेरनिशं तत्त्वविचारतत्परः ।
अधिकं न बहिर्यथान्तरः स शिवोऽहं हृदि चिन्तयन्नभूत् ॥ ५१ ॥

विमुखइति । परं स स्वामी अद्य वर्तमानपश्चिमयात्रायां संसृतेः सांसारिकाधिकोपदेशादिकार्यतः विमुखः पराङ्मुखः सन् प्रायशः तत्त्वविचारतत्परः मानसिकाध्यात्मविचारासक्त एव आसीत् अत एव यथा स आन्तरः आसीत् तथा बहिर्न बाह्यव्यवहारासक्तः नाभूत् तथा च हृदि मानसे नित्यं शिवोऽहं शिवोऽहमिति चिन्तनासक्तः आसीत् ॥ ५१ ॥

वटवृक्षतले गुरोर्वचः श्रवणे स प्रसितोऽस्मि बालकः ।
अहमागत एव सोऽब्रवीत् क्षणकालं भवता प्रतीक्ष्यताम् ॥ ५२ ॥

वटवृक्षतल इति । सोऽब्रवीत्—किम् ? अहं स नरेन्द्र एव बालकोऽस्मि यः बालका

वस्यायां दक्षिणेश्वरे तत्रत्यवटवृक्षतले गुरोर्वचःश्रवणे प्रसितः स्थः आसम् । हे गुरो ! भवता क्षणकालमेव प्रतीक्ष्यताम् अहं त्वत्समीपे आगत एव ॥ ५२ ॥

बहुधा किल वक्तृतापरः परसूचे क्षितिवार्तया कृतम् ।
पुरतः परिदृश्यते मया परिनिर्वाणसुखापरोक्षता ॥ ५३ ॥

बहुधेति । यद्यपि स बहुवक्तृतापरः अनेकस्थलेषु संभाषणानि दत्तवान् तथा मध्ये स उक्तवानासीत् अधुना क्षितिवार्तया जागतिकविचारैः अलम् यतः मम पुरतः परिनिर्वाणसुखस्य विदेहमुक्तिसुखस्य अपरोक्षता साक्षात्कारः परिदृश्यते साक्षात्क्रियते ॥ ५३ ॥

अथ लन्दनमार्गतो गतो रुचिरफ्रेंचपुरीप्रकल्पिताम् ।
इतिहाससभां विभासितां स विधातुं विदधे स्वमानसम् ॥ ५४ ॥

अथेति । अथ स लन्दनमार्गतः लन्दननगराध्वना रुचिरया फ्रेंचपुर्या परिसाख्यया प्रकल्पितां इतिहाससभां विभासितां स्वोपस्थित्या सुशोभितां कर्तुं स्वमानसं विदधे लोकप्रार्थनया तत्र गन्तुं प्रवृत्तः । अमेरिकायां या धर्मसभा जाता तत्र तु वैदिकसनातनवैदिकधर्मस्यैव प्राधान्यं स्थापितं जातम् । तस्य पुनरावृत्तिर्माभूत् इति तैः धर्मसमाख्याने इतिहास ( धर्मेतिहास ) सभा कर्तुं निश्चितम् ॥ ५४ ॥

इह निश्चितवाञ्छ्रुतेः स्मृतिः विवदन्पश्चिमपण्डितैः सुधीः ।
जनिता प्रकृतेर्न पूजया ननु मूलं त्वखिलाङ्कवर्त्मनाम् ॥ ५५ ॥

इहेति । इह अस्यां सभायां स सुधीः विद्वान् यतिः पश्चिमपण्डितैः पाश्चात्यपण्डितैः विवदन् इति निश्चितवान् किम् ? श्रुतेः स्मृतिः वैदिकमार्गः प्रकृतिपूजया न जनितः वेदे यदि सूर्यवाय्वादीनां सूक्तानि दृश्यन्ते एतावता आर्याः प्रथमं प्रकृतिपूजापरा एवासन् अनन्तरं 'एकमेवाद्वितीयं ब्रह्म' इति प्रधानवैदिकमार्गः उत्पन्नः इति पाश्चात्यपण्डितैरनुमीयते परंतु स्वामिना तत्रत्यपण्डितैः सह वादं कृत्वा वैदिकमार्गः न प्रकृतिपूजायाः परिणामः अपि तु 'एकं सद्विप्रा बहुधा वदन्ति' इत्याकारकं ज्ञानं तेषां वैदिकऋषीणामादित एवासीत् इति सप्रमाणं साधितम् ॥ ५५ ॥

स्तुतवान् स इहत्यसंस्कृतिर्नियतं पश्चिमखण्डमण्डनम् ।
चिरशान्तिकरं परं भवेच्छ्रुतिवर्त्मेति च निर्णयं ययौ ॥ ५६ ॥

स्तुतवानिति । इहत्यसंस्कृतिः फ्रेंचसंस्कृतिः नियतं निश्चयेन पश्चिमखण्डमण्डनम् यूरोपस्य इतरदेशेषु विद्यमानायाः आधुनिकसंस्कृतेराधारभूता इति फ्रांसदेशीयां संस्कृतिं स्तुतवान् परं स एतमपि निर्णयं सिद्धान्तं ययौ आप यत् जगति चिरशान्तिकरं किमपि वर्त्म स्याद्यदि तत् श्रुतिवर्त्मैव वेदविहितः वेदान्तमार्ग एवेति ॥ ५६ ॥

उपरिद्युतिरस्ति पश्चिमा परमन्तस्तलमापदन्वितम् ।
बहिरश्रुयुतं नु भारतं परमानन्दभृतान्तरं पुनः ॥ ५७ ॥

उपरिद्युतिरिति । पश्चिमा दिक् केवलं उपरि एव द्युतिः चाकचिक्यं यस्याः एतादृशी विद्यते परं तस्याः पश्चिमायाः दिशः अन्तस्तलं आन्तरं आपदन्वितम् व्याकुलतायुक्तमेव । एतद्विरोधे भारतं तु बाह्यतः अश्रुयुतं दुःखपूर्णं दृश्यते परं आनन्देन आध्यात्मिकानन्देन भृतं आन्तरं हृदयं यस्यैतादृशं विद्यते अत एव भारतं जगतो गुरुपदमर्हति ॥ ५७ ॥

प्रत्यङ्महाद्वीपविभिन्नभूषु भ्रमन्नसावीक्षितवान् यतीन्द्रः ।
अश्वत्थलोकाः प्रधनप्रधाना ज्वालामुखीशाचलश्रृङ्गसंस्थाः ॥ ५८ ॥

प्रत्यङिति । प्रत्यङ्महाद्वीपविभिन्नभूषु विभिन्नपाश्चात्यदेशेषु भ्रमन् असौ यतीन्द्रः वीक्षितवान् दृष्टवान्—किम् ? अश्वत्थलोका शान्तेः स्थाने प्रधनं युद्धमेव प्रधानकार्यं येषामेतादृशाः अत एव कस्यचित् ज्वालामुखपर्वतस्य उच्चश्रृङ्गे स्थिता येषामेतादृशा सन्ति कदा यूरोपदेशो युद्धाग्निः प्रज्वलितो भवति इति न निश्चितं न पश्चिमायां सामाजिक-जीवन उपरि अट्टहासात्मकं दृश्यते परंतु तदन्तरे विद्यते प्रच्छन्नो दुःखानुभव इति स्वामी निवेदितामुक्तवान् ॥ ५८ ॥

यूरेशियायुगलसंस्कृतिसंगमेन
रक्षा परस्परकलेर्भविता प्रतीच्याः ।
इत्थं स निश्चितमतिः क्षितिशान्तिदूतो
हंगारियास्फलगतेन पथा प्रतस्थे ॥ ५९ ॥

यूरेशियेति । यूरेशिया यूरोपखण्डं तथा एशियाखण्डमित्युभयमपि मिलित्वा 'यूरेशिया' इति कथ्यते एतदुभयखण्डसंस्कृतिसंगमेन प्रतीच्या दिशः परस्परकलेः अन्योन्यकलहात् रक्षा भविता भविष्यति इत्थं निश्चितमतिः मनसि स्थापितसिद्धान्तः क्षितेः संसारस्य शान्तिदूतः हंगारि—बाल्कन—( रूमानिया बलगारिया-तुर्कीत्यादि ) गतेन मार्गेण स्वमातृभूमिं प्रति प्रतस्थे श्रीरोम्योरोलानामकफ्रेंचपण्डितेन 'विवेकानन्दजीवन'नाम्नि पुस्तके उक्तम् स्वामिना स्वशरीरं भारते चितोपरि स्थापनार्थमेवानीतम् इति ॥ ५९ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये ।
कारागारगतेन षोडशशरद्यानन्दहेतौ महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गो गिरीन्दुर्गतः ॥ ६० ॥

इति श्रीस्वामित्र्यम्बकसूरिविरचिते विवेकानन्दचरिते नाम महाकाव्ये
पुनर्भ्रमणं नाम सप्तदश सर्गः ॥ १७ ॥

लोकमिति । लोकमित्यादि धर्मप्रधानाश्रये इत्यन्तं पूर्ववत् षोडशवर्षवयसि स्वदेशी-स्वराज्यान्दोलनसमये ( १९०९-१० ) कारागारगतेन ( इंग्लन्दविरुद्धप्रचारकारणात् ) आनन्दहेतौ विवेकचरिते महाकाव्ये गिरीन्दुः सप्तदश सर्गः समाप्तः ॥

इति विवेकचरितमहाकाव्यटीकायां 'विवेकदीपाख्यायां'
सप्तदशः सर्गः ॥ १७ ॥



# अथाष्टादशः सर्गः

व्यग्रेषु वेलूरमठस्थितानां मनस्सु तत्स्वागतयोजनार्थम् ।
व्यग्रः परं सेवियरस्य मृत्योर्मायावतीं गन्तुमसौ प्रवृत्तः ॥ १ ॥

व्यग्रेष्विति । वेलूरमठस्थितानां कार्यकर्तॄणां मनस्सु तत्स्वागतयोजनार्थम् स्वामिनः स्वागतस्य आयोजनार्थं व्यग्रेषु व्यासक्तेषु सत्सु 'व्यग्रो व्यासक्त आकुलः' इत्यमरः । असौ विवेकानन्दः सेवियरस्य अल्मोडास्थस्वामिशिष्यस्य मृत्योः वार्ताश्रवणेन व्यग्रः आकुलः सन् मायावतीं गन्तुं प्रवृत्तः । अस्मिन्सर्गे उपजातिवृत्तम् ॥ १ ॥

हिमाचले शीतऋतौ नितान्तं तुषारपातान्तरवातवृष्टौ ।
शिवं सदानन्दयतिं गृहीत्वा जगाम सेवीयरसंश्रये सः ॥ २ ॥

हिमाचले इति । शीतऋतौ हिमाचले तुषारपात अन्तरे यस्या एतादृश्यां वातवृष्टौ हिमपातयुक्तवातायां वृष्टौ शिवं स्वामिशिवानन्दं तथा स्वामिसदानन्दं च गृहीत्वा सेवीयरसंश्रयं मायावतीस्थं अद्वैताश्रमं जगाम ॥ २ ॥

देहोऽपि सेवीयरमित्रबन्धोस्तदाश्रमस्यान्तिकमग्निदग्धः ।
पक्षे स्थितस्तद्गृहिणीप्रबोधक्रियः प्रबंधांश्च लिखन्ननेकान् ॥ ३ ॥

देहोपीति । अत्र सेवीयरमित्रबन्धोः पार्थिवदेहः आश्रमस्यान्तिकं समीपमेव अग्निदग्धः अभूत् स्वामी च तस्य सेवीयरस्य धर्मपत्न्याः आश्वासनक्रियापरः विविधविषयकांल्लेखांश्च लिखन् पक्षे पञ्चदशाहपर्यन्तं तत्र स्थितः ॥ ३ ॥

संवीक्ष्य शृङ्गाणि हिमाचलाद्रेस्तदाश्रमाद् ध्यानपरो बभूव ।
मूलेऽत्र वासं पुनराश्रमेऽन्ते कर्तास्म्यहं लेखनकार्यसक्तः ॥ ४ ॥

संवीक्ष्येति । तदा आश्रमात् हिमाचलाद्रेः शृङ्गाणि शिखराणि वीक्ष्य अवलोक्य ध्यानपरः ध्यानासक्तः बभूव अवदीच्च-'अन्तेऽहं अस्मिन्नेवाश्रमे लेखनकार्यसक्तः निवासं कर्तास्मि करिष्यामि' इति ॥ ४ ॥

दिशन्स तत्रत्ययतीन्सतीर्थ्यानद्वैतचिन्तां तुहिनाचलाङ्के ।
अवोचदङ्कानलवर्षपारं गन्तास्मि नो पार्थिवजीवनेऽस्मिन् ॥ ५ ॥

दिशन्स इति । सः यतिः तत्रत्यसतीर्थ्यान्गुरुबन्धून् तुहिनाचलाङ्के हिमाचलस्याश्रमोपत्यकासु अद्वैतसाधनां कर्तुं दिशन् उपदिशन् कदाचित्प्रवचनप्रसङ्गेऽवोचत्-अहं अङ्कानलवर्षपारं अनचत्वारिंशद्वर्षेभ्यः पारं पार्थिवजीवने न गन्तास्मि न गमिष्यामि । तत्पूर्वमेव ममेह लोकयात्रान्तमेष्यतीत्यर्थः ॥ ५ ॥

श्वासामयाक्रान्तकलेवरोऽपि हिमाद्रिनोऽसौ युवकर्मवीरः ।
मायावतीसुन्दरकाननान्तं विहाय वेलूरपदे प्रयातः ॥ ६ ॥

श्वासामयेति । श्वासाख्यामयेन आक्रान्तं कलेवरं यस्यैतादृशोऽपि असौ युवकर्मवीरः

युवा चासौ कर्मवीरश्च हिमाध्वना हिमाच्छादितमार्गेण मायावत्याः सुन्दरकाननप्रदेशं विहाय पुनरपि वेलुडाश्रमं प्रयातः ॥ ६ ॥

रुग्णां तनुं वीक्ष्य निजामुपेक्षाधियाऽब्रवीन्मेऽस्त्यनया न कार्यम् ।
कृतं मया सार्धसहस्रवर्षपर्यन्तमावश्यकमाधिकार्यम् ॥ ७ ॥

रुग्णामिति । निजां स्वकीयां रुग्णां रोगाक्रान्तां तनुं शरीरं वीक्ष्यावलोक्य उपेक्षाधिया अनपेक्षाबुद्ध्या सोऽब्रवीत् अनया पार्थिवतन्वा मम कार्यं प्रयोजनं नास्ति मया तु सार्धसहस्रवर्षपर्यन्तं पञ्चशताधिकसहस्रवर्षीयं आवश्यकं भावि कार्यं भविष्यत्कालकृते यदावश्यकं तत्सर्वमपि विहितम् ॥ ७ ॥

ओजः परं क्षीणमदर्शि तेन मार्गेऽधिकारी किल गौरकायः ।
एनं स्वगर्वादपमन्तुकामो क्रुधारुणेनैव बहिष्कृतोऽभूत् ॥ ८ ॥

ओज इति । परं क्षीणशरीरेणापि तेन स्वकीयं चात्र ओजः अदर्शि प्रदर्शितं यदा मार्गे कश्चित् गौरकायः आंग्लजातीयः पदाधिकारी स्वगर्वात् एनं स्वामिनमपमन्तुकामः तदा क्रोधेन हेतुना आरक्तनयनेन एव पदाधिकारी एव अप्रियवक्तव्यात् बहिष्कृतोऽभूत् ॥ ८ ॥

विवस्वदंशुप्रतिमानभास्वद्भागीरथीनिर्मलतीरवृत्तेः ।
तले द्वितीये विहाराश्रमस्य यतिः कृती दिव्यकान्तिः स्थितोऽभूत् ॥ ९ ॥

विवस्वदिति । विवस्वतः सूर्यस्य अंशूनां किरणानां प्रतिमानैः प्रतिबिम्बैः भास्वती सुवर्णवर्णा या भागीरथी तस्याः निर्मले तीरे वृत्तिः स्थितिर्यस्य आरामस्थाश्रमस्य द्वितीये तले अथ कृती पुण्यवान् दिव्या अलौकिकी कान्तिः यस्य तादृशः यतिः स्थितः अभूत् निवासमकरोत् ॥ ९ ॥

पर्यङ्कवस्त्रासनयष्टिवाद्यादर्शादिसल्लेखनसाधनानि ।
अद्यापि यस्मिन्सुमनोऽर्चितानि दृश्यानि लोकैर्महतादरेण ॥ १० ॥

पर्यङ्केत्यादि । यस्मिन्नाश्रमे स्वामिनः पर्यङ्कः लोहनिर्मितशयनाधारः तेन स्वल्पं पर्यङ्कस्य उपयोगः न कृतः । स तु भूमावेवाथवा साधारणखट्वायामेवाशेत । वस्त्राणि गैरिकाणि, आसनमुपवेशनार्थं ध्यानार्थं वा यष्टिः यतियोग्यो दण्डः, वाद्यानि तानपूरे-त्यादीनि, आदर्शः दर्पणः लेखनसाधनानि सुमनोभिः पुष्पैः अर्चितानि पूजितानि यद्यपि लोकैः महतादरेण दृश्यानि दर्शनीयानि एतानि वस्तूनि तस्य महासमाधेः दिने यथा आसन् तथैव तानि आश्रमे तिष्ठन्ति पश्चात् स्वामिनः तथा रामकृष्णदेवस्य चैवं द्वे चित्रे तत्र स्थापिते अभूताम् ॥ १० ॥

अकृत्रिमा जीवनरीतिरासीदुद्यानकर्मप्रसितस्य तस्य ।
कुरंग-गो सारस-हंस-हंसी-व्याघ्रादिभिः खेलनतत्परस्य ॥ ११ ॥

अकृत्रिमेति । उद्यानकर्मप्रसितस्य उपवनकार्यासक्तस्य तस्य स्वामिनः जीवनरीतिः अकृत्रिमा स्वाभाविकी आसीत्, कुरंग हरिण गौ धेनु सारस हंस हंसी सवत्सिका अजा व्याघ्र श्वा इत्यादिप्रियपशुभिः सार्धं खेलनतत्परस्य तस्य स्वामिनः इति स्वामि-विशेषणम् । एते पशुपक्षिणः स्वामिनः अतिप्रिया आसन् । हंसी (छागी) दोहनात्पूर्वं स तस्याः अनुज्ञां जग्राह । व्याघ्र श्वापि तेन सह भ्रमणानन्तरं स्नानार्थं गतः आसीत् ॥ ११ ॥

कठोरमासीदनुशासनं यत्रश्रमे संयमिनो भयेन।
यतेरुषःकालत एव सर्वे ध्यानार्चनाधीतिषु दत्तचित्ताः ॥ १२ ॥

कठोरमिति। तस्य वेलूराश्रमे अनुशासनमपि नियमबद्धजीवनमपि कठोरं निष्ठुरं आसीत् यत् यस्मात् नवाश्रमे संयमिनः यतेः स्वामिनः भयेन उषःकालत एव अरुणोदयात्पूर्वतः एव सर्वे यतिच्छात्राः ध्याने अर्चने अध्ययने च दत्तचित्ताः सावधानाः आसन्। सः प्रातः चतुर्वादनसमये उत्तस्थौ योग्यसमये घण्टावादनं अजायत सर्वे ध्यानमग्ना अभूवन् स्वामिना 'शिव' 'शिव' इत्युक्ते ध्यानसमाप्तिरजायत ॥ १२ ॥

ऊचेऽप्ययं ब्रह्म कुतोऽस्ति मृग्यं चेत्सर्वगे तन्निखिलापरोक्षम्।
संदृश्यतेऽशङ्कमदो विशुद्धं यथा करस्थामलकं फलं स्यात् ॥ १३ ॥

ऊचे इति। अयं स्वामी तान् नवशिक्षितान् कार्यकर्तृन् ऊचे उक्तवान्–अये! यदि ब्रह्म सर्वगं सर्वत्रैवावस्थितं निखिलापरोक्षं सर्वस्यापि प्रत्यक्षं अशङ्कं निःसंदिग्धं अदः अंगुल्या निर्दिश्यमानमिव विशुद्धं निर्मलं करतलगतामलकफलवत् दृश्यते अपरोक्षतयानुभूयते तर्हि तादृशं ब्रह्म अन्यत्र कुत्र मृग्यमन्वेषणीयम् न कुत्राप्यन्वेष्यं सत् गले मुक्ताहार इव सर्वस्यापि गोचरम् ॥ १३ ॥

निशम्यतेऽपि क्षणकालमासन् स्तब्धीभवन्तो यतिदत्तनेत्राः।
सचेतनानेवमिमान् प्रयातुं तत्प्रार्थनामन्दिरमादिदेश ॥ १४ ॥

निशम्येति। तेऽपि युवयतयः क्षणकालपर्यन्तं यतिदत्तनेत्राः स्तब्धीभवन्त इव पाषाणसदृशाः तूष्णीं स्थिताः। अथैवं सचेतनान् तेषां यथाकालं प्रार्थनामन्दिरं प्रयातुं गन्तुमादिदेश ॥ १४ ॥

निरीक्षितं तेन नवा युवानो दिवानिशं कार्यरता न वा ते।
सदाश्रमश्चायमदृश्यतान्तर्बहिः परेशामलवृत्तिपूर्णः ॥ १५ ॥

निरीक्षितमिति। इमे नवा युवानः तत्रत्यनिवासिनः यतयः दिवानिशं अष्टप्रहरपर्यन्तमपि स्वस्वकर्मसु रता न वा सावधानतया निरीक्षितवान् सूक्ष्मेक्षिकया अवलोकितवान्। सदा निरन्तरमयमाश्रमश्च अन्तः बहिश्च परेशामलवृत्तिपूर्णः सर्वत्र लब्धेश्वरसत्ताक इव अदृश्यत ॥ १५ ॥

तस्येक्षुमेहः क्रमशस्तदानीं जग्राह रूपं सलिलोदरस्य।
चिकित्सकोक्तेस्त्रिरहानि सप्त गृहीतवान्नैष जलस्य बिन्दुम् ॥ १६ ॥

तस्येति। तस्य स्वामिनः इक्षुमेहः मधुमेहाभिधः आमयः तदानीं क्रमशः सलिलोदरस्य रूपं जग्राह गृहीतवान्। मधुमेहः जलोदरे परिणतः अभूदित्यर्थः। अस्मिन्नवसरे चिकित्सकानां वचनात् त्रिःसप्त दिनानि एष जलस्य एकं बिन्दुमपि न स्वीकृतवान् ॥ १६ ॥

'पिधानमास्ते मनसः शरीरं यच्चेतसा दिष्टमिदं विधत्ते।
न चिन्तये जीवनपानवार्तां कर्तुं विवेकः सकलं समर्थः' ॥ १७ ॥

पिधानमिति। सोऽब्रवीत्–शरीरं कलेवरं केवलं मनसः अभ्यन्तरस्थितस्य मनसः पिधानमावरणमास्ते यदेव अभ्यन्तरगतेन मनसा दिष्टं आदिष्टं भवेत् तदेवेदमावरणात्मकं

कलेवरं विधत्ते करोति। अहं तु चिकित्सकवचनानुसारं जीवनयानवार्तामपि अध्यात्म-कथामपि न चिन्तये न विचारयामि सत्यम् विवेक! वयं विवेकानन्दः सक्षमेव त्वं समर्थः। अथ च विवेक- सदसद्विचार- योग्यतम सर्वमेव कर्तुमर्हन्द् ॥ १७ ॥

नासौ प्रथानां कृतवानुपेक्षामद्वैतभावाहितमानसोऽपि ।
अपूपुजत्स प्रतिमासु दुर्गां-श्रीमहासेनगणाधिनाथान् ॥ १८ ॥

नासाविति। अद्वैतभावाहितमानस अपि अद्वैतविचारपरिपूरितान्तःकरणोऽपि असौ स्वामी प्रथाना लोकव्यवहाराणामुपेक्षां नैवाकरोत्। यत आसे पूजोत्सवे सः प्रतिमासु दुर्गाम् गिरम् महासरस्वतीम्, श्रियम् महालक्ष्मीम् महासेन मयूरवाहनं कार्तिकेय तथा गणाधिनायम् श्रीगणेशं च अपूपुजत पूजयामास ॥ १८ ॥

मठे यतिर्भोजयति स्म तुष्टस्त्रयं दिनानां शतशो दरिद्रान् ।
तेष्वेव नारायणनित्यवासं विभावयामास यथार्थतोऽसौ ॥ १९ ॥

मठे इति। तस्मिन्मठे पूजोत्सवे यतिः तुष्टः सन् दिनानां त्रयं दिनत्रयपर्यन्तमित्यर्थः। शतशः परःशतान् दरिद्रान् भोजयामास। यतः असौ यतिः तेषु दरिद्रेषु एव नारायणस्य भगवतः नित्यवास यथार्थतः विभावयामास चिन्तयामास अहं दरिद्रः दरिद्रा एव मम बान्धवाः तेषामेव सेवा मम कर्तव्यमिति नित्यं स उक्तवान् ॥ १९ ॥

शूनाग्निकस्तं क्षणमीक्षमाणो वातायनात्सेवनलग्नशिष्यान् ।
अजस्रमस्राकुलितेक्षणान्तानाश्वासयच्छान्तमतिर्यतीशः ॥ २० ॥

शूनाग्निक इति। शूनाग्निकः सन्तोषपरः स क्षणं महोत्सवं वातायनादेव स्वनिवास-स्थानस्य गवाक्षादेव ईक्षमाणः अवलोकयन् अजस्रं स्वामिनः आरोग्यचिन्तया अस्राकुलि-तेक्षणान्तान् साश्रुनयनान् स्वशरीरसेवासक्तशिष्ययतीन् शान्ता मतिर्मानसं यस्यैतादृशः यतीन्द्रः आश्वासयामास असान्त्वयत् ॥ २० ॥

वेलूरवासोऽपि गतप्रसङ्गान् संस्मारितोऽभूदुपमानशून्यान् ।
सर्वस्वदानोद्यतदक्षिणेशाशिक्षागुरोः सच्चरणान्तिकस्थः ॥ २१ ॥

वेलूरवास इति। वेलूरमठे निवासो यस्यैतादृशोऽपि स स्वामी उपमानशून्यानिरुप-मान् गतप्रसङ्गान् अतीतघटनाः दक्षिणेश्वरे घटिता इत्यर्थः संस्मारितः स्मरणविषयीकारि-तोऽभूत्। यत सर्वस्वस्य दाने उद्यतः तत्परः यः दक्षिणेश्वरस्थितशिक्षागुरुः परमहंसः तस्य सतो पवित्रयोः चरणयोरन्तिकस्थः स पूर्वमभूत् अत एव तत्र घटितप्रसङ्गान् अस्मार्षीत् ॥ २१ ॥

ओकाकुराख्यः श्रुतदर्शनज्ञो जापानतो बौद्धमठेश्वरेण ।
सहागतो, धर्मसभां भविज्ञां चागन्तुमभ्यर्थितवान् यतीन्द्रम् ॥ २२ ॥

ओकाकुराख्य इति। अथ जापानतः जापानदेशात् श्रुतदर्शनज्ञः विख्यातदार्शनिकः कलामिज्ञश्च ओकाकुराख्यः तत्रस्थेन 'रेवरेंड ओका'नामकेन केनचित् बौद्धमठेश्वरेण सह वेलूरमागत्य तत्र जापानदेशे भविज्ञां भविष्यन्तीं धर्मसभामागन्तुं यतीन्द्रमभ्यर्थि-तवांश्च ॥ २२ ॥

ऊचे यतिर्दार्शनिकं विलोक्य प्रमोदितो विस्मृतदेहबाधः ।
आवामुभौ बन्धुसमाविहस्थावन्तद्वयात्सम्मिलितौ रसायाः ॥ २३ ॥

ऊच इति । तं ओकाकुराभिधं दार्शनिकं विलोक्य यतिः तमूचे उक्तवान् । कीदृशः प्रमोदित अत एव विस्मृता देहबाधा आमयदुःखं येन सः किमुक्तवान् आवामुभावपि इहस्थौ रसायाः पृथिव्या अन्तद्वयात् द्वयोरप्यन्तयोरित्यर्थः । आगतौ बन्धुसमौ परस्पर-भ्रातृतुल्यौ स्वः इति ॥ २३ ॥

ओकाकुराप्रार्थनयोद्यतोऽभूद् बुधो यतिर्बोधगयां प्रयातुम् ।
दिनानि कान्यप्युपरोधतो मे विश्रामलाभोऽयमिदं विचिन्त्य ॥ २४ ॥

ओकाकुरेति । बुधो यतिः ओकाकुराप्रार्थनया दर्शनार्थं बोधगयां प्रयातुं उद्यतः तत्परः अभूत्, किं विचिन्त्य—कान्यपि दिनानि कतिचिद्दिनपर्यन्तमपि मे मम उपरोधतः शारीरव्याधिस्वरूपविघ्नतः अयं विश्रामलाभः एव इदं इत्थं विचिन्त्य बोधगयां गन्तुं प्रवृत्तः ॥ २४ ॥

उभौ यतेर्जन्मदिनेऽन्तिमे तौ समागतौ बोधगयां पवित्राम् ।
ततः प्रतस्थे प्रथितां स काशीं कर्ताऽत्र सेवाश्रमसूत्रपातम् ॥ २५ ॥

उभाविति । उभौ स्वामी तथा जापानीयदार्शनिकः द्वावपि स्वामिनः अन्तिमे जन्म-दिने पवित्रां निर्मलां बोधगयां समागतौ । ततश्च बोधगयातः स स्वामी प्रथितां प्रसिद्धां काशीं वाराणसीं तत्र सेवाश्रमस्य सूत्रपातं कर्ता करिष्यन् प्रतस्थे प्रस्थितः ॥ तस्य जन्म-दिनं जनवरीमासस्य द्वादशदिनांके पतति निर्वाणदिनं च जुलाई १९०२ चतुर्थतारिकाया-मासीत् । अतः तस्य अन्तिमजन्मदिने स बोधगयां गतः ॥ २५ ॥

उत्थानचिन्ता किल मातृभूमेरहर्निशं तस्य हृदि स्थिताऽभूत् ।
समर्पितं सर्वमनेन तस्यै बन्धूंस्तदर्थं शतशो दिदेश ॥ २६ ॥

उत्थानचिन्तेति । मातृभूमेः भारतस्य उत्थानचिन्ता उन्नतेः जागरणस्य चिन्ता व्याकुलता तस्य हृदि निरन्तरं हृदये स्थिता अभूत् । अनेन स्वामिना स्वकीयं सर्वमपि तस्यै मातृभूम्यै समर्पितं वितीर्णम् तदनुसारं च शतशः बन्धून् समादिदेश आदिष्टवान् ॥ २६ ॥

तदेवाह—

सन्त्यज्य देवानखिलान् भवद्भिः समाजदेवः सततं निषेव्यः ।
अशिक्षितो यावदसौ दरिद्रो भवेत् किमर्थेतरदेवपूजा ॥ २७ ॥

सन्त्यज्येति । भवद्भिः इतरान् सर्वान् देवान् सन्त्यज्य समाजदेव एव सेवनीयः पूजनीयः यावत्कालपर्यन्तं असौ दरिद्रः समाजः अशिक्षितः ज्ञानरहितश्च तावद् युष्मत्कृता इतरदेवपूजा किमर्था किंप्रयोजना व्यर्थैव सेति भावः ॥ २७ ॥

मठोऽथ सेवाश्रम इत्यमस्मिन् शास्त्राद्वयस्याद्वयभावनाङ्का ।
विश्वश्रुतास्तेऽश्रुतपूर्वसेवा देवस्य या मानववृन्दमूर्तेः ॥ २८ ॥

मठोऽथेति । अस्मिन् आश्रमे मठः अथ सेवाश्रम इत्थं शास्त्राद्वयस्य अद्वयभावनांका

अद्वैतविचारलग्ना या मानववृन्दमूर्तजनतारूपस्य देवस्य भगवतः अश्रुतपूर्वा पूर्वं कदापि न श्रुता सेवा पूजामानेन क्रियमाणा विश्रुता निषमिद्धा भाति ॥ २८ ॥

प्राणान्नविद्यानुभयधर्मदानैः शाखाप्रशाखाभिरियं विराजन् ।
चिराय लोकं किल सेवमाना मानं यशश्चाप्यतुलं लभेत ॥ २९ ॥

प्राणान्नेत्यादि । अथ साश्रम प्राणदानम्, अन्नदानम्, विद्यादानम्, धर्मदानं च एतादृशैः चतुर्विधदानैः स्वकीयशाखाप्रशाखाभिः अनाथाश्रम चिराय चिरकालपर्यन्तं लोकसमूहं विराजं सेवमाना मानं सम्मान अतुल यशश्च किल ध्रुव लभेत प्राप्नुयात् ॥ २९ ॥

मयानुभूतं निजजीवनेऽस्मिन्निर्व्याजमन्तःकरणं नराणाम् ।
सद्भावना शाश्वतिकं च हार्दं जेतुं जगत् सर्वमलं ध्रुवं स्यात् ॥ ३० ॥

मयानुभूतमिति । मया अस्मिन्निजजीवने स्वकीयजीवनयात्रायां अनुभूतम्—किम् ! नराणां निर्व्याजं निष्कपटं अन्तःकरणं सद्भावना पवित्रविचारः शाश्वतिकं चिरस्थायि हार्दं प्रेम तत् ध्रुवं सर्वमपि जगत् जेतुमलं समर्थं स्यात् ॥ ३० ॥

एकोऽपि युक्तस्त्रिगुणैरमीभिः सहस्रशोऽपि च्छलनापराणाम् ।
नृणां पशूनामपवित्रमर्थं भवे भवेन्नाशयितुं समर्थः ॥ ३१ ॥

एकोऽपीति । एकोऽपि मनुष्यः अमीभिः त्रिभिर्गुणैः निष्कपटचिन्तनादिभिः युक्तः सहस्रशः छलनापराणां दाम्भिकानां पशूनामिव नृणां अपवित्रमर्थं प्रयोजनं भवेऽस्मिन्संसारे नाशयितुं समर्थः प्रभुर्भवेत् भविता । एकोऽपि शुद्धहृदयो मनुष्य सहस्रशः पापात्म-हृदयानतिक्रामतीति भावः ॥ ३१ ॥

इयेष संस्थापयितुं यतीशः स वेदविद्यालयमेकमग्र्यम् ।
यत्रार्यसंस्कृत्यनुशीलनार्थं गीर्वाणवाणीसुधियो यतेरन् ॥ ३२ ॥

इयेषेति । स यतीशः एकं अग्र्यम् सर्वश्रेष्ठं वेदविद्यालयं स्थापयितुं इयेष अभिलषितवान् यत्र विद्यालये आर्यसंस्कृत्यनुशीलनार्थं प्राचीनार्यसंस्कृतिविषयपठनपाठनार्थं गीर्वाणवाणीसुधियः संस्कृतभाषापण्डिताः यतेरन् प्रयत्नशीला भवेयुः ॥ ३२ ॥

तथैव संस्थां वनितार्थमन्यां निर्मातुकामोऽमरसिन्धुतीरे ।
आदर्शमादर्शयितुं वधूनां श्रीशारदामातुरधीशतायाम् ॥ ३३ ॥

तथैवेति । तथैव स वनितार्थं अन्यामेकां संस्थाममरसिन्धुतीरे भागीरथीतीरे निर्मातु-कामः आसीत् । किमर्थम् श्रीशारदामातुः अधीशतायां अवेक्षणे वधूनां भारतीयस्त्रीणां सन्नमादर्शं पवित्राचरणमार्गं आदर्शयितुं शिक्षितुम् ॥ ३३ ॥

स्नेहः परोऽदर्शि नतेन तेन संन्यालकर्मेषु मठस्य भूमौ ।
सम्पूज्य तान् स्वादनमोदतायां उवाच शिष्यान् परितः स्वकीयान् ॥३४॥

स्नेह इति । नतेन नम्रेण तेन स्वामिना मठस्य भूमौ बेलुरमठभूमौ सन्यालजातीय-कार्मेषु कर्मकरेषु परः श्रेष्ठः स्नेहः प्रेमभावना अदर्शि प्रकाशितः तान् सन्यालकर्मांश्च स्वाद-तमोदतायां स्वादतमोदन इति यस्यां क्रियायामुच्यते एतादृश्यां क्रियायां जायमानायां सत्यां परितः स्थितान् स्वकीयान् शिष्यान् उवाच उक्तवान्—एते सर्वे नारायण-स्वरूपाः अस्मिन्दिने मया साक्षात् नारायण एव पूजितः भोजितश्चेति ॥ ३४ ॥

अशिक्षिता निर्मलमानसाः किं न सन्ति नारायणतुल्यरूपाः।
यतध्वमेषां विपदः समेषां विहाय सर्वं परिहर्तुकामाः ॥ ३५ ॥

अशिक्षिता इति। अशिक्षिताः शिक्षारहिता अपि यदि निर्मलं पवित्रं मानसं मनः येषामेतादृशाः सन्ति तर्हि ते नारायणतुल्यरूपा भगवत्स्वरूपाः न सन्ति किम्? एतेषां समेषां अशिक्षितानां परंतु निर्मलान्तःकरणानां विपदः दुःखानि परिहर्तुकामा विनाशयितुमिच्छवः सर्वमपि कार्यं विहाय परित्यज्य यतध्वम् प्रयत्नं कुरुध्वम् ॥ ३५ ॥

नाहं समीहे तरुमूलवासी निर्माणकार्यं बहुधाऽऽश्रमाणाम्।
युक्तं श्रमाणां बहुमूल्यमेषां न चाकृतज्ञैः प्रतिपादितं चेत् ॥ ३६ ॥

नाहमिति। अहं त्यक्तसर्वस्वः केवलं तरुमूलवासी 'तरुतलमिह तरुतलवासः' इत्युपदेशवाक्यमनुसरन्नस्मि अतः बहुधा आश्रमाणामनेकसंख्याकानामाश्रमानां निर्माणकार्यं न समीहे नेच्छामि यदि एषां श्रमाणां बहुमूल्यं पर्याप्तं मूल्यं अकृतज्ञैः कृतघ्नैः अस्माभिः न प्रतिपादितं न समर्पितम् ॥ ३६ ॥

मृतानिवैतान् वसनान्नपानैर्विहाय भोक्तुं निरपत्रपाः स्मः।
न कोऽप्युपायः किमु तच्छिवार्थे? सहायिकैषां जननि त्वमेधि ॥ ३७ ॥

मृतानिति। वसनान्नपानैर्विना मृतानिवैतान् विहाय परित्यज्य स्वयमेव भोक्तुं वयम् निरपत्रपाः निर्लज्जाः स्मः। तच्छिवार्थं तेषां कल्याणार्थं कोऽपि उपायः नास्ति किम्? हे जननि त्वमेवैतेषां सहायिका भुवि भव ॥ ३७ ॥

घण्टां स्रजो दीपशिखाश्च विधामानं तपो मुक्तिकृते विहाय।
भुवि भ्रमन्तः सुहृदो भवन्तो दरिद्रसेवाप्रसिता भवन्तु ॥ ३८ ॥

घंटामिति। पूजोपकरणरूपां घण्टां स्रजः पुष्पमालाः दीपशिखाः दीपमालिका विधायाः मानं सर्वम् मुक्तिकृते क्रियमाणं तपश्च विहाय परित्यज्य हे सुहृदः भुवि भूतले सर्वत्र भ्रमन्तः भवन्तः दरिद्रसेवाप्रसिता असहायपूजनपराः भवन्तु ॥ ३८ ॥

किमीक्ष्यते नेत्रनिमीलनेन सहस्रशः खिस्तमते विशन्ति।
वयं तु दूरं सरत ब्रुवन्तः स्पर्शं स्वबन्धोः परिहर्तुकामाः ॥ ३९ ॥

किमीक्ष्यत इति। नेत्रनिमीलनेन नेत्रे निमील्य किमीक्ष्यते नेत्रनिमीलितेन तु किमपि न दृश्यते। सहस्रशः जनाः अस्माभिः उपेक्षिताः खिस्तमते विशन्ति। वयं तु आत्मानमेव बहु मन्यमाना एतावदुपेक्षापरा यत्स्वकीयांगच्छेदमपि न विभावयामः। 'यूयं अस्मत्तः दूरमपसरत' इति ब्रुवन्तः स्वस्यैव बन्धोः समानरक्तमांसस्यापि स्पर्शं परिहर्तुकामाः क यास्यामः इति न जानीमः ॥ ३९ ॥

ब्रह्मैव किं नास्त्यधिपिण्डमेकं सैवापि शक्तिश्च परापरेषु।
अंगं तवैकं यदि पक्षघाताक्रान्तं वपुः सर्वमपार्थमेव ॥ ४० ॥

ब्रह्मैवेति। अधिपिण्डं प्रत्येकशरीराभ्यन्तरं एकमेवाद्वितीयं ब्रह्मैव नास्ति किम्? परेषु अपरेषु उच्चावचेषु च सैव एका शक्तिः नास्ति किम्। ब्रह्मशक्तिश्चोभयमपि सर्वत्र समभावेन विद्यमानमास्ते यदि तवांगेषु मध्ये एकमङ्गं हस्तपादादिरूपं पक्षघातरोगेणाक्रान्तं जायेत तर्हि सर्वमेव शरीरं निष्प्रयोजनमेव भवेत् ॥ ४० ॥

समग्रेत्यादि । समग्र घटाकाशम् आस्तिक्यम् च कर्मठजन कर्ममार्गासक्त जन तस्य सीमितबुद्धया । सह विज्ञानभौतिकविचारविशालतया विज्ञानं अन्वेषणादिकं भौतिक विचाराश्च भौतिके घटितविषयकविचाराणां च या विशालता उदारता तस्या कर्मठबुद्धया सह समन्वय सामञ्जस्य कर्तुं अहं एतादृशं हृदय समीहे अभिलषामि यत् अब्धिरिव अगाधं तथा आकाशमिव विशालं च कर्मठबुद्धि विचाराणां विशालता चोभयमपि अस्माकमा-परपकम् । वसन्ततिलक वृत्तम् ॥ ५२ ॥

केचिद् वदन्त्यवनते खिल कारणं नो
व्यर्थं ममत्वमतिपूर्वपरम्परासु ।
ज्ञातं मया परमिदं विपरीतमेव
त्याग पुराणविभवस्य महान् प्रमाद ॥ ५३ ॥

केचिदिति । कश्चिद्विद्वांस अतिपूर्वपरम्परासु व्यर्थं निष्प्रयोजन ममत्वमासक्तिरेव न अस्माकं वर्तमानाया अवनते कारणमिति वदन्ति परन्तु मया तु एतत्सर्वं विपरीतमेव ज्ञात तथ पुराणविभवस्य पुरातनपरम्परासम्पद त्याग महान् प्रमादः पुरातनपरम्परापरि-पालनं कर्तव्यमेव । वसन्ततिलक वृत्तम् ॥ ५३ ॥

जीर्णं वस्त्रमिव त्यजामि सुखतस्तूर्णं स्वकीयं वपु
पूर्णं कर्तुमथापि कार्यमवनौ कार्णं यतिष्ये ध्रुवम् ।
यावद् ब्रह्ममयं समग्रमिति न ज्ञान जगत्या जनै
स्तावद् प्रेरयितु प्रयत्नपरता मन्ये मदीयं तप ॥ ५४ ॥

जीर्णमिति । अह स्वकीय निज वपु शरीरं जीर्णं वस्त्रमिव सुखत आनन्देन त्यक्ष्यामि अथ अवनौ पृथिव्यामिनस्तत कीर्णं मया कार्यं पूर्णं कर्तुं ध्रुव यतिष्ये । शरीरनाशात् आरब्धकार्यनाशः न भवतु अपितु शरीरत्यागानन्तरमपि अवशिष्ट कार्यं पुरत सारयिष्यति इति ध्रुव निश्चितम् । जगत्या जनै यावत्कालपर्यन्त समग्र दृश्यमान ब्रह्ममयमेव इति न ज्ञात तावत् तान् प्रेरयितु प्रयत्नपरता परिश्रमतत्परता एव मदीय तप इति मन्ये । शार्दूल-विक्रीडित वृत्तम् अनुप्रासश्च ॥ ५४ ॥

नय त्वं मामम्ब ! त्वरितमतिदीप्तं परपदं
निशानाथो यस्मिन् द्युमणिरपि खद्योतसदृश ।
वृथा स्वप्नानेतास्तिरय मम लीलान्तसमये
विभिद्येदं दीर्घं निगडमधुना मोचय चिरम् ॥ ५५ ॥

नय त्वमिति । हे अम्ब ! मात मा त्वरित अञ्जसा अतिदीप्त प्रकाशमान परपद स्वकीय दिव्यप्रदेशस्थान नय प्रापय यस्मिन् प्रकाशमाने पदे निशानाथ चन्द्रमा द्युमणि सूर्यश्च खद्योतकीटक इव भात 'न तत्र सूर्यो भाति न चन्द्रतारकम् । तस्य भासा सर्वमिद विभाति' इति वचनात् । मम ऐहिकलीलान्तसमये अन्तिमप्रयाणसमये एतान् वृथा असत्यान् स्वप्नान् तिरय नाशय इद दीर्घं चिरकालस्थित निगड बन्धनशृङ्खलां विभिद्य सुत स्वपुत्र मा मोचय मुक्त विधेहि । शिखरिणीवृत्तम् ॥ ५५ ॥

कदाप्युच्चैर्गच्छन् समयजलधेर्वीचिवशतो
लुठन्नीचैस्तूर्णं तदपि निजधारामनुसरन्।
इतः श्रान्तो मातः क्षणिकसुखदुःखात्मजगत-
स्तथा दूराद् द्रष्टुं परमपरतीरं त्वपरतः ॥ ५६ ॥

कदापीति। समयजलधेः कालसमुद्रस्य वीचिवशतः तरङ्गवशात् अहमस्मिन् समयजलधौ पतितः सन् श्वासवर्षादिभंगवशात् कदापि कस्मिन्नपि समये उच्चैर्गच्छन् कदाचिच्च तूर्णं नीचैः जलपृष्ठादधोभागेऽपि लुठन् तथापि निजधारां येन प्रवाहेण पुरतः सर्तव्यमस्ति तं प्रवाहमनुसरन्ननुगच्छन् सन् हे मातः इतः एकतः क्षणिकसुखदुःखात्मजगतः क्षणभंगुरसंसारभ्रमणात् श्रान्तः क्लान्तः तथा अपरतः केवलं दूरात् परमपरतीरं द्रष्टुमपि श्रान्तः अस्मि केवलं दूरात् द्रष्टुं नाभिलषामि अपितु तदपरोक्षं कर्तुमिच्छामि अतः तत् पदं मां आत्मना सार्धं नय ॥ ५६ ॥

मत्तः परश्चेद्परो विवेकानन्दो विवेकी जगतीह मन्ये।
अनेन किं किं कृतमस्य पूर्णमूल्यांकनं कर्तुमसौ समर्थः ॥ ५७ ॥

मत्त इति। मत्तः मां वर्जयित्वा यदि विवेकशीलः अपरो विवेकानन्दः जगति विद्यते चेत् अनेन मया विवेकानन्देन किं किं कृतं अस्य पूर्णं मूल्याङ्कनं निश्चितमूल्यं कर्तुं असौ अपरः विवेकानन्दः समर्थः। भवेदिति शेषः ॥ ५७ ॥

वेलूरतीर्थेऽक्षिवियद्ग्रहेन्दौ वर्षे मुनेर्मासि दिने तुरीये।
भृगौ निशि ध्यानजपप्रसक्तो महामहाशान्तिमसौ प्रविष्टः ॥ ५८ ॥

वेलूरतीर्थे इति। वेलूरतीर्थे अक्षिवियद्ग्रहेन्दौ वर्षे १९०२ ईशवीये वर्षे मुनेर्मासि सप्तमे जुलाईमासे तुरीये दिने चतुर्थे दिवसे भृगुवासरे निशि सायं ध्यानजपप्रसक्तः करघृताक्षमालः असौ स्वामी विवेकानन्दः प्रकृतमहाकाव्यनायकः महामहाशान्ति परिनिर्वाणं प्रविष्टः तस्य स्वामिनः चितास्थलस्योपर्येव समाधिमन्दिरं निर्मितमास्ते ॥ ५८ ॥

प्रेमानन्देन साकं पथि चलनपरः क्रोशमेकं सुदूरं,
वार्तां कुर्वंश्च सार्धं यतिभिरिह पुनर्वेदविद्यालयस्य।
एकः सायं प्रयातो निजनिलयमयं ध्यानगः साक्षसूत्रः
स्वामी निःश्वस्य दीर्घं गुरुवचनरतो योगशान्तिं प्रविष्टः ॥ ५९ ॥

प्रेमानन्देनेति। तस्मिन्नन्तिमे दिने स्वामी विवेकानन्दः प्रेमानन्दस्वामिना सह एव क्रोशं यावत् सुदूरं मठसमीपमार्गे चलन् गच्छन् यतिभिः सार्धं वेदविद्यालयविषये वार्तां कुर्वन् भाषमाणः, सायंकाले एकः एकाकी निजनिलयं स्वावासस्थानं प्रयातः प्राप्तः, ध्यानगः ध्यानमग्नः साक्षसूत्रः करघृताक्षमालः दीर्घं निःश्वस्य गुरुवचनानुसारं यथा गुरुणा उक्तमासीत् यस्मिन्नेव दिने नरेन्द्रः 'कोऽस्मि' इति वेत्स्यति तस्मिन्नेव दिने सः अस्मिन्संसारे न स्थास्यति इति वचनानुसारं योगशान्ति योगनिद्रां प्रविष्टः ॥ ५९ ॥

लोकं मोहतमोहतं धृतहितालोकं विधातुं क्षमे
विश्वाध्येयगुणे विवेकचरिते धर्मप्रधानाश्रये।
भक्त्या तच्चरणार्पितस्वकृतिनाऽऽदर्शे पवित्रे महा-
काव्ये त्र्यम्बकसूरिणा विरचिते सर्गोऽयमष्टादश ॥ ६० ॥

इति मन्दारकरोपाह्वत्र्यम्बकशर्मविरचित श्रीस्वामिविवेकानन्दचरितमहाकाव्ये
परिनिर्वाण नाम अष्टादश सर्ग ॥१८॥

लोकमिति। लोकमित्यादिधर्मप्रधानाश्रये इत्यन्त प्राग्वत् भक्तिपूर्वक तस्य स्वामिन चरणारविन्दयो अर्पिता स्वस्य कृति महाकाव्यात्मिका येन त्र्यम्बकसूरिणा विरचिते विवेकचरिते आदर्शभूते पवित्रे च महाकाव्येऽयमष्टादश सर्ग समाप्त।

इति मन्दारकरोपाह्वत्र्यम्बकशर्मविरचितायां श्रीविवेकानन्दचरितमहाकाव्यटीकायां
विवेकदीपाख्यायां परिनिर्वाणं नाम अष्टादश सर्ग।

समाप्तश्चाय ग्रन्थ

---

शैलर्तुनिधिचन्द्राब्दे (१९६७)
वसुमासे सवृत्तिकम्।
स्वातन्त्र्यदिवसे (१५ अगस्त) पूर्णं
महाकाव्यमिदं शुभम्॥

---